# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

## विश्वविद्यालयरजतजयन्तीविशेषाङ्कः

[ प्रथमः खण्डः ]

कुलपतिश्रीगौरीनाथशास्त्रि-
प्रणीतोपोद्घातेन समलङ्कृतः

सम्पादकः
**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**
अनुसन्धानसंस्थाननिदेशकः

उप-सम्पादकः
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी




३७ वर्ष
१-४ अङ्काः

वार्षिकं मूल्यम् १० रूप्यकाणि
संयुक्ताङ्कानाम् १० रूप्यकाणि

# विषयानुक्रमणी





# PREFACE

On the occasion of its Silver Jubilee Celebrations the University decided that a special number of Sāraswatī Suṣamā would be brought out. This Research Journal has, however, stepped into the 37th year, which means that it had appeared 12 years before the University came into existence, i. e, in the days of the Government Sanskrit College, Benares. During this period, nearly four decades, the Journal has amply justified its utility by bringing out important articles and brochures from the pen of distinguished scholars all over the country.

I have every reason to believe that this special issue of the Journal will win the approbation of all lovers of Sanskrit learning.

15th March, 1984 GAURINATH SASTRI

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

३७ वर्षः | ज्येष्ठ-भाद्र-मार्गशीर्ष-फाल्गुनपूर्णिमाः, वि० सं० २०३९ | १-४ अङ्काः

# तत्त्वचिन्तामणौ प्रामाण्यवादः

श्रीगौरीनाथशास्त्री
कुलपतिः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀❀❀

अथ जगदेव दुःखपङ्कनिमग्नम् उद्दिधीर्षुरष्टादशविद्यास्थानेषु अभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय ।

---

मङ्गलम्

अनन्ताख्यमपादानं नामं नामं प्रभाह्वयाम् ।
दाक्षिण्यो वैदिको विप्रो गौरीनाथः प्रभासुतः ॥ १ ।

इषु-ख-ग्रहचन्द्राङ्के बिभ्रत्पाशुपतं महः ।
मणिप्रामाण्यवादस्य समीक्षां तनुते मुदा ॥ २ ।

उत्तमफलसम्बन्धविज्ञानमन्तरेण शास्त्राध्ययनेऽप्रवर्तमानानां समीक्षकाणां स्वग्रन्थाध्ययने प्रवर्तनाय निःश्रेयसफलकशास्त्रोपकारकत्वेन तत्त्वचिन्तामणेः फलवत्त्वं सम्बन्धाभिधेये च प्रतिपादयन् प्रतिजानीते **अथ जगदेवेत्यादि**। विना प्रयोजनवत्ताबोधं मन्दानामप्यप्रवृत्तिदर्शनात् प्रेक्षावतां प्रवृत्तौ सफलत्वज्ञानस्य प्रयोजकत्वं सिद्धं भवति ।

**"सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।**
**शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥"**

इत्यभियुक्तोक्त्या तथैव प्रतिपादनात् "प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति प्रथमसूत्रेण सूत्रकारः स्वीयग्रन्थस्य निःश्रेयसफलकत्वं

कथयाम्बभूव। तदभिधेयान्तर्गतप्रमाणतत्त्वस्यात्र तत्त्वचिन्तामणिग्रन्थे सविस्तरं निरूपणादस्य चिन्तामणिग्रन्थस्य सकलशास्त्रोपकारकत्वं शास्त्रैकदेशसम्बन्धाच्छास्त्रकार्यान्तरे मतान्तरविमर्शनादौ च प्रवृत्तेः शास्त्रप्रकरणत्वञ्च बोध्यम्।

तथा च सूत्रप्रतिपाद्यार्थप्रतिपादकत्वेन सूत्रसम्बन्धित्वादस्य ग्रन्थस्य सूत्रप्रयोज्यफलप्रयोजकतया निःश्रेयसफलकत्वं सिद्धं भवतीति ध्येयम्। ग्रन्थादौ सामान्यतोऽप्यभिधेयस्याकथने तदज्ञानात् समीक्षकाणां कदाचिद् ग्रन्थाध्ययनेऽप्रवृत्तिः स्यादित्याशङ्कयाऽभिधेयस्य सामान्यतः कथनं शास्त्रारम्भे ग्रन्थकाराणां नानतिप्रयोजनकमिति भावः। सम्बन्धश्चाभिधेयेन प्रयोजनस्य, प्रयोजनाभिधेयाभ्याञ्च शास्त्रस्य बोध्यः। प्रथमस्तु स्वप्रयोजनज्ञानविषयत्वरूपः, अभिधेयशास्त्रयोः प्रतिपाद्यप्रतिपादकभावरूपः, प्रयोजनशास्त्रयोश्च प्रयोज्यप्रयोजकभावरूपोऽवगन्तव्यः। ग्रन्थेऽनभिहितोऽपि सम्बन्धोऽर्थादवगन्तुं शक्य इत्यलमतिविस्तरेण। 'प्रमाणतत्त्वमत्र विविच्यते' इत्यनेन ग्रन्थेन प्रमाणतत्त्वस्य चिन्तामणिग्रन्थाभिधेयत्वं लभ्यते। प्रधानतया ग्रन्थप्रतिपाद्यस्यैव ग्रन्थाभिधेयत्वेनाभियुक्तैर्व्यवह्रियमाणत्वात्। प्रमाणतत्त्वं विविच्यत इत्यस्य ग्रन्थांशस्य प्रतिज्ञात्मकत्वं बोध्यम्, येन च वाक्येनायमर्थो ग्रन्थकृद्भिर्निरूपयिष्यत इत्येवमाकारकं ज्ञानं विनेयजनानां भवेत्, तदेव वाक्यं प्रतिज्ञात्वेन विद्वत्समाजे प्रसिद्धमास्ते। उत्तरकालीनकर्तव्यत्वप्रकारकबोधानुकूलव्यापारविशेषस्यैव तल्लक्षणत्वात्, प्रमाणतत्त्वं विविच्यत इत्यनेन ग्रन्थेन प्रमाणतत्त्वस्य निरूपणीयत्वं विनेया अनायासेन ज्ञातुमर्हन्तीति तस्य वाक्यस्य प्रतिज्ञारूपत्वं बोध्यम्।

अस्मिन् सूत्रोपकारके चिन्तामणिप्रकरणे सूत्रोक्तानि प्रमेयादितत्त्वानि विहाय प्रमाणतत्त्वमेव कस्मान्निरूपितमित्याशङ्कायामाह—तेष्वपि प्रमाणाधीना सर्वेषां व्यवस्थितिरितीति। प्रमाणव्यतिरिक्तानां सूत्रोक्तप्रमेयादिपञ्चदशपदार्थानां तत्त्वानि प्रमाणेनैव व्यवस्थितानि भवेयुरिति उपजीव्यत्वात् पूजिततमत्वाच्चात्र ग्रन्थे प्रमाणतत्त्वस्य निरूपणीयत्वं बोध्यम्। व्यवस्थितिरितीति पदं हेतौ प्रयुक्तम्। यस्मात् सर्वेषां प्रमेयादिपदार्थानां व्यवस्थितिरिदमित्थमेवेति निर्णयः प्रमाणाधीनैव। तस्मादत्र ग्रन्थे प्रमाणतत्त्वं मया मणिकारेण विविच्यत इति भावार्थः। **तत्र प्रेक्षावदित्यादि**। तत्रेत्यान्वीक्षिक्यां विद्यायामित्यर्थः। सप्तम्या उपादानत्वाख्यं विषयत्वमर्थस्तस्य चाग्रिमेण प्रवृत्तिपदार्थेनान्वयो ज्ञेयः। प्रेक्षावत्प्रवृत्त्यर्थमित्यादावसूत्रयदित्यन्वयि। किमसूत्रयदिति कर्माकाङ्क्षायामाह **प्रमाणादीनामित्यादि**। इदमर्थतः सूत्रग्रहणं न तु पदतस्तस्यान्यादृशस्य पूर्वमुक्तत्वात्। साकाङ्क्षत्वानुकूलो व्यापारः सूत्रणम्। तदेकदेशीभूते साकाङ्क्षत्वे प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगम इतीतिपदोत्तरवर्तिलुप्तद्वितीयार्थवृत्तित्वस्यान्वयो बोध्यः। प्रेक्षावत्प्रवृत्त्यर्थमिति क्रियाविशेषणीभूतपदार्थस्य

प्रेक्षावत्प्रवृत्तिजनकत्वावच्छिन्नस्य पूर्वोक्तव्यापारात्मकधात्वर्थेऽन्वयादान्वीक्षिकीविद्यो-पादानकप्रेक्षावन्निष्ठप्रवृत्तिजनको यः प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगमरूपसूत्र-वृत्तिसाकाङ्क्षत्वानुकूलो व्यापारस्तदनुकूलकृतिमानक्षपाद इत्येवमाकारकः शाब्दबोधो लभ्यत इति भावः। यदि च प्रेक्षावत्प्रवृत्यर्थमिति समस्तपदान्तर्गतप्रवृत्तिपदस्यार्थे, तत्रेति सप्तम्यन्तार्थन्यायशास्त्रोपादानकत्वस्यान्वये सापेक्षत्वेनासामर्थ्येऽसमास आपद्येत तदा तत्रेति सप्तम्या अन्तर्गतत्वमर्थो बोध्यस्तस्य चेतिपदार्थेऽन्वयेनापत्तिः समाधेयेति सर्वं चतुरस्रम्।

प्रयोजनाभिधेयसम्बन्धप्रतिपादानस्याधिक्येनात्र प्रकृत उपयोगादुत्तरवर्तिनोऽपि तत्र प्रेक्षावत्प्रवृत्यर्थमित्याद्यंशस्य प्रथमं व्याख्या विहिता। इदानीं पूर्ववर्तिनोऽथ जगदेवेत्याद्यंशस्य व्याख्या प्रस्तूयते।

ननु चिन्तामणिग्रन्थे प्रमाणतत्त्वस्यैव विवेचनीयत्वेन गौतमस्य महर्षेस्तत्प्रति-पादकविद्याप्रवक्तृत्वकथनात्मकोऽथ जगदेवेत्याद्यंशोऽर्थान्तरताकवलित इति चेत्, न, तस्यापि मणिग्रन्थाध्ययनोपादानकप्रेक्षावत्प्रवृत्तौ परम्परयोपयोगात्। **अथेति**। अनन्तर-मिति तदर्थः। अस्य च तादात्म्येन विविच्यत इति धात्वर्थे विवेचनायामन्वयः। आनन्तर्यस्य नियमेन प्रतियोगिसापेक्षत्वात् पूर्वानुष्ठितं मङ्गलमेवाध्याहृतमङ्गलादिपदो-पस्थापितं प्रतियोगितयाऽत्रान्वियात्। पदानुपस्थापितार्थस्य शाब्दबोधेऽभानान्मङ्ग-लादिपदमत्रावश्यमध्याहर्तव्यम्।

आलोकप्रकाशकारादयस्तु मङ्गलवादस्यापि चिन्तामणिग्रन्थान्तर्गतत्वं स्वीकुर्वाणा मङ्गलसफलत्वव्यवस्थापनस्यैव प्रतियोगितयाऽऽनन्तर्येऽन्वयमाहुः। 'अथ' पदसम्बलितं मूलपाठमभ्युपगच्छन्नपि दीधितिकारस्तस्य न किमपि व्याख्यानं कृतवान्, मथुरानाथेना-प्यत्रालोककारादिप्रदर्शित एव पन्था अनुसृतः।

यद्येवमुच्येत—नमस्काराद्यात्मकमङ्गलानन्तर्यस्य वाचिकमङ्गलस्थले ग्रन्थे सन्निवेशादेव लाभसम्भवेनानन्यतात्पर्यकस्य मङ्गलानन्तर्यमात्रस्यार्नातप्रयोजनकत्वेन च तन्मात्रबोधनाय प्रयुक्तस्यार्थशब्दस्यापि निष्प्रयोजनकत्वमेव स्यादिति, तदत्रार्थ-शब्दस्यारम्भार्थकत्वमेव ग्राह्यम्, तस्य च आरब्धत्वस्य धात्वर्थे विवेचनायामन्वयात् प्रमाणतत्त्वविषयकविवेचना आरभ्यत इत्येवमर्थे पर्यवसानं बोध्यम्।

न चैवमारम्भमात्रतात्पर्यकस्यापि शब्दविशेषस्य प्रयोगोऽनतिप्रयोजनक एवेति वाच्यम्, ग्रन्थान्तरसाङ्कर्यस्थले प्रकृतग्रन्थस्य पूर्वावधिनिर्णये सहायकत्वेन वाचनिका-रम्भज्ञानस्य सप्रयोजनत्वात्, अन्यथा **'अथ शब्दानुशासनम्, अथ 'योगानुशासनम्'** इत्यादिवत्सौत्राथशब्दस्याप्यारम्भार्थकस्य निष्प्रयोजनकत्वापत्तेः।

वस्तुतस्तु मूलकारीयस्वग्रन्थे अथ तत्त्वचिन्तामणिः । जगदेव दुःखपङ्के निमग्न- मुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय इत्येवमेव पाठ आसीत् । पश्चाच्चानुलिखने परैस्तत्त्वचिन्तामणिपदस्य ग्रन्थनामत्वेन पत्रपार्श्वे देशे सन्निवेशितत्वादनन्तरमथ जगदेवेति पाठस्य विपरिणामो जातः । अस्मिन् पक्षे आरम्भ एवाथशब्दस्यार्थस्तस्य च तत्त्वचिन्तामणावन्वयात्तत्त्वचिन्तामणिनामको ग्रन्थः समारभ्यत इत्यन्वयबोधोऽथशब्दानुशासनमथयोगानुशासनमित्यादौ शब्दा- नुशासनं नाम शास्त्रं योगानुशासनं नाम वा शास्त्रमारभ्यत इत्यन्वयबोध इव स्यात्[1] । तत्रैवात्राप्यारम्भकथनं नानतिप्रयोजनकमिति ध्येयम् ।

मङ्गलवादस्य तत्त्वचिन्तामण्यन्तर्गतत्वपक्षे त्वानन्तर्यमेवाथपदार्थः स्यान्नारम्भ- स्तस्य प्रमाणतत्त्वविवेचनायामन्वयसम्भवेऽपि तद्बोधस्य निष्प्रयोजनत्वात्, प्रमाण- तत्त्वविवेकतः पूर्वमेव शास्त्रस्यारब्धत्वेन तदंशस्य तत्त्वचिन्तामणिग्रन्थपूर्वावधित्वा- सम्भवात् । आनन्तर्ये चात्रत्याथपदार्थे मङ्गलस्य सफलत्वनिरूपणं प्रतियोगितया- न्वियात् । **'मङ्गलवादः समाप्तः'** इति पूर्वकथितमङ्गलवादपदस्यैव मङ्गलनिष्ठसफलत्व- निरूपणात्मकोऽर्थो बोध्यः । तादृशार्थस्य पदानुपस्थाप्यत्वेऽथपदोपस्थाप्यानन्तर्यघटक- ध्वंसपदार्थप्रतियोगितयान्वयासम्भवात् । मङ्गलवादपदार्थान्वितानन्तर्यस्य चाथपदार्थस्य **'विविच्यते'** इति धात्वर्थे विवेचनायामन्वयान्मणिकारप्रयोज्यं यन्मङ्गलनिष्ठसफलत्व- निरूपणध्वंसाधिकरणकालवृत्तिविवेचनं तद्विषयः प्रमाणतत्त्वमित्येवमन्वयबोधो लभ्यते । प्रमाणतत्त्वविवेचने मङ्गलसफलत्वनिरूपणानन्तर्यकथनञ्च प्रमाणतत्त्वे मङ्गल- सफलत्वस्य सङ्गतिसूचनाय, तेन चोभयोः परिच्छेदयोरेकग्रन्थान्तर्गतत्वं प्राप्तं भवति । सङ्गतिश्चात्रावसरात्मको बोध्यः । विरोधिजिज्ञासानिवृत्त्युपलक्षितं वक्तव्यत्वमेवावसरः ।

**'गुणातीतोऽपीशः'** इत्यादिभिमङ्गलकरणानन्तरं शिष्याणां मङ्गलस्य सफलत्वे जिज्ञासा जाता । तया च शिष्यजिज्ञासया प्रमाणतत्त्वनिरूपणं ग्रन्थकाराणां प्रतिरुद्धमिति तस्या विरोधिजिज्ञासाया मङ्गलस्य सफलत्वनिरूपणेन विषयसिद्ध्या निवृत्तावनन्तरं किं प्रमाणतत्त्वमित्याकारिकया शिष्यजिज्ञासया प्रमाणतत्त्वं विवेचितं मणिकृता । अनन्तरवक्तव्यत्वसम्बन्धेन स्मृते प्रमाणतत्त्वे इष्टसाधनताज्ञानं शिष्य- जिज्ञासायां कारणमित्यनन्तराभिधानप्रयोजकजिज्ञासाजनकस्मरणप्रयोजकसम्बन्धत्वस्य वक्तव्यत्वे सत्त्वात् तस्य सङ्गतित्वमिति ध्येयम् ।

**जगदेवेत्यादि** । यस्माज्जगद्दुःखपङ्कनिमग्नमेव तस्मात्तदुद्दिधीर्षुः परम- कारुणिको मुनिरान्वीक्षिकीं प्रणिनायेत्येवमन्वयो बोध्यः । अत्र जगत्पदं मिथ्याज्ञान-

---

१. अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते । शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् । (महाभाष्यपस्पशाह्निकम्—पृ० ३)

जन्यवासनाविशिष्टजीवात्मसमूहार्थकम्, तत्र चावच्छेदकावच्छेदेन दुःखपङ्कनिमग्नपदार्थस्याभेदेन विधेयतयान्वयो बोध्यः, अयोगव्यवच्छेदार्थकैवकारसन्निधानादेव विधेयस्यावच्छेदावच्छेदेनान्वयो लभ्यते। **उद्दिधीर्षुरिति**। अत्र दुःखपङ्कनिमग्नरूपविधेयांशस्य यदुद्देश्यं तदेव जगत्। मिथ्याज्ञानजन्यवासनाविशिष्टसमूहात्मकं तत्पदस्यार्थः। तादृशं समूहमुद्दिधीर्षुर्मुनिरान्वीक्षिकीं प्रणिनायेत्यर्थः। उद्दिधीर्षुरित्यत्र चरमदुःखध्वंसानुकूलो व्यापारो धात्वर्थः, तादृशव्यापारविषयिणीच्छा च सन्प्रत्ययस्यार्थः। तत्र धात्वर्थतावच्छेदकीभूतस्य व्यापारजन्यचरमदुःखध्वंसात्मकफलस्य मिथ्याज्ञानजन्यवासनाविशिष्टजनसमूहात्मकजगत्पदार्थे सत्त्वात्तस्योद्दिधीर्षाकर्मत्वं बोध्यम्।

न चेदानीमपि तादृशजगत्पदार्थान्तर्गतानामनेकेषां चरमदुःखध्वंसानाधारत्वाद्धात्वर्थतावच्छेकीभूतचरमदुःखध्वंसात्मकफलवत्त्वाभावाज्जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुः परमकारुणिको मुनिरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं प्रणिनायेति वाक्यमयोग्यमिति वाच्यम्, इच्छार्थकप्रत्ययसमभिव्याहारस्थले धात्वर्थतावच्छेदकफलवत्त्वेनाभिप्रेतत्वस्यैव कर्मविहितविभक्त्यर्थत्वात्। एवञ्चामुक्तात्मनां तादृशफलानाधारत्वेऽपि तादृशफलवत्त्वेनाभिप्रेतत्वादुक्तवाक्यस्य नायोग्यत्वमिति ध्येयम्।

ननु लाघवात् प्रसिद्धेश्च जगत्पदमशेषार्थकमेवास्तु। न चैवं सति जगत्पदार्थान्तर्गते भगवति मुक्तात्मसु च दुःखपङ्कनिमग्नत्वाभावेन तद्विशेषणमयोग्यं स्यात्। तेषामप्युद्दिधीर्षोद्देश्यत्वे मुनीच्छाया विसंवादश्चापद्येतेति वाच्यम्, अशेषत्वसामानाधिकरण्येनैव दुःखपङ्कनिमग्नत्वस्य विशेषणत्वे तादृशविशेषणविशिष्टस्यैव जगतो मुन्युद्दिधीर्षोद्देश्यत्वे च वाक्यतात्पर्यादिति चेत्, न, दुःखपङ्कनिमग्नत्वस्योद्दिधीर्षोद्देश्यतावच्छेदकत्वे जगत्पदात् पूर्वमेव दुःखपङ्कनिमग्नपदस्य प्रयोगापत्तेः।

मथुरानाथस्तु जगदेवेति जगत्पदं वस्तुत्वेन रूपेण वस्तुमात्रार्थकमेवकारश्च समूहार्थकः। वस्तुत्वविशिष्टस्य एवकारार्थसमूहपदार्थेऽन्वयाद् वस्तुसमूहरूपोऽर्थो लभ्यते। तत्र च वस्तुसमूहे दुःखपङ्कनिमग्नपदार्थस्य सामानाधिकरण्येनान्वयाद् दुःखपङ्कनिमग्नवस्तुसमूहात्मकोऽर्थो लब्धः स्यात्। तादृशसमूहत्वसामानाधिकरण्येन दुःखपङ्कनिमग्नत्वस्यान्वयादेव न तदंशस्य बाधः। अवच्छेदकावच्छेदेन तदन्वयविवक्षणे तु तादृशसमूहान्तर्गतेषु घटपटादिषु मुक्तात्मेश्वरप्रभृतिषु च दुःखपङ्कनिमग्नत्वस्याभावेन विशेषणांशबाधो दुर्निवार एव स्यात्। एवञ्च दुःखपङ्कनिमग्नवस्तुसमूहस्यैव मुन्युद्दिधीर्षोद्देश्यत्वमित्याहुः। तन्न चारु। एवकारस्य समूहार्थकत्वे वस्तुसमूहे च दुःखपङ्कनिमग्नत्वान्वये सामानाधिकरण्येन तदन्वयोऽसमञ्जस एव स्यात्। समूहत्वविशिष्टस्य विशेष्यत्वे सामानाधिकरण्येन कस्यापि पदार्थस्य विशेषणत्वविवक्षणं विरुद्धमेव

प्रतिभाति। घटजातं नीलमित्युक्ते केचिदेव घटा नीला न तु सर्वे इत्येवं वाक्यार्थबोधः कुत्रापि न दृश्यते।

यद्युच्येत न तावत् प्रथमतो जगत्पदार्थस्य वस्तुत्वविशिष्टस्यैवकारार्थे समूहेऽन्वयः, अपि तु दुःखपङ्कनिमग्नत्वस्यैवेति। एवञ्च दुःखपङ्कनिमग्नत्वविशिष्टस्यैव जगत्पदार्थस्य पश्चादेवकारार्थेऽन्वयः। तथा च वस्तुत्वसामानाधिकरण्येन दुःखपङ्कनिमग्नत्वस्यान्वयेनासामञ्जस्यम्। तादृशविशिष्टानामेव जगत्पदार्थवस्तूनामेवकारार्थसमूहेऽन्वयेन दुःखपङ्कनिमग्नवस्तुसमूहरूपोऽर्थः प्राप्यते। तस्यैव च मुन्युद्दिधीर्षोद्देश्यत्वमिति न किञ्चिदप्यनुपपन्नमिति। तन्न, प्रदर्शितदिशान्वयविवक्षणे दुःखपङ्कनिमग्नपदस्य जगत्पदात् पूर्वं प्रयोगापत्तेः। अपि च सामानाधिकरण्येन दुःखपङ्कनिमग्नत्वस्य जगत्पदार्थे वस्तुन्यन्वये द्वित्राः संसारिण आत्मानोऽपि ग्रहीतुं शक्याः। तादृशस्य एवकारार्थसमूहपदार्थेऽन्वये तु केवलं त एव संसारिणः समूहपदार्थः स्यात्। तथा च तेषामुद्दिधीर्षोद्देश्यत्वे बहूनां संसारिणामुद्दिधीर्षानुद्देश्यत्वेन मुनेः परमकारुणिकत्वस्य हानिः प्रसज्येतेति ध्येयम्।

**अष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीमिति।**

**अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः।**
**पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश॥**
**आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।**
**अर्थशास्त्रं चतुर्थन्तु विद्या ह्यष्टादशैव तु॥**

इति विष्णुपुराणे[1] अष्टादशविद्यानां परिगणनं दृश्यते। शिक्षाकल्पनिरुक्तव्याकरणच्छन्दाज्योतिषमिति षड्विधानि वेदाङ्गशास्त्राणि। ऋक्सामयजुरथर्वेति चत्वारो वेदाः। मथुरानाथोद्धृतश्लोके च चतुरो वेदा इत्यत्र वेदाश्चत्वार इत्येवं पाठो दृश्यते। विष्णुपुराणे तु चतुरो वेदा इत्येवमेव पाठः प्राप्यते। यद्यपि त्रयीति सुप्रसिद्धाभिधानेन वेदानां त्रिधाविभक्तत्वमाथर्वणस्य च ऋग्यजुःसामस्वेवान्तर्भावः सुशकः, तथापि मणिकारमते तस्य पृथगेव वेदत्वं बोध्यम्। तेन विद्यानामष्टादशविधत्वकीर्तनात्। जयन्तभट्टेनापि न्यायमञ्जर्यामाथर्वणस्य पृथगेव वेदत्वं व्यवस्थापितम्। **'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्[2]'** इत्यादि छान्दोग्यश्रुत्या चाथर्वणस्य चतुर्थवेदत्वं साक्षादेव कीर्तितमस्ति[3]।

---

१. तृतीयभागे षष्ठेऽध्याये।

२. अत्र मन्त्राणां त्रैविध्यं वेदानां चातुर्विध्यं ग्राह्यम्। ३. छा० उ०।

भगवता भाष्यकारेण **"इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते, यासां चतुर्थीयमान्वीक्षिकी विद्या"** इति वाक्याद्विद्यायाश्चतुर्धैव भेदः प्रदर्शितः। **"चतस्र एव विद्याः"** इति कौटिल्यः। ताभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम्। साख्यं योगो लोकायतञ्चेत्यान्वीक्षिकी। धर्माधर्मौ त्रय्याम्। अर्थानर्थौ वार्त्तायाम्। नयानयौ दण्डनीत्यामित्यर्थशास्त्रवाक्याच्छास्त्राणां चतुर्धा विभक्तत्व एव कौटिल्यस्यापि स्वरस इत्यवगम्यते।

**त्रयी चान्वीक्षिकी चैव वार्त्ता च भरतर्षभ।**
**दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः[1]॥**

इति भारतवाक्यादपि शास्त्राणां चतुर्धापि विभागो लभ्यते।

**आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिस्तथैव च।**
**एवं व्याहृतयश्चासन् प्रणवो ह्यस्य दह्रतः॥**

इति श्रीमद्भागवतवाक्येऽपि (३।१२।४४) शास्त्राणां विभागचतुष्टयत्वं दृश्यते।

**त्रैविद्येभ्यस्त्रयीं विद्याद्दण्डनीतिञ्च शाश्वतीम्।**
**आन्वीक्षिकीञ्चात्मविद्यां वार्तारम्भांश्च लोकतः॥**

इति मनुवचने।

**स्वरन्ध्रगोप्तान्वीक्षिक्यां दण्डनीत्यां तथैव च।**
**विनीतस्त्वथ वार्त्तायां त्रय्याञ्चैव नराधिपः॥**

इति याज्ञवल्क्यवचने च विद्यायाश्चत्वारो विभागाः प्राप्यन्ते।

एवञ्चाष्टादशविद्यास्थानेष्विति चतुर्विधविद्यास्थानेष्विति ज्यायः। विष्णुपुराणप्रथिताष्टादशविद्यास्थानकथनं तु मणिकाराणां संख्याधिक्यप्रदर्शनेन न्यायविद्यायाः पूजिततमत्वख्यापनाय, न तु विद्याविभागप्रदर्शनाय। भाष्यकारादिभिरतिप्रामाणिकैश्चतुर्धेति स्वशास्त्रे विद्यानां विभागप्रवचनात्।

**अभ्यर्हिततमामिति।** अन्यासु सर्वास्वेव विद्यास्वान्वीक्षिकीप्रतिपादितप्रमाणतर्काभ्यामेव तत्तद्विद्याप्रस्थानानि प्रतिपादितानीत्युपजीव्यत्वादान्वीक्षिकीविद्यायास्तदुपजीवकाभ्यो विद्याभ्यः पूजिततमत्वं बोध्यम्।

**प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्।**
**त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता॥**
**आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।**
**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥**

---

१. महाभारते शान्तिपर्वणि ५९।३३।

इत्यादिभिर्मनुना ।

> प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
> आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ।।

इत्यनेन अर्थशास्त्रकारेणापि तथैव प्रतिपादनात् ।

न च

> अहमासं पण्डितको हैतुको वेदनिन्दकः ।
> आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ।।
> हेतुवादान् प्रवदिता वक्ता सत्सु च हेतुमत् ।
> आक्रोष्टा चातिवक्ता च ब्रह्मवाक्येषु च द्विजान् ।।
> नास्तिकः सर्वशङ्की च मूर्खः पण्डितमानिकः ।
> तस्येयं फलनिर्वृत्तिः शृगालत्वं मम द्विज[1] ।।

इत्यादिमहाभारतवचनैरतिशयेन निन्दितत्वात् कथमस्या आन्वीक्षिकीविद्याया अष्टादशविद्यासु पूजिततमत्वमिति वाच्यम्, तत्पुरुषीयनिन्दाप्रवृत्तेरेव तदीयशृगाल-योनित्वं प्रति प्रयोजकत्वात् । तथा हि, आन्वीक्षिकीशास्त्रे वेदप्रामाण्यस्य स्वीकृतत्वेन तदधीयानस्य कस्यचिदपि न वेदनिन्दकत्वं भवितुमर्हति । यदि पुनः स्यात् तदा तत् प्रति तदीयपूर्वसंस्कारस्यैव प्रयोजकत्वं भवेत्, न तु तच्छास्त्रस्य न्यायविद्याध्ययनेन पूर्वसंस्काराधीननिन्दितत्वबुद्धेर्दृढतरत्वपक्षे तु तत्राप्युपकारकत्वेन विद्यायाः श्रेष्ठत्व-मेवायाति । तादृशी खल्वान्वीक्षिकी विद्या सा, यत्रैव वा साध्वसाधुषु प्रयुक्ता भवति, तत्रैव दृढतां सम्पादयतीति तस्याः श्रेष्ठत्वमेव प्रतिपादितं भवति, न पुनर्निन्दितत्वम् ।

**आन्वीक्षिकीमिति** । अनु पश्चात् प्रत्यक्षात् परमिति यावत् । "अथ तत्-पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टञ्चेति" सूत्रेणानुमाने प्रत्यक्षपूर्व-कत्वस्य कथनात् तस्य प्रत्यक्षानन्तरत्वमर्थतो लभ्यते । ईक्षाज्ञानमनुमितिरिति यावत् । तथा चान्वीक्षापदात् प्रत्यक्षमूलकत्वेनानुमितिरुपस्थाप्यते । तयान्वीक्षया प्रवर्तत इत्यान्वीक्षिकी तर्कविद्येति भावः । तां परमकारुणिको मुनिः प्रणिनायेत्यर्थः ।

एवञ्चान्वीक्षिकीपदं योगवृत्त्या प्रत्यक्षकारणकत्वेनानुमानप्रमाणस्य प्रतिपादकेषु शास्त्रेषु प्रवर्त्तते । अनुमानप्रतिपादकस्यापि बौद्धशास्त्रस्यान्वीक्षिकीपदानभिधेयत्वात् तत्र रूढिरपि वृत्तिरावश्यकी । तत्र च रूढतायामक्षपादप्रणीतत्वमेवावच्छेदकं बोध्यम् । तथा चोभाभ्यां वृत्तिभ्यामान्वीक्षिकीपदमक्षपादप्रणीतानुमानप्रतिपादके शास्त्रे प्रवर्त्तेत, नान्यत्र । गौतमीयधर्मशास्त्रेऽतिव्याप्तिवारणाय यौगिकत्वम्, बौद्धादिशास्त्रेष्वतिव्याप्ति-

१. महाभारते शान्तिपर्वणि १७०।४७-४९

निरासाय रूढत्वमावश्यकमिति बोध्यम्। रूढत्वज्ञानस्य केवलयौगिकार्थोपस्थितौ प्रतिबन्धकत्वात् सांख्यवैशेषिकादिषु शास्त्रेषु कदाचित् प्रवृत्तौ आन्वीक्षिकीपदस्य लक्षणावृत्तिरेवाश्रयणीया, न तु योगवृत्तिः। "सांख्यं योगो लोकायतञ्चेत्यान्वीक्षिकीत्य-नेनार्थशास्त्रे लक्षणया आन्वीक्षिकीपदस्य सांख्यवैशेषिकयोः प्रवृत्तिर्बोध्या। लोकायत-पदञ्चात्राक्षपादीयतर्कशास्त्रमेवोपस्थापयति। योगपदञ्च वैशेषिकशास्त्रं प्रतिपादयति। योगिपदस्य प्राचीनैः कणादे मुनौ प्रयुक्तत्वादिति ध्येयम्।

**परमकारुणिक इति।** परदुःखप्रहाणेच्छैव सोपधिः करुणा। निरुपधित्वमेव स्वसुखाननुसन्धानरूपमत्र परमत्वं करुणाया बोध्यम्। तथा च स्वसुखानुसन्धाना-भावविशिष्टपरदुःखप्रहाणेच्छावत्त्वेन मुनेरक्षपादस्य परमकारुणिकत्वमिति भावः। अथोद्दिधीर्षुरित्यनेनैव मुनेः परमकारुणिकत्वस्यापि लाभात्, पुनः परमकारुणिकत्व-कथनेन ग्रन्थस्यार्थपुनरुक्ततादोष इति।

न चोद्दिधीर्षुरित्यनेन मुनेः परदुःखप्रहाणेच्छात्मककरुणावत्त्वलाभेऽपि तत्र निरुपधित्वस्यालाभात् तल्लाभाय परमकारुणिकत्वकीर्तनं सप्रयोजनत्वेन नार्थपुनरुक्ति-तापन्नमिति वाच्यम्, मुनेः स्वातन्त्र्येण मोक्षजनकतत्त्वप्रतिपत्त्यनुकूलशास्त्रप्रवक्तृत्वे तस्य स्वीयतत्त्वप्रतिपत्तेरवश्यमङ्गीकरणीयत्वेन स्वसुखाभिसन्धानासम्भवादुद्दिधीर्षायां निरुपधित्वस्याप्यर्थतोऽवश्यं लब्धत्वादिति चेत्, न, निरुपधिपरदुःखप्रहाणेच्छाप्रयो-ज्यस्य प्रयत्नस्यात्र परमकारुणिकपदेनोपलक्षितत्वादिति ध्येयम्। तथा च न मुनिः केवलमुदिद्धीर्षुरेव, परमुद्धारानुकूलप्रयत्नवानपीत्यर्थलाभेनापुनरुक्तेरिति ध्येयम्।

अथ मिथ्याज्ञानजन्यवासनावतां प्राणिनामुद्देशेन मुन्युदिद्धीर्षायाः कीर्तनात् तादृशोदिद्धीर्षाप्रयुक्तशास्त्रमपि तानेव प्राणिनोऽधिकुर्यात्, स्वजन्यज्ञानभागितया प्रणेत्रभिप्रायोद्देश्यस्यैव शास्त्रेऽधिकारितानिर्वाहकत्वात्। एवं ज्ञानाधिकारिताप्रयोजक-शूद्रादिशरीरावच्छेदेनापि तत्त्वज्ञानोत्पत्तीच्छया मुनिना तत्त्वप्रतिपादकवाक्योच्चा-रणात्तस्य प्रत्यवायभागिता स्यात्। अनधिकारिणामध्यापनेऽध्यापयितुः प्रत्यवायस्य स्मरणात्। अन्यदीयज्ञानोत्पत्तीच्छया शब्दप्रयोगस्यैवाध्यापनात्मकत्वादिति चेत्, न, पश्वादिशरीरावच्छेदेनोद्धारस्य बाधितत्वान्मोक्षप्रयोजकागामिब्राह्मणादिशरीरान्तर्भा-वेणैव तेषामिदानीमुदिद्धीर्षोद्देश्यत्वेन तत्तच्छरीरावच्छेदेन तत्त्वज्ञानोत्पत्तीच्छया शास्त्रप्रणयनान्मुनेः प्रत्यवायाभावादिति दीधितिः। एतदप्यरुचिकरमेव विदुरादि-दृष्टान्तेन शूद्रशरीराणामपि मोक्षप्रयोजकत्वेन तत्तच्छरीरावच्छिन्नस्याप्युदिद्धीर्षोद्देश्य-त्वस्याभ्युपगन्तव्यतया तादृशशरीरावच्छिन्नज्ञानोत्पत्त्यभिप्रायस्य मुनेः सम्भवात्तेषा-मध्यापनेनावश्यं प्रत्यवायात् परमकारुणिकत्वेन तादृशमत्यल्पं प्रत्यवायं स्वीकृत्यैव

**तत्र प्रेक्षावत्प्रवृत्त्यर्थं प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादावसूत्रयत् ।**

---

मुनिना शास्त्रप्रणयनात्, तपोवैशारद्येन तत्प्रत्यवायस्यानायासेनैव निराकरणादिति तात्पर्यकाराः । तत्त्वज्ञानवतां मुनीनामफलाकाङ्क्षित्वेन तदीयकर्मणां पुण्यापुण्याजनकत्वात्, "**न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य**" इत्यादिभिर्वचनैः शास्त्रकृद्भिस्तथैव प्रतिपादनादिति मादृशाः ।

"**प्रमाणादिषोडशपदार्थानाम्**" इत्यादि । एतच्च संक्षेपानुरोधादर्थतः सूत्रग्रहणम्, सूत्रन्तु यथासन्निवेशं पूर्वमुपस्थापितमिति पुनर्नोपस्थाप्यते । अनेन च समीक्षकपुरुषाणां न्यायशास्त्राध्ययने प्रवर्त्तनार्थं फलकीर्तनपूर्वकं तेन निःश्रेयसात्मकफलेन शास्त्रस्यास्य सम्बन्धः प्रतिपादितः । सम्बन्धश्च स्वकर्मकाध्ययनसाध्यतत्त्वप्रतिपत्तिनिर्वर्त्त्यत्वेन निःश्रेयसस्य प्रयोज्यप्रयोजकभावरूप एव । शास्त्रं प्रयोजकं निःश्रेयसञ्च तत्प्रयोज्यमिति भावः । अथ प्रदर्शितेन सूत्रेण षोडशपदार्थतत्त्वज्ञानप्रयोज्यत्वस्य निःश्रेयसे कथनात्तत्त्वज्ञाननिःश्रेयसयोरेव प्रयोज्यप्रयोजकभावरूपः सम्बन्धो लभ्यते ।

न तु शास्त्रनिःश्रेयसयोस्तयोः प्रयोज्यप्रयोजकभावस्य सूत्रेऽकथनादिति कथं सूत्रस्य शास्त्राध्ययने प्रेक्षावत्प्रवर्तकत्वं निर्वहति ।

न च तत्त्वं ज्ञायतेऽनेनेति करणव्युत्पत्त्या निष्पन्नत्वेन तत्त्वज्ञानपदं शास्त्रात्मस्वार्थं समर्पयति निःश्रेयसायाधिगमस्तत्त्वप्रतिपत्तिरिति चतुर्थीसमासान्तनिःश्रेयसाधिगमपदञ्च निःश्रेयसजनकतत्त्वज्ञानरूपमर्थमुपस्थापयति । तत्त्वज्ञानादितिपञ्चम्यर्थप्रयोज्यत्वस्य प्रदर्शिताधिगमपदार्थेऽन्वयात् सूत्रत एव निःश्रेयसफलकाधिगमात्मकतत्त्वज्ञाने शास्त्रप्रयोज्यत्वस्य लाभ इति वाच्यम्, एवमपि निःश्रेयसात्मकफलेन शास्त्रसम्बन्धस्य साक्षादप्राप्तेः । अर्थतस्तल्लाभकथने च तत्त्वज्ञाननिःश्रेयसाधिगमपदयोस्तादृशकूटव्याख्यानमनतिप्रयोजनकमेव स्यात् ।

प्रमाणादिषोडशपदार्थानामिति शैषिकी षष्ठी । सम्बन्धत्वेन रूपेण निष्ठत्वं तदर्थस्तस्य च तत्त्वज्ञानपदार्थैकदेशे तत्त्वेऽन्वयात् प्रमाणादिषोडशपदार्थसम्बद्धानि यानि तत्त्वानि प्रमाणादीनि, तेषां निश्चयान्निःश्रेयसाधिगमो भवतीति वाक्यार्थो लभ्यते प्रदर्शितषष्ठ्यर्थनिष्ठत्वस्य कुत्रापि धात्वर्थेऽन्वयासम्भवेनाकारकत्वाच्छैषिकत्वं बोध्यम् । कारकादन्यः शेष इति स्मरणात् ।

**तत्त्वज्ञानादिति** । तत्त्वानां ज्ञानं तत्त्वज्ञानम्, तस्मात् । अत्र च ज्ञानमिति भावविहितकृद्योगे कर्मणि षष्ठीति ज्ञेयम् । तथा च कारकषष्ठीविभक्तेर्लोपात् तत्पुरुष-

**तेष्वपि प्रमाणादीनां सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते ।**

---

समासः। अत्र च पदार्थानामिति शेषिकषष्ठ्यर्थनिष्ठत्वसापेक्षत्वेऽपि तत्त्वपदार्थस्य चैत्रस्य दासभार्येत्यादावित्र नियतससम्बन्धिकपदत्वात् समासस्य साधुत्वमिति मन्तव्यम्। अत्रत्यतत्त्वम्पदार्थस्य निःश्रेयसाधिगम इत्यत्राधिगमपदार्थेऽन्वयात् तत्त्वज्ञानान्निःश्रेयसाधिगम इति समासे न सापेक्षत्वम्। निःश्रेयसस्याधिगमो निःश्रेयसाधिगम इति कर्मत्वार्थकषष्ठ्या लोपादेव समासेऽधिगम इति भावविहितकृदन्तयोगात् कर्मणि तस्या एव विभक्तेः प्राप्तत्वात्। भगवता भाष्यकारेण प्रदर्शितयैव दिशा षष्ठीत्रयं व्युत्पादितम्। अत्राधिगमपदं लाभार्थे प्रयुक्तम्। निःश्रेयसलाभे निःश्रेयससामग्रीमात्रप्रयोज्यत्वप्रदर्शनायाधिगमपदमिति विश्वनाथः। एवञ्च प्रमाणादिपदार्थतत्त्वज्ञानप्रयोज्यत्वस्य निःश्रेयसे वाक्यतो लाभेन शास्त्रकर्मकाध्ययनस्याभिधेयतत्त्वज्ञानजनकताया अन्वयव्यतिरेकाभ्यां लोकत एव प्राप्त्या चानायासेनैव शास्त्रनिःश्रेयसयोः प्रयोज्यप्रयोजकभावरूपः सम्बन्धो विनेयैर्लभ्यत इति ध्येयम्।

**इति तत्त्वचिन्तामणिप्रभायाम्**
**अधिकारिविषयसम्बन्धप्रयोजननिरूपणं नाम प्रकरणम्।**

तत्रभवद्भिः सूत्रकारैः संक्षेपेण षोडश पदार्था निरूपिताः। तेषु पदार्थेषु तत्त्वचिन्तामणौ प्रमाणतत्त्वमात्रस्य निरूपणे ग्रन्थकारः स्वाभिप्रायं विवृणोति **'तेष्वपि प्रमाणाधीनेत्यादि'। सर्वेषामिति।** प्रमेयादिविग्रहस्थानान्तानां पञ्चदशविधपदार्थानामिति तदर्थः। **व्यवस्थितिरिति'**। तत्त्वविनिर्णय इत्यर्थः। तथा चान्येषां पञ्चदशपदार्थानां तत्त्वविनिर्णयस्य प्रमाणसाध्यत्वाल्लोकेषु च साध्यतः साधकेऽधिकसमादरदर्शनात् तत्त्वचिन्तामणौ प्रमाणतत्त्वमात्रनिरूपणे ग्रन्थकारस्याग्रहो युक्त एव प्रतिभातीति भावार्थः।

अत्रेदमालोचनीयम्। तेष्वपि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति ग्रन्थेन प्रमाणस्य पदार्थान्तरापेक्षया प्राशस्त्यं प्रतिपादितं मणिकारैः। प्रमेयादीनामन्येषां पदार्थानां तत्त्वव्यवस्था तद्विनिश्चितिरूपा प्रमाणाधीना चेत्, तदा तत्त्वविनिश्चितिसाधकत्वेन तत्त्वविनिश्चितिरूपात् स्वसाध्यादेव प्रमाणस्य प्राशस्त्यमायाति, न तु स्वरूपतः आत्मादिरूपप्रमेयतोऽपि। तेन प्रमाणस्य प्राशस्त्यं पर्यवस्यति। तत्तत्प्रमेयस्वरूपं प्रति प्रमाणस्यासाधकत्वात्। तथा च तदितरेभ्यः सर्वेभ्यः पदार्थेभ्यः प्रमाणस्य प्राशस्त्यकीर्तनं ग्रन्थकृतां कथं नामसङ्गतमिति चेत्, न, मोक्षशास्त्रे स्वरूपतः पदार्थानामकिञ्चित्करत्वेन तेषां तत्त्वविनिर्णयस्यैवात्र विवक्षितत्वात्। तथा च तत्साधकत्वेन प्रमाणस्य ततः प्राशस्त्ये यथाप्रयोजनं तदितरेभ्यः सर्वेभ्य एव पदार्थेभ्यः प्रमाणस्य प्राशस्त्यं सिद्धं भवतीति मन्तव्यम्।

**ननु प्रमाणादीनां तत्त्वं प्रतिपादयच्छास्त्रं परम्परया निःश्रेयसेन सम्बध्यत इति न युक्तम्, प्रमाणतत्त्वावधारणस्याशक्यत्वात्। तद्धि प्रमातत्त्वावधारणाधीनम्, तच्च स्वतः परतो वा न सम्भवति, वक्ष्यमाण-दूषणगणग्रासात्।**

---

अथ यदि साधकत्वेन हेतुना मोक्षफलकतत्त्वपरिच्छित्तेरपि प्रमाणस्य प्राशस्त्यमभिप्रेतं स्यात्, तदा साधकत्वाविशेषात् प्रमातृप्रमेययोरपि प्रशस्तत्वेन तयोरपि निरूपणं प्राप्तं भवति, तथा च तयोः परिहारेण प्रमाणतत्त्वमात्रनिरूपणे ग्रन्थकृतां न्यूनतेति चेत्, न, फलं प्रति साधकतमत्वस्यैवात्र प्राशस्त्यज्ञापकत्वेन ग्रन्थकृतामभिप्रेतत्वात्। प्रमातृप्रमेययोस्तत्त्वपरिच्छित्तिरूपफलं प्रति साधकत्वेऽपि साधकतमत्वाभावेन तदनिरूपणेऽपि ग्रन्थकृतां न्यूनतादोषपरिहारसम्भवादिति भावः।

तथा हि प्रमीयते अनेनेति व्युत्पत्त्या करणत्वार्थकल्युट्प्रत्ययेन निष्पन्नं प्रमाणपदं प्रमाकरणरूपमर्थमभिदधाति। **'साधकतमं करणम्'**[1] इति पाणिनिस्मृत्या च कारकाणां प्रशस्तकारकस्यैव करणत्वं प्रतिपादितम्। कारकाणां कार्यान्वयव्यतिरेकयोः साधारणत्वेऽपि सति भवनमेव न त्वभवनमित्येव प्राशस्त्यम्। स च फलेनायोगस्य व्यवच्छेदः, कारकाणां मध्ये यत्र फलायोगव्यवच्छेदः स्यात्, स एव प्रशस्ततया करणं स्यात्। प्रमातृप्रमेययोः कदाचित् कारकान्तराणामसमवधाने तत्त्वपरिच्छित्तिरूपफलेनायोगोऽपि दृश्यत इति ते कारके अपि न प्रशस्ते। विषयेन्द्रियसन्निकर्षादिरूपकारके च तत्त्वपरिच्छित्तिरूपफलेनायोगाभावात् तत् प्रशस्ततया करणमेव। एवञ्चाप्राशस्त्यात् प्रमातृप्रमेययोरनिरूपणेऽपि न ग्रन्थकृतां न्यूनतेति सर्वं समञ्जसम्।

भाष्यकृद्भिश्च षोडशपदार्थेषु प्रमाणस्य प्राधान्यमन्यथा प्रतिपादितम्। तथा हि प्रमाणस्य प्राधान्येऽर्थवत्त्वमेव हेतुः। अर्थवदिति नित्ययोगार्थे मतुप्। अव्यभिचार एवात्र नित्ययोगः। स तत्र नित्ययोगी भवति, यस्तमर्थं कुत्रापि कदापि न व्यभिचरति। प्रमाणप्रदर्शितस्यार्थस्य स्वरूपप्रकारयोः कालान्तरे देशान्तरेऽवस्थानान्तरे वा विसंवादाभावात् प्रमाणस्यार्थाव्यभिचारित्वम्, अत एव प्रमेयादिपञ्चदशपदार्थेभ्यः प्रमाणस्य प्राधान्यमिति भाष्यकृतामभिप्रायः। यद्यपि प्रमातृप्रमेयप्रमितीनामप्यर्थाव्यभिचारित्वमस्त्येव, तथापि प्रमाणस्यैव द्वारत्वात् तस्यैव प्राधान्यं बोध्यम्। प्रमातृप्रभृतीनां प्रमातृत्वादिस्वरूपनिर्वाहे प्रमाणस्यैव प्रयोजकत्वादिति तात्पर्यम्।

निःश्रेयसेन प्रयोजनेन सह शास्त्रस्य सम्बन्धप्रतिपादनार्थं पूर्वं यदुक्तं पूर्वपक्षोपस्थापनार्थम्, तत् पुनरनुवदति ननु **प्रमाणादीनां तत्त्वमित्यादि**। तथा च मोक्षार्थी पुरुष आचार्याच्छास्त्रमधीत्य प्रमाणादीनां षोडशविधपदार्थानां तत्त्वं विजानाति।

---

१. अष्टा० १।४।४२।

शास्त्रस्यास्य मननसहायकत्वादिदं शास्त्रार्थविज्ञानं मननात्मकमेवेति बोध्यम्। अनन्तरञ्च यथाविधि निदिध्यासनेनात्मतत्त्वं प्रत्यक्षतो निश्चित्य देहादावात्माभिमानात्मकं मिथ्याज्ञानं विजहाति, तेन च विरक्तः सन्नफलकामो न प्रवर्तते, तेन च नूतनधर्माधर्मासंग्रहात् सञ्चितानाञ्च कर्मणां तत्त्वज्ञानेनैव पूर्वं विनष्टत्वात् प्रारब्धभोगावसानेऽशरीरी भूत्वा न पुनर्दुःखमनुभवति। तथा च प्रदर्शितप्रणाल्या चरमदुःखनिवृत्तिं प्रति शास्त्रस्य प्रयोजकत्वाच्छास्त्रं निःश्रेयसेन फलेनाभिसम्बद्धं भवतीति पूर्वमुक्तम्।

यदिदमुक्तं निःश्रेयसेन शास्त्रस्य सम्बद्धत्वम् तन्न सम्भवति, षोडशविधतत्त्वेषु प्रथमस्य प्रमाणतत्त्वस्य विनिश्चयासम्भवादिति पूर्वपक्षतात्पर्यम्।

पूर्वपक्षी स्वाभिप्रायं विभज्य प्रतिपादयति **तद्धीत्यादि**। तथा हि प्रमाणतत्त्वं तदैवावधारितं स्याद् यदि प्रमायास्तत्त्वं पूर्वमवधारितं भवेत्, प्रमाकरणत्वरूपस्य प्रमाणतत्त्वस्य प्रमातत्त्वघटितत्वात्। विशिष्टस्य ज्ञाने च विशेषणज्ञानस्य हेतुत्वात्। द्विधा खलु तत्त्वावधारणा भवितुमर्हति, स्वतः परतो वा, प्रकारान्तराभावात्। प्रकृते च स्वतः परतो वा न प्रमातत्त्वस्यावधारणं सम्भवति। प्रकारान्तरञ्च तत्र नास्त्येव। एवञ्च प्रमातत्त्वावधारणासम्भवात् प्रमाणतत्त्वस्यावधारणासम्भवो बोध्यः। प्रमातत्त्वावधारणासम्भवे हेतुरग्रे प्रदर्शयिष्यते। तथा च फलेनाभिसम्बन्धाभावाच्छास्त्रं प्रेक्षावतामग्राह्यमेवेति पूर्वपक्षनिगर्वः।

प्रदर्शितस्य पूर्वपक्षस्य समाधानमभीप्सुः कश्चित् तटस्थः पूर्वपक्षस्यार्थान्तरतां प्रतिपादयितुं चेष्टते **अथेत्यादि**। तथाहि मा भूत् प्रमात्वस्यावधारणं प्रमेयतत्त्वावधारणन्तु प्रमाणस्वरूपादेव सम्भवत्येव। एवञ्चाप्रामाण्यज्ञानानास्कन्दितात् प्रमेयतत्त्वावधारणादेव निःश्रेयसाधिगमोपपत्तेः। स्वप्रतिपाद्यार्थतत्त्वप्रतिपादनद्वारा शास्त्रस्य प्रयोजनेन सम्बन्धात् प्रेक्षावतां शास्त्राध्ययनोपादानकप्रवृत्तौ नास्ति किमपि बाधकम्।

न च सत्यपि शास्त्रस्य प्रयोजनेन सम्बन्धे शास्त्रं निःश्रेयसप्रयोजकमिति प्रेक्षावदध्ययनप्रवृत्त्यौपयिकेष्टसाधनताज्ञाने प्रमात्वस्य स्वतः परतो वा निश्चयासम्भवात् प्रेक्षावतामप्रवृत्तिस्तदवस्थैवेति वाच्यम्, प्रवर्तकज्ञाने प्रमात्वावधारणस्य व्यभिचारेण प्रवृत्तित्वावच्छिन्नं प्रत्यहेतुत्वात्। तथा चानाकाङ्क्षिताभिधानत्वेन पूर्वपक्षो न युक्त इति समाधातुरभिमानः।

**अथ किं प्रामाण्यज्ञानेन प्रवृत्तिमात्रे तस्य व्यभिचारात्। बहुवित्त-व्ययायाससाध्ये प्रवृत्तिश्च आवश्यकार्थनिश्चयादेव।**

---

अथ **'ननु प्रमाणादीनाम्'** इत्यादिपूर्वपक्षग्रन्थे प्रेक्षावतामध्ययनप्रवृत्तेर्गन्धोऽपि नास्ति। तेन ग्रन्थेन केवलं शास्त्रप्रयोजनयोरसम्बन्धस्यैव प्रतिपादितत्वादिति प्रवर्तकज्ञाने प्रमात्वावधारणानर्थक्यकथनं तटस्थस्याप्रासङ्गिकत्वेन प्रलाप एव भवतीति चेत्, न, शास्त्रे प्रयोजनेन सम्बन्धसूचनस्याध्ययनप्रवृत्तिमात्रोपयोगित्वेनासम्बन्धोक्तेरध्ययनाप्रवृत्तितात्पर्यकत्वादिति ध्येयम्।

अत्रेदं वक्तव्यम्। तत्रभवद्भिरालोककृद्भिः नन्वित्यादिप्रवृत्तिमात्रे तस्य व्यभिचारादित्यन्तग्रन्थो न व्याख्यातः। दीधितिकारैरपि नन्वित्यादिवक्ष्यमाणदूषण-गणग्रासादित्यन्तस्य ग्रन्थस्य यद्यपि व्याख्यानं न प्रस्तुतम्, तथापि **'अथ'** इत्यादि-ग्रन्थस्याशयस्तैरुद्घाटितः। प्रवर्तकज्ञाने प्रामाण्यं व्यवस्थापयच्छास्त्राध्ययने प्रेक्षावतः प्रवर्त्तयति, तेन च शास्त्रं निःश्रेयसेन फलेन सम्बद्धं भवतीति पूर्वपक्षे कस्यचित् समाधानरूपेण 'अथ' इत्यादिग्रन्थस्तैरुपस्थापितः।

अन्ये पुनर्न्यायसूत्रात्मकशास्त्रादेवाध्येतृपुरुषाणां प्रमाणादिपदार्थतत्त्वावधारण-मनन्तरञ्च निःश्रेयसाभ्युपगतौ शास्त्रं फलेनाभिसम्बद्धं स्यात्, शास्त्रञ्च तत्कर्त्तु-स्तदुपादानकप्रवृत्त्यनन्तरं प्रणीतं स्यात्। तदुपादानकप्रवृत्तिश्च ग्रन्थकारस्य निश्चित-प्रामाण्यकाच्छास्त्रधर्मिकफलसाधनताज्ञानादेव भवेत्। तच्च फलसाधनताज्ञानीय-प्रामाण्यावधारणं ग्रन्थकृतो न सम्भवति। तदानीमपि तत्कारणस्य शास्त्रस्यानुत्पादा-दिति 'ननु' इति शङ्काग्रन्थतात्पर्यं विशदयन्ति।

अत्रोत्तरमाह **अथ किं प्रामाण्यज्ञानेनेति**। शास्त्रं निःश्रेयसप्रयोजकमिति यद् ग्रन्थकर्त्तुः शास्त्रोपादानकप्रवृत्त्यौपयिकं फलसाधनताज्ञानं तद्धर्मिकेण प्रामाण्य-प्रकारकनिश्चयेनालमित्यर्थ इत्याहुः। एतदसमीचीनमेव प्रतिभाति। प्रमात्वादीनां पदार्थतत्त्वानामवधारणं शास्त्रादेवैतस्मान्नान्यस्मादुपायादिति ग्रन्थकर्त्तुः शास्त्रधर्मिक-फलसाधनताज्ञानधर्मिकं प्रमात्वावधारणं शास्त्रप्रणयनप्रवृत्त्यौपयिकं न भवितुमर्हति, तदानीमपि प्रमात्वावधारणोपायस्यास्य शास्त्रस्यानुत्पन्नत्वेनाविद्यमानत्वादिति पूर्वपक्षस्याशयः। तच्च स्वतः परतो वा न सम्भवति, वक्ष्यमाणदूषणगणग्रासादिति पूर्वपक्षसमर्थकमणिपङ्क्तेरनुत्थानापत्तेरिति ध्येयम्।

एवञ्चाध्येतृपुरुषीयं यच्छास्त्राध्ययनप्रवृत्त्यौपयिकं शास्त्रधर्मिकनिःश्रेयस-साधनताज्ञानम्, तद्धर्मिकस्यैवाध्येतृपुरुषीयप्रमात्वावधारणस्योपायाभावान्निषेधे पूर्वपक्षिणां तात्पर्यं ग्राह्यम्। उपायाभावात् प्रमात्वात्मकप्रमाणतत्त्वावधारणासम्भव-

प्रदर्शनमुखेन शास्त्रस्य निःश्रेयसरूपफलाभिसम्बन्धप्रत्याख्यापनद्वारा पूर्वपक्षरचनासम्भवेऽप्यथेत्याद्युत्तराभासग्रन्थस्यासंलग्नत्वापत्त्याध्येतृपुरुषीयस्याध्ययनप्रवृत्त्यौपयिकफलसाधनताज्ञानधर्मिकप्रमात्वावधारणस्य निषेधेऽस्माभिः पूर्वपक्षग्रन्थस्य तात्पर्यमभिहितमित्यलमतिविस्तरेण। पूर्वपक्षश्चायं वैतण्डिकानामेव।

तथा सत्येव तच्च स्वतः परतो वा न सम्भवतीत्यस्याः पूर्वपक्षसमर्थकपङ्क्तेरवतारणसम्भवात्। तन्मत एव प्रामाण्यस्य तदवधारणोपायस्य च सर्वथानभ्युपगमात्। अन्येषाञ्च प्रमात्वावधारणोपायत्वेन स्वतस्त्वपरतस्त्वपक्षयोरन्यतरस्मिन्नभ्युपगतिदर्शनात्।

प्रवर्त्तकेष्टसाधनताज्ञानधर्मिकप्रमात्वनिश्चयस्य प्रवृत्तावनपेक्षां प्रतिपादयति **प्रवृत्तिमात्रे तस्येत्यादि**। प्रवृत्तिमात्रे इति प्रत्येकं प्रवृत्तिव्यक्ताविति तदर्थः। अत्राश्रितत्वं सप्तम्यर्थस्तस्याग्रिमे व्यभिचारपदार्थेऽन्वयो बोध्यः। तस्येति तत्पदं प्रवृत्त्यौपयिकेष्टसाधनताज्ञानधर्मिकप्रामाण्यनिश्चयपरम्। षष्ठी च प्रतियोगित्वपरा।

ननु कृष्यादिविषयकफलसाधनतासंशयपरतन्त्रायां कृष्याद्युपादानकप्रवृत्तौ फलसाधनताप्रकारकज्ञानधर्मिकप्रामाण्यनिश्चयस्य व्यतिरेकव्यभिचारसत्त्वेऽपि न प्रवृत्तिमात्रे सोऽस्ति, बहुवित्तायाससाध्योपादानकप्रवृत्तौ फलसाधनताज्ञानधर्मिकप्रामाण्यप्रकारकनिश्चयपूर्वकत्वस्य दर्शनादिति चेत्, न, इत्याह **बहुवित्तव्ययायाससाध्य** इत्यादि। **अर्थनिश्चयादेवेति** प्रवृत्तिविषयधर्मिकफलसाधनतारूपस्यार्थस्य विनिश्चयादेवेति तदर्थः। तथा च बहुवित्तायाससाध्ये वस्तुनि प्रवृत्तौ तदुपादनधर्मिकफलसाधनताया निश्चयोऽपेक्षितः, न तु तादृशज्ञानधर्मिकप्रमात्वनिश्चयोऽपीति सर्वासु प्रवृत्तिव्यक्तिषु प्रमात्वनिश्चयस्य व्यतिरेकव्यभिचारसत्त्वात् प्रवृत्तिमात्रे तस्य व्यभिचारादिति पूर्वतनपङ्क्तिरबाधितार्थैवेति मन्तव्यम्।

यत्र च बहुवित्तायाससाध्ययुद्धादिस्थले युद्धमेतन्मदीयजयसाधनं न वेति संशयस्तत्र जयात्मकफलसाधनतारूपस्यार्थस्यानिश्चयादेव युद्धोपादानकाप्रवृत्त्युपपत्तेर्न तेन फलसाधनताज्ञानधर्मिकप्रामाण्यनिश्चयाभावप्रयोज्यत्वमप्रवृत्तौ प्रमाणीभवति। यत्र च तादृशस्थलविशेषे प्रथमं प्रवृत्तिविषये फलसाधनताया निश्चयात्मकं ज्ञानं जातम्, अनन्तरञ्च तादृशफलसाधनतानिश्चये प्रामाण्यसन्देहादप्रवृत्तिः, तत्रापि फलसाधनतानिश्चयस्याव्यवहितपूर्वमसत्त्वादेव तस्योपपत्तिः स्यादिति न तेनापि बहुवित्तायाससाध्यवस्तूपादानकप्रवृत्तेः फलसाधनताज्ञानधर्मिकप्रामाण्यविनिश्चयस्यापेक्षा प्रमाणिता भवति। तत्र फलसाधनतानिश्चयधर्मिकाप्रामाण्यसंशयादनन्तरक्षणेऽवश्यं फलसाधनतायाः सन्देहः स्यात्, ज्ञानधर्मिकाप्रामाण्यसंदेहस्यार्थसन्देहं प्रति हेतुत्वात्। तादृशार्थसन्देहकाले च पूर्वोत्पन्नस्यार्थविनिश्चयस्यावश्यं विनाशेनार्थविनिश्चयाभावादेवाप्रवृत्तेरुपपत्तेरित्यलमतिविस्तरेण।

**न च यत्संशयव्यतिरेकनिश्चयौ यस्य प्रवृत्तिप्रतिबन्धकौ[1] तन्निश्चय-स्तद्धेतुरनुमितौ व्याप्तेरिवेति वाच्यम् ।**

---

प्रकारान्तरेणेष्टसाधनताज्ञानधर्मिकप्रामाण्यावधारणस्य प्रवृत्तौ कारणत्वं व्यस्थापयितुं कश्चित्तटस्थः शङ्कते **न च यस्य संशयव्यतिरेकनिश्चयादित्यादि** । न च यद्विषयकसंशयाद् यद्व्यतिरेकविषयकनिश्चयाच्च यद्विषयकनिश्चयस्य सर्वथा भिन्नत्वाद् यद्विषयकसंशयव्यतिरेकनिश्चयगतप्रतिबन्धकत्वेन सह यद्विषयकनिश्चय-गतकारणत्वस्य निरोधात् कथं तयोर्व्याप्यव्यापकभावः सम्भवतीति वाच्यम्, यद् यत्संशयव्यतिरेकनिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्तत्तन्निश्चयजन्यमित्यस्यैव नियमस्यात्र विवक्षितत्वात् । तथा च तादृशप्रतिबध्यतावत्त्वस्य तन्निश्चयजन्यत्वस्य चैकत्रावस्थानान्न साध्यहेत्वोर्वैयधिकरण्यमिति सर्वं सुसङ्गतम् ।

प्रदर्शितनियमग्राहकं दृष्टान्तमाह **अनुमितावित्यादि** । व्याप्तिसंशयव्यतिरेक-निश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यताकायामनुमितौ व्याप्तिनिश्चय इवेति तदर्थो बोध्यः । व्याप्तिसंशयव्यतिरेकनिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वे सति व्याप्ति-निश्चयजन्यानुमितिवदिति यावत् । एवञ्च प्रेक्षावत्प्रवृत्तिरिष्टसाधनताज्ञानधर्मिकप्रमात्व-निश्चयजन्या तद्धर्मिकप्रमात्वसंशयव्यतिरेकनिश्चयप्रतिबन्धकतानिरूपितप्रतिबध्यता-वत्त्वादित्याकारकानुमित्या प्रमात्वनिश्चयस्याध्ययनप्रवृत्तौ कारणत्वं सिद्धं भवति । तथा च स्वतः परतो वा तन्निश्चयसम्भवेनाध्ययनप्रवृत्त्यभावान्न शास्त्रं फलेनाभि-सम्बन्ध्यत इति पूर्वपक्षिणो निगूढ आशयः ।

अथ यस्य संशयव्यतिरेकनिश्चयाविति मूलस्थस्य यस्येति षष्ठ्यन्तार्थस्य संशये व्यतिरेके चान्वयो भवेत् । कस्यापि चैकस्य षष्ठ्यर्थस्योभयत्रान्वयासम्भवात् तस्यार्थ-द्वयमावश्यकम् । अन्यस्य विषयत्वरूपस्य तदर्थस्य संशयेऽन्यस्य च प्रतियोगित्वात्मक-तदर्थस्य व्यतिरेकेऽन्वयः कर्त्तव्यः, एतच्चायुक्तम् । **'सकृदुच्चरितः शब्दः सकृदर्थं गमयति'** इत्यभियुक्तोक्तेरिति चेत्, न, घटस्य संशय इति प्रामाणिकप्रयोगानुरोधात् संशयादिपदसमभिव्याहारस्थले षष्ठ्या एकाधिकार्थकल्पनाया आवश्यकत्वात् । तथा हि घटस्य इत्यत्र संशयपदं व्यतिरेकावगाहिसमानधर्मिकज्ञानात्मकमर्थमुपस्थापयति । तदेकदेशव्यतिरेके षष्ठ्यन्तार्थस्यैकस्य घटप्रतियोगित्वस्य निरूपकत्वसम्बन्धेनापरस्य घटविषयकत्वस्य स्वरूपेण ज्ञानेऽन्वयात्, घटप्रतियोगिताकव्यतिरेकावगाहिसमान-धर्मिकघटविषयकज्ञानरूपो वाक्यार्थो लभ्यते ।

---

१. 'यत्संशयव्यतिरेकौ यस्य प्रवृत्तिप्रतिबन्धकौ' इति सोसाइटि–मुद्रितः पाठः ।

वस्तुतस्तु संशयव्यतिरेकनिश्चयावित्यत्र द्वन्द्वसमासाद् वाक्यभेदस्यावश्यकत्वेन द्विधैव यस्येतिपदस्य सन्निवेशान्नैकस्या षष्ठ्या अर्थद्वयं कल्पनीयम्। यस्य संशयो यस्य व्यतिरेकनिश्चयश्च प्रवृत्तिप्रतिबन्धकावित्येवंरूपेण मूलवाक्यस्य पर्यवसानात् प्रथमषष्ठ्यन्तार्थस्य यद्विषयकत्वस्य संशये द्वितीयषष्ठ्यन्तार्थस्य च यत्प्रतियोगिकत्वस्य व्यतिरेकनिश्चयघटकव्यतिरेकेऽन्वयान्नैकस्याः षष्ठ्या अर्थद्वयकल्पनावश्यकीति भावः। प्रदर्शितदिशा वाक्यभेदेऽपि यस्य संशय इत्येतद्वाक्यघटकषष्ठ्या विषयताकत्वरूपस्य प्रतियोगिताकत्वरूपस्य चार्थद्वयस्य कल्पनमावश्यकम्। व्यतिरेकावगाहिसमानधर्मिकज्ञानात्मकसंशयपदार्थघटकव्यतिरेके प्रतियोगिताकत्वस्य ज्ञाने च विषयताकत्वस्यावश्यमन्वयात्।

**यस्य संशयव्यतिरेकनिश्चयौ प्रवृत्तिप्रतिबन्धकौ** इति मूलस्थं प्रवृत्तिपदं प्रकृतविचारस्य प्रवृत्तिप्रासङ्गिकत्वेन सम्पातादायातं सामान्यव्याप्तिशरीरे प्रवृत्तित्वेन तस्या अप्रवेशात्। यत्संशयव्यतिरेकनिश्चयप्रतिबन्धकताकं यत्तन्निश्चयजन्यमित्येवमाकारेण सामान्यमुख्या व्याप्तेर्यत्तद्घटितत्वस्य पूर्वं प्रदर्शितत्वात्। **मथुरानाथै**स्त्वत्रत्यप्रवृत्तिपदमुत्पत्त्यर्थकतया व्याख्यातम्[1]। तथा च तन्मते यत्संशयव्यतिरेकनिश्चयप्रतिबन्धकताकोत्पत्तिकं यत् तत्तन्निश्चयजन्यमित्येवंरूपेण सामान्यमुखी व्याप्तिः पर्यवसिता स्यात्। एतन्नास्मभ्यं रोचते। **मूलकारेण** प्रवृत्तिपदमुत्पत्त्यर्थे प्रयुक्तमित्यस्यासम्भविततया कल्पयितुमशक्यत्वात्। **आलोककारेण, प्रकाशकारेणा**पि प्रवृत्तिपदस्य प्रकृततात्पर्यकतयैव व्याख्यानात्।

यद् यत्संशयव्यतिरेकनिश्चयप्रतिबन्धकताकं तत्तन्निश्चयजन्यमिति नियमे व्याप्यकोटौ संशयत्वेन संशयाप्रवेशे यद्यद्व्यतिरेकनिश्चयप्रतिबन्धकताकं तत्तन्निश्चयजन्यमित्येवं नियमः स्यात्, तन्न सम्भवति, व्यभिचारात्। तथा हि ग्राह्याभावावगाहित्वेन 'घटाभाववान् देशः' इत्याकारकनिश्चयस्य 'घटवान् देशः' इत्याकारकविशिष्टबुद्धिं प्रति प्रतिबन्धकत्वमस्ति। तत्र घटवत्तानिश्चयजन्यत्वाभावाद् व्यभिचारः परिस्फुट एव विद्यते। संशयप्रवेशे च तत्र विशिष्टबुद्धौ घटवत्तासंशयप्रतिबन्धकताकत्वाभावाद् व्यभिचारो निरस्तो भवति। अतस्तत्र नियमे संशयत्वेन संशयस्य प्रवेश आवश्यक इति बोध्यम्। व्याप्यकोटौ व्यतिरेकनिश्चयाप्रवेशे च यद् यत्संशयप्रति-

१. प्रवृत्तिप्रतिबन्धकाविति प्रवृत्तिरुत्पत्तिर्यस्येत्यनुषज्यते। अग्रेऽपि प्रवृत्तिपदं तदुत्पत्तिपरम्। तथा च यस्य संशयो यस्य व्यतिरेकनिश्चयश्च यदुत्पत्तिप्रतिबन्धकस्तन्निश्चयस्तद्धेतुरित्यर्थः। अन्यथा प्रवृत्तिपदस्य प्रयत्नपरत्वे अनुमितौ व्याप्तिरिवेति दृष्टान्तासङ्गतेः। (रहस्य पृ० १२१)।

बन्धकताकं तत्तन्निश्चयजन्यमित्येवं नियमः स्यात् । एतच्च न सम्भवति, व्याप्तिनिश्चये व्यभिचारात् । तथा हि व्यभिचारात्मकस्य यत्पदार्थस्य यः संशयः, तत्प्रतिबन्धकता-कत्वमव्यभिचारात्मकव्याप्तिनिश्चयेऽस्ति । तत्र च व्यभिचारात्मकयत्पदार्थस्य यो निश्चयस्तज्जन्यत्वं नास्ति । व्यतिरेकनिश्चयप्रवेशे च व्यभिचारस्यानायासेनैव निरासो भवति । व्याप्तिनिश्चये व्यभिचारव्यतिरेकनिश्चयप्रतिबन्धकताकत्वाभावात् ।

नन्वेवमपि व्याप्तिनिश्चये व्यभिचारोऽस्त्येव । तथा हि, यथा व्यभिचारो यत्पदार्थत्वेन ग्रहीतुं शक्यः, तथा व्यभिचाराभावोऽपि यत्पदेनावश्यं ग्राह्यः स्यात् । व्यभिचाराभावात्मकयत्पदार्थस्य यः संशयस्तत्प्रतिबन्धकताकत्वं व्यभिचाराभावा-भावात्मकस्य तदव्यतिरेकस्य च यो निश्चयस्तत्प्रतिबन्धकताकत्वञ्चोभयमेवाव्यभि-चारात्मकव्याप्तिनिश्चयेऽस्ति । तत्राव्यभिचारात्मकस्य तत्पदार्थस्य यो निश्चयस्तज्जन्य-त्वाभावादव्यभिचारः स्फुट एवेति चेत्, न, प्रतिबन्धकीभूतयत्संशयत्वादौ यदभावत्व-प्रकारतानियतत्वस्य निवेशादव्यभिचारः । तथा ह्यव्यभिचारात्मकस्य यत्पदार्थस्य संशयत्वेन तद्व्यतिरेकनिश्चयत्वेन च यथेदमव्यभिचारि न वेत्याकारकसंशयस्येदं नाव्यभिचारीत्याकारकनिश्चयस्य च ग्रहणं भवति, तथेदं व्यभिचारि न वेत्याकारकस्यापि इत्याकारकनिश्चयस्य च ग्रहणं भवति, तथेदं व्यभिचारि न वेत्याकारकस्यापि ।

संशयस्यैवमिदं व्यभिचारीत्याकारकस्यापि तद्व्यतिरेकनिश्चयस्य ग्रहणं भवेत् । प्रथमयोः संशयव्यतिरेकनिश्चययोरिव द्वितीययोरप्यव्यभिचरितत्वबुद्धौ तुल्यत्वमेव । द्वितीययोश्च संशयनिश्चययोरव्यभिचरितत्वाभावत्वप्रकारत्वविरहान्नाव्यभिचा संशय-व्यतिरेकनिश्चयगताया अव्यभिचरितत्वबुद्धिप्रतिबन्धकताया अव्यभिचरितत्वाभावत्व-प्रकारतात्मकयदभावत्वप्रकारतानैयत्यविरहेणाव्यभिचारस्य यत्पदार्थतया ग्रहीतुम-शक्यत्वेन प्रदर्शितसामान्यव्याप्तौ नास्ति व्यभिचार इति बोध्यम् ।

**इदमत्रावधेयम्,** यत्संशयगतप्रतिबन्धकतायां यद्व्यतिरेकनिश्चयगतप्रतिबन्धक-तायाश्च यद्भावत्वप्रकारतानियतत्वं न पृथक् पृथग् द्विधा निवेश्यं प्रयोजनाभावात्, अपि तु प्रदर्शितप्रतिबन्धकताद्वयान्यतरस्मिन्नेकधैव ।

न च व्यभिचारात्मकयत्पदार्थविषयकसंशयस्य व्यभिचाराभावात्मक-यद्व्यतिरेकनिश्चयश्च यदा घटाभावनिश्चयेन समूहालम्बनरूपता, तदा घटवत्ताबुद्धौ व्यभिचारसंशयव्यभिचारव्यतिरेकनिश्चयप्रतिबन्धकताकत्वमस्ति, तत्र च घटवत्ताबुद्धौ व्यभिचारनिश्चयजन्यत्वाभावात् प्रदर्शितसामान्यव्याप्तौ व्यभिचार इति वाच्यम्, यत्संशय-व्यतिरेकनिश्चयप्रतिबन्धकतायां यद्भावावगाहिता प्रयुक्तत्वस्यापि निवेशनीयत्वेन दोषा-भावात् । प्रदर्शितस्थले यत्पदार्थत्वेन व्यभिचारस्य ग्रहणाद् व्यभिचाराभावावगाहित्वं

यदभावावगाहिता स्यात्, निरुक्तसमूहालम्बनज्ञानात्मकव्यभिचारसंशयतद्व्यतिरेक-निश्चयगतायां घटवत्ताबुद्धिप्रतिबन्धकतायां घटाभावावगाहिताप्रयुक्तत्वस्यैव सत्त्वेन व्यभिचाराभावात्मकयदभावावगाहित्वासत्त्वादव्यभिचारो बोध्यः।

न च घटाभाववत्तानिश्चयात्मकसमूहालम्बनव्यभिचारसंशयतद्व्यतिरेक-निश्चयगताया घटवत्ताबुद्धिप्रतिबन्धकताया व्यभिचारसंशयाद्यनात्मके केवलघटा-भाववत्तानिश्चयेऽपि सत्त्वेन तस्या व्यभिचाराभाववत्त्वात्मकयदभावत्वप्रकारतानैयत्य-विरहेण प्रदर्शितस्थले व्यभिचारस्य यत्पदार्थतया अग्रहणादेव व्यभिचारनिश्चया-जन्यायां घटाभाववत्ताबुद्धौ निरुक्तसामान्यव्याप्तेरव्यभिचारान्न तदर्थं प्रतिबन्धकतायां यदभावप्रकारताप्रयुक्तत्वं पृथङ्निवेश्यं प्रयोजनाभावादिति वाच्यम्। यत्र स्थलविशेषे वह्निव्यभिचारसंशयो वह्निव्यभिचारनिश्चयश्च यदभावप्रकारकनिश्चयेन समूहा-लम्बनरूप एव भवति, तत्र तद्वत्ताबुद्धौ प्रदर्शितसामान्यव्याप्तेर्व्यभिचारवारणाय प्रतिबन्धकतायां यदभावत्वप्रकारतानियतत्वनिवेशपक्षेऽपि पुनस्तत्र यदभावावगाहिता-प्रयुक्तत्वस्यावश्यं निवेशनीयत्वात्।

न त्वेवं सति प्रदर्शितसामान्यव्याप्तिप्रविष्टव्याप्यकोटौ व्यतिरेकनिश्चयपदव्या-वृत्तिप्रदर्शनार्थं यदुक्तं प्राक् तदसमीचीनमेव स्यात, तत्रत्यायां यत्संशयगतप्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वस्याभावात्। तथा हि, यद् यत्संशयव्यतिरेकनिश्चय-प्रतिबन्धकताकं तत्तन्निश्चयजन्यमिति सामान्यव्याप्तिशरीरे यदि व्यतिरेकनिश्चयस्यो-पादानं न स्यात्तदा धूमो वह्निव्यभिचारी न वेति व्यभिचारसंशयप्रतिबन्धे धूमो न वह्निव्यभिचारीत्यव्यभिचारनिश्चये व्यभिचारनिश्चयजन्यत्वाभावात् प्रदर्शितसामान्य-व्याप्तौ व्यभिचारो भवतीति पूर्वंव्यतिरेकनिश्चयव्यावृत्तिप्रदर्शनसमयेऽस्माभिरुक्तम्। एतच्च न सम्यक्, प्रदर्शितव्यभिचारनिश्चये व्यभिचारात्मकयदर्थसंशयप्रतिबन्धकता-कत्वसत्त्वेऽपि तत्रत्यप्रतिबन्धकतायां व्यभिचाराभावात्मकयदभावावगाहिताप्रयुक्तत्वस्य विरहेण व्यभिचारस्यैव तत्पदार्थतया ग्रहीतुमशक्यत्वादिति वाच्यम्, व्याप्ति-शरीरप्रविष्टव्यतिरेकनिश्चयप्रतिबन्धकतायामेव यदभावावगाहिताप्रयुक्तत्वस्य निवेश्य-त्वेन तदंशव्यावृत्तिचिन्तनकाले व्याप्तिशरीरादव्यतिरेकनिश्चयांशस्येव तदंशप्रविष्टय-दभावावगाहिताप्रयुक्तत्वस्याप्यवश्यं परित्याज्यत्वात्। तथा च पूर्वप्रदर्शिता व्यावृत्तिः समीचीनैवेति ध्येयम्।

**दीधितिकृद्भिस्तु** यस्य संशयव्यतिरेकनिश्चयावित्यादिग्रन्थोऽन्यथैव व्याख्यातः। तथा हि यस्य संशयव्यतिरेकनिश्चयौ यस्य प्रतिबन्धकावित्युक्ते यस्य व्यतिरेकज्ञान-सामान्यं यस्य प्रतिबन्धकमित्येवमेव तद्वाक्यस्य तात्पर्यार्थो भवति यद्व्यतिरेकनिश्चय

इव यत्संशयेऽपि यद्व्यतिरेकज्ञानत्वस्य प्रायशो विद्यमानत्वात्। अतः प्रदर्शितग्रन्थ-व्याख्यानावसरे **दीधितिकारैस्तेन** व्यतिरेकज्ञानत्वेन प्रतिबन्धकता लभ्यत इत्युक्तम्।

न च यद्व्यतिरेकनिश्चयत्वेन यत्संशयत्वेन वाऽपरिगृहीतस्याप्यव्यभिचाराभाव-वान्न वेत्याकारकसंशयस्याव्यभिचारव्यतिरेकज्ञानात्मकस्य सत्त्वात् कथं तादृशवाक्या-दव्यतिरेकज्ञानसामान्यस्य प्रतिबन्धकता लभ्येत, प्रदर्शिताव्यतिरेकज्ञानव्यक्तेस्तद्-ग्रन्थेनालाभात् सामान्यलाभस्य यावद्विशेषव्यक्तिलाभपूर्वकत्वादिति वाच्यम्;व्यतिरेक-पदव्यत्यासेन **दीधितिकारैस्तद्ग्रन्थस्य** व्याख्यानात्। तथा हि यस्य व्यतिरेकसंशय-निश्चयौ, यत्प्रतिबन्धकावित्येवंरूपेण मूलस्थपङ्क्तेः पर्यवसानादव्यभिचारव्यतिरेक-संशयत्वेन च प्रदर्शितस्याप्यव्यभिचारव्यतिरेकज्ञानस्य ग्रहणसम्भवेन यावद्विशेषलाभेन सामान्यतो यद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकताया लाभसम्भवादिति ध्येयम्।

अथैवं यद्व्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावद् यत्तन्नि-निश्चयजन्यमिति **दीधिति**कारीयपर्यवसितव्याप्तौ व्यभिचारः स्यात्, अव्यभिचारव्यतिरे-कज्ञानप्रतिबध्येऽव्यभिचारनिश्चये अव्यभिचारनिश्चयजन्यत्वाभावादिति चेत्, न। तन्मते व्यभिचारसंशयस्य व्याप्तिनिश्चयेऽप्रतिबन्धकतयाऽव्यभिचारनिश्चयेऽव्यभिचारव्यतिरेक-ज्ञानत्वेन प्रतिबन्धकताया एव कल्पयितुमयोग्यत्वात्। तथा चाव्यभिचारनिश्चया-जन्येऽव्यभिचारनिश्चयेऽव्यभिचारव्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिब-ध्यताया विरहादव्यभिचारो बोध्यः। न चैवं घटवत्तासंशयाप्रतिबध्ये घटवत्तानिश्चये व्यभिचाराद् ग्राह्याभावावगाहिज्ञानस्य ग्राह्यवत्ताज्ञानप्रतिबन्धकतायां निश्चयत्वस्याव-च्छेदकत्वेऽपि व्यभिचारसंशयस्य स्वातन्त्र्येण मणिमन्त्रादिन्यायादव्यभिचारात्मकव्याप्ति-निश्चये प्रतिबन्धकत्वमस्त्येव। तथा च अव्यभिचारनिश्चयाजन्येऽव्यभिचारनिश्चये स्वातन्त्र्येणाव्यभिचारव्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतासत्त्वा-द्व्यभिचारोऽस्त्येवेति वाच्यम्। अन्योऽन्याभावादिगर्भव्याप्तिनिश्चये अत्यन्ताभावगर्भव्य-भिचारज्ञानस्याप्रतिबन्धकत्वमङ्गीकुर्वतां **दीधितिकाराणां** मते व्यभिचारज्ञानत्वेन मणि-मन्त्रादिन्यायेन प्रतिबन्धकत्वकल्पनाया असम्भवात्। तथा सति अत्यन्ताभावगर्भव्य-भिचारज्ञानानामपि स्वातन्त्र्येण मणिमन्त्रादिन्यायादन्योन्याभावगर्भव्याप्तिनिश्चये प्रति-बन्धकताया अवश्यमेव कल्पयितव्यत्वेन तादृशव्याप्तिनिश्चये तादृशव्यभिचारज्ञानस्या-प्रतिबन्धकत्वोक्तेरुन्मत्तप्रलपितत्वापत्तेरिति ध्येयम्।

न चैवं **मणिकारेण** व्याप्तिग्रहोपाये व्यभिचारसंशयस्य व्याप्तिनिश्चयं प्रति यन्मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वमुक्तं तेनेदं **दीधितिकारी**यव्याख्यानं विरुद्धमिति

**तत्सन्देहे सत्यर्थसन्देहेन अर्थानिश्चयादेवाप्रवृत्तेस्तत्र तयोरप्रतिबन्धकत्वादिति चेत्, न ।**

---

वाच्यम्, तत्र मतान्तरेणैव **मणिकाराणां** व्यभिचारसंशयस्य व्याप्तिनिश्चयप्रतिबन्धकत्वोक्तेर्विरोधाभावात् । एवञ्च दीधितिकारमतानुसारेणेष्टसाधनताज्ञानधर्मिकप्रमात्वव्यतिरेकज्ञानत्वावच्छिन्नप्रतिवन्धकतानिरूपितप्रतिबध्यतावत्त्वात्मकस्य हेतोः प्रवृत्तौ स्वरूपासिद्धत्वेन न तेन हेतुना बहुवित्तायासस्थलीयप्रवृत्ताविष्टसाधनताज्ञानधर्मिकप्रमात्वनिश्चयजन्यत्वं प्रमाणितं भवतीति फलितम् ।

एतन्मते व्याप्यत्वव्यतिरेकज्ञानत्वेनापि नानुमितिप्रतिबन्धकत्वं मणिमन्त्रादिन्यायेन स्वतन्त्रं कल्पितमस्ति । व्याप्तिव्यतिरेकनिश्चयस्य बाधमुद्रया व्याप्तिबुद्धौ प्रतिबन्धकत्वसत्त्वात्तादृशव्यतिरेकनिश्चयदशायां व्याप्तिज्ञानाभावादेवानुमितेरनुत्पादः स्यात्, व्याप्तिसंशयदशायाञ्च विपक्षबाधकतर्कानवतारपर्यन्तं तत्संशयानामेव धारोत्पत्स्यते । तथा च व्याप्तिनिश्चयात्मकहेतोरभावादेवानुमित्यनुत्पादस्य निर्वाहो बोध्यः । सति च विपक्षबाधकतर्के संशयसामग्रया विघटनादनन्तरं स्वकारणादेव व्याप्तिनिश्चयः स्यात्, ततोऽनुमितिरपि समुत्पद्यत एवेति भावः ।

इष्टसाधनताज्ञानधर्मिकप्रमात्वसंशयस्य प्रमात्वव्यतिरेकनिश्चयस्य च यदि प्रवृत्तिं प्रति प्रतिबन्धकता स्यात्तदैव पूर्वोक्तसामान्यव्याप्त्या प्रवृत्ताविष्टसाधनताज्ञानधर्मिकप्रमात्वनिश्चयस्य कारणत्वं प्रमाणितं स्यात् । इदानीं ग्रन्थकारः प्रमात्वसंशयतद्व्यतिरेकनिश्चययोः प्रवृत्तिप्रतिबन्धकत्वं निरस्य प्रवृत्तौ प्रमात्वनिश्चयजन्यत्वसाधकमनुमानं निषेधति—**तत्सन्देहे सत्यर्थसन्देहेनेत्यादिना** ।

ननु प्रवृत्तौ तद्विषयधर्मिकेष्टसाधनतानिश्चये प्रमात्वसंशयादेर्यदि तां प्रति प्रतिबन्धकत्वं न स्यात्, तदा तादृशनिश्चयधर्मिकप्रमात्वसंशयादेः सत्त्वे तत्र प्रवृत्तिरुत्पद्यतां बाधाभावादिति चेत्, न, इत्याह—**अर्थानिश्चयादेवाप्रवृत्तेस्तत्रेत्यादि** । तथा हि इष्टसाधनतानिश्चयधर्मिकाप्रामाण्यज्ञानस्य स्वविषयीभूतज्ञानीयविषये इष्टसाधनत्वस्य संशायकत्वेन कारणीभूतस्येष्टसाधनत्वनिश्चयस्याभावादेव बहुवित्तायाससाध्येऽप्रवृत्तिरुपपद्यत इति न तदर्थं प्रमात्वसंशयतद्व्यतिरेकनिश्चययोः स्वातन्त्र्येण प्रवृत्तिं प्रति प्रतिबन्धकत्वं कल्पनीयमिति भावार्थः ।

न च प्रमात्वसंशयादिस्थले प्रवृत्त्यनुत्पादस्योभयवादिसिद्धत्वेन तस्य चानुत्पादस्य प्रमात्वसंशयादेः प्रतिबन्धकत्वकल्पनयापि निर्वाहसम्भवे प्रदर्शितमूलग्रन्थस्य प्रमात्वसंशयादेरप्रतिबन्धकत्वव्यवस्थापकत्वमसङ्गतमिति वाच्यम्, स्वाभावेतरसकलकारणसत्त्वे यत्सत्त्वे यस्य कार्यस्यानुत्पादः, तस्यैव तत्कार्यं प्रति प्रतिबन्धकतायाः

शास्त्रविद्भिरभिप्रेतत्वात्। प्रकृतस्थले चार्थनिश्चयरूपस्य कारणविशेषस्याभावादेव प्रवृत्त्यनुत्पादस्य व्यवस्थापनसम्भवेन न तेन प्रमात्वसंशयादेः प्रवृत्तिप्रतिबन्धकत्वं व्यवस्थापितं भवति।

अथेष्टसाधनत्वनिश्चयधर्मिकप्रमात्वसंशयादिस्थले ग्रन्थकृता यदप्रवृत्तेरुपस्थापनं कृतं तदसङ्गतम्। इच्छादिघटितसामग्र्या इव इच्छासामग्र्या अपि तदितरसामग्रीतोऽधिकबलत्वात्। तथा हि, इष्टसाधनतानिश्चयस्येच्छां प्रति पर्याप्तकारणत्वेन तदनन्तरमिच्छैवोत्पद्येत, न त्विष्टसाधनतानिश्चयधर्मिकप्रमात्वसंशयादिकम्। इच्छायामुत्पन्नायां प्रवृत्तिरपि तदनन्तरं स्यादेव। तथा चावसराभावात्तादृशस्थले प्रमात्वसंशयादिकमनुपपन्नमेवेति चेत्, न। यत्र प्रथमं भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानमनन्तरमिष्टसाधनतानिश्चयस्तादृशस्थले इच्छासामग्र्या अभावेनाप्रवृत्तेः सम्भवदुक्तिकत्वात्। यद्यपि प्रथमं भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानमनन्तरं निश्चय इत्येवंक्रमेण ज्ञानादीनामुत्पत्तिः प्रायशो न दृश्यते, तथापि बाधकाभावेन तादृशस्यापि ज्ञानाद्युत्पत्तिक्रमस्य कल्पयितुं शक्यत्वादिति ध्येयम्।

न चान्वयव्यतिरेकानुविधानस्य कारणताग्राहकत्वाद् इष्टसाधनतानिश्चयधर्मिकप्रामाण्यसंशयाद्यभावस्य चार्थनिश्चयस्यैव प्रवृत्तौ नियतान्वयव्यतिरेकानुविधायित्वादवश्यमेव कारणत्वं स्यादेवञ्च कारणीभूताभावप्रतियोगित्वेन प्रामाण्यसंशयादेः प्रवृत्तिप्रतिबन्धकत्वस्यावश्यं स्वीकरणीयत्वादप्रतिबन्धकत्वकथनमसङ्गतमिति वाच्यम्, अवश्यक्लृप्तकारणताकेनार्थनिश्चयेन प्रामाण्यसंशयाद्यभावस्य प्रवृत्तावन्यथासिद्धत्वात्। प्रामाण्यसंशयाद्यभावस्य प्रवृत्तौ कारणत्वस्वीकारेऽप्यर्थनिश्चयस्यावश्यमेव तत्र कारणत्वं स्वीकार्यमन्यथार्थनिश्चयासत्त्वेऽपि प्रामाण्यसंशयाद्यभावदशायां प्रवृत्त्युत्पत्त्यापत्तेर्वज्रलेपत्वात्। तथा चार्थनिश्चयस्य प्रवृत्तिहेतुत्वमवश्यक्लृप्तमिति तेनान्यथासिद्धत्वान्नियतान्वयव्यतिरेकानुविधायित्वेऽपि प्रामाण्यसंशयाद्यभावस्य प्रवृत्तावकारणत्वमेवं कारणीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वमपि प्रामाण्यसंशयादेर्निरस्तमेवेति बोध्यम्।

न च पूर्वोक्तयुक्त्या प्रामाण्यसंशयादेः प्रवृत्तावप्रतिबन्धकत्वे भाविज्ञानमप्रमेत्याद्यप्रामाण्यज्ञानानन्तरोत्पन्नादर्थनिश्चयाद् विषयसंशयोत्पत्तिक्षणे तं बाधित्वा प्रवृत्तिरुत्पद्यतां प्रवृत्तिकारणस्यार्थनिश्चयस्य पूर्वं सत्त्वादिति वाच्यम्, अप्रामाण्यज्ञानानास्कन्दितस्यैवार्थनिश्चयस्य प्रवृत्तौ कारणत्वाभ्युपगमात्।

न चैवं प्रामाण्यसंशयादेः प्रवृत्तिप्रतिबन्धकत्वमावश्यकमेव। अर्थनिश्चयगतप्रवृत्तिकारणतायामवच्छेदककोटिप्रविष्टाप्रामाण्यज्ञानाभावस्य प्रवृत्तिप्रयोजकत्वेन तत्प्र-

**प्रामाण्यसंशयानन्तरं 'इदमित्थमेव' इत्यवधारणस्य निष्कम्पप्रवृत्त्यङ्गस्य प्रामाण्यनिश्चयाधीनत्वात् ।**

---

तियोगित्वस्याप्रामाण्यज्ञाने प्रामाण्यसंशयतद्व्यतिरेकनिश्चयात्मके सत्त्वादिति प्रयोजकीभूताभावप्रतियोगित्वस्यापि प्रतिबन्धकत्वादिति वाच्यम्, कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वस्वरूपत्वस्वीकारात् । प्रदर्शितस्याप्रामाण्यज्ञानाभावस्य कारणतावच्छेदकत्वेन प्रवृत्तिप्रयोजकत्वेऽपि तां प्रत्यकारणत्वात् ।

इदानीं प्रवृत्तिविशेषे प्रामाण्यनिश्चयस्यापेक्षामभ्युपगमवादेनोररीकृत्य समाधातुमुपक्रमते । **प्रामाण्यसंशयानन्तरमिदमित्थमेवेत्यवधारणस्य निष्कम्पप्रवृत्त्यङ्गस्य प्रामाण्यनिश्चयादित्यादि** । भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानानन्तरमुत्पन्नस्येष्टसाधनतानिश्चयस्योत्तरं तदेव पुनरिष्टसाधनताया निश्चयः स्यात्, यदि पूर्वोक्तनिश्चयधर्मिणि कदाचित् प्रामाण्यस्य निश्चयः समुत्पन्नः स्यात् । तथा चेष्टसाधनताज्ञानधर्मिकप्रामाण्यसंशयानन्तरोत्पन्नप्रवृत्तिस्थले कारणीभूतेष्टसाधनतानिश्चयस्योत्पत्त्यर्थं प्रामाण्यनिश्चयस्यावश्यमपेक्षणीयत्वेन प्रामाण्यनिश्चयासम्भवे ग्रन्थाध्ययनप्रवृत्त्यसम्भवेन स्वाध्ययनाधीनपदार्थतत्त्वज्ञानजन्यत्वरूपसम्बन्धस्य निःश्रेयसे असत्त्वेन फलासम्बद्धत्वाच्छास्त्रमनादरणीयमिति पूर्वपक्षाभिप्रायः ।

यदिदमुक्तं ग्रन्थकृद्भिः प्रामाण्यसंशयानन्तरमुत्पन्नायां निष्कम्पप्रवृत्तावर्थनिश्चयद्वारा प्रामाण्यनिश्चयस्यापेक्षा वर्तते तदिदानीं परीक्ष्यते । प्रवृत्तावुपयोगित्वेन योऽयमर्थनिश्चयो ग्राह्यः स खलु इष्टसाधनतानिश्चयात्मक एव स्यात्, तद्बहिर्भाविणार्थनिश्चयस्य प्रवृत्तावनुपयोगात् । यस्मिन् ज्ञानधर्मिणि प्रामाण्यस्य संशयः स्यात्, तत् खलु ज्ञानं निश्चयात्मकमेव स्यात्, संशयात्मके ज्ञाने प्रामाण्यसन्देहस्यानतिप्रयोजनकत्वात् ।

तथा हि रजतमिदं मदिष्टसाधनमित्याकारकस्यार्थनिश्चयस्य प्रथममुत्पत्ताविच्छाचरमकारणस्योपस्थितत्वेनेच्छाघटितसामग्र्या इवेच्छासामग्र्या अपि सर्वतो बलवत्त्वेन सत्यामपि ज्ञानधर्मिकाप्रामाण्यज्ञानसामग्र्यामप्रामाण्यज्ञानं बाधित्वा तादृशार्थनिश्चयानन्तरमिच्छैवोत्पद्यतेतराम् । ततश्च तत्र विनैव प्रामाण्यनिश्चयं प्रवृत्तिरप्युत्पद्येतेति न तत्स्थलं प्रामाण्यसंशयानन्तरकालीनप्रवृत्तौ दृष्टान्तत्वेन ग्रहणयोग्यम् ।

यत्र च भाविज्ञानमप्रमेत्यप्रामाण्यनिश्चयानन्तरं प्रकृतशास्त्राध्ययनं मोक्षसाधनमित्येवमिष्टसाधनतानिश्चयस्तत्रेष्टसाधनतानिश्चयस्याऽप्रामाण्यज्ञानानास्कन्दितत्वा-

भाववत्त्वेनेच्छात्मकफलोपधानाभावादेव तादृशस्थले प्रवृत्त्युत्पत्तेरनापाद्यत्वमिच्छायाः प्रवृत्तिजनकत्वस्य सर्ववादिसम्मतत्वात्, प्रदर्शितस्थलस्याप्रामाण्यसंशयासम्बलितत्वाच्च। तथा च न तत्स्थलमप्रामाण्यसंशयानन्तरकालीनप्रवृत्त्युपयोगित्वेन ग्रहीतुं शक्यम्। यदि च भाविज्ञानं प्रमा न वेत्याकारकः प्रामाण्यसंशयो गृह्येत, तदापीच्छाभावादेवाप्रवृत्तिनिर्वाहेण प्रामाण्यसंशयानन्तरकालीनप्रवृत्तावर्थनिश्चायकत्वेन प्रामाण्यनिश्चयस्यावश्यकत्वप्रदर्शनमसम्भवमेव स्यादिति चेत्, न, प्रामाण्यसंशयानन्तरमित्यादिग्रन्थेन प्रामाण्यसंशयानन्तरमिच्छोत्पत्तिकारणीभूतार्थनिश्चये प्रामाण्यनिश्चयापेक्षाद्वारा तादृशस्थलीयप्रवृत्तावर्थनिश्चये प्रामाण्यनिश्चयापेक्षाया एव विवक्षितत्वात्। एतादृशमपि स्थलं नानायासेनानुभविकमित्यभ्युपगमवादेनैव मणिकृद्भिः प्रवृत्तौ प्रामाण्यनिश्चयापेक्षाकथनमिति ध्येयम्।

**ननु तत्सन्देहे सत्यर्थसन्देहेनार्थानिश्चयादेवाप्रवृत्तेस्तत्र तयोरप्रतिबन्धकत्वा**दित्यनेन ग्रन्थेन इष्टसाधनताज्ञानधर्मिकप्रामाण्यनिश्चयस्य बहुवित्तायाससाध्यस्थलीयप्रवृत्तावपि यद् हेतुत्वमुक्तं तदसमीचीनमिव प्रतिभाति। तथा हि यागः स्वर्गसाधन इत्याद्याकारकशाब्दज्ञाने यदा प्रामाण्यसन्देहस्तदाप्यर्थनिश्चयस्य सत्त्वेन यागे पुरुषस्य प्रवृत्तिरापद्यते। अतस्तदापत्तिवारणार्थं प्रामाण्यनिश्चयस्यावश्यं प्रवृत्तिविशेषे हेतुत्वमावश्यकम्। एवञ्च प्रदर्शितस्थले प्रामाण्यनिश्चयात्मककारणस्यानुपस्थित्यैव प्रवृत्त्यापत्तेर्वारणं सुकरं स्यात्। न चाप्रामाण्यज्ञानाभावस्यार्थनिश्चयस्येव पृथक्कारणत्वकल्पनादेव तत्र प्रवृत्त्यापत्तेर्निराससम्भवे तदर्थं प्रामाण्यनिश्चयस्य कारणत्वकल्पनमनावश्यकमिति वाच्यम्, तदभाववद्विशेष्यकत्वनिरूपिततत्प्रकारकत्वघटितस्याप्रामाण्यस्याभावघटितत्वेन तदभावस्य कारणत्वेऽधिकाभावघटितत्वेन गौरवापत्तेस्तदपेक्षया लघुतरस्य प्रामाण्यनिश्चयस्यैव प्रवृत्तिविशेषे कारणत्वस्यावश्यकत्वात्।

न च तद्वन्निष्ठविशेष्यकत्वनिरूपिततन्निष्ठप्रकारकत्वघटितप्रामाण्यशरीरेऽभावस्याप्रवेशेऽपि निश्चयत्वस्य संशयान्यत्वघटिततया संशयत्वस्य चान्तर्निविष्टाभावकतया निश्चयस्यापि अप्रामाण्यज्ञानाभावसमशरीरत्वमिति कुतो लाघवमिति वाच्यम्, सम्भावनत्वाख्यविषयताविशेषघटितत्वेन संशयत्वस्य तच्छरीरेऽभावस्याप्रवेशेन निश्चयत्वेन कारणत्वे लाघवानपायात्।

**ननु स्वत एवास्तु तन्निरूपणम् । तथा हि तत्र विप्रतिपत्तयः ।**

---

स्वतःप्रामाण्यवादिनां मतमाश्रित्य समाधातुमाह **ननु स्वत एवास्तु इत्यादि ।** तथा च प्रामाण्यविनिश्चयस्य स्वत एवोत्पादसम्भवादध्ययनप्रवृत्तिहेताविष्टसाधनताज्ञाने प्रामाण्यनिश्चयसत्त्वेनाधिकारिणः शिष्यस्य प्रमाणादिषोडशपदार्थतत्त्वविज्ञानद्वारा चरमदुःखध्वंसात्मकस्यापवर्गस्य सिद्धौ सिद्धो भवति शास्त्रस्य प्रयोजनेनाभिसम्बन्ध इति ग्रन्थाभिप्रायः ।

स्वत इति पदं सर्वनामसु परिगणितात् स्वपदात् पञ्चम्यन्तात् तसिल्प्रत्ययेन व्युत्पन्नमिति साम्प्रदायिकाः, **'स्वतः स्वस्मात् स्वकीयात्'** इति दीधितौ तथैव व्याख्यानात् । अथ सर्वनामसंज्ञकप्रातिपदिकानां पूर्वपरामृष्टार्थाभिधायकत्वं तैर्थिकेषु प्रसिद्धमास्ते । कदा कस्य तीर्थकरस्य किं परामृष्टमस्ति तत् खलु तदीयपङ्क्तिपर्यालोचनयैव निर्णीतं स्यादुपायान्तरस्याभावात् ।

प्रकृते च मणिग्रन्थस्थमिदं स्वपदम्, अतो मणिकारपरामृष्टमेव किञ्चिदभिधेयात् । किञ्चात्र वस्तु मणिकृत्परामृष्टमस्ति, तदपि सन्निहितया मणिपङ्क्त्यैव निर्धारितं स्यात् । द्वेऽत्र सन्निहिते मणिपङ्क्ती दृश्येते । तद्धि प्रमातत्त्वावधारणाधीनं तच्च स्वतः परतो वा न सम्भवतीत्यधस्तादुक्ता एका । ननु स्वत एवास्तु तन्निरूपणमित्यपरा व्यवहिता । प्रथमायां प्रमातत्त्वं तदवधारणञ्च मणिकारस्य परामृष्टत्वेन लभ्येते तदनुसारेण च प्रमातत्त्वं तदवधारणं वा स्वपदस्याभिधेयं स्यात् ।

एतद् द्वयमप्ययुक्तम् । प्रमातत्त्वे तज्ज्ञापकत्वस्य वाद्यनभिप्रेतत्वात् प्रमातत्त्वावधारणस्य च प्रमातत्त्वनिश्चयात्मकस्य प्रमात्वनिर्णयप्रयोजकत्वासम्भवादभेदे प्रयोज्यप्रयोजकभावानङ्गीकारात् । द्वितीयपङ्क्तावपि प्रमात्वस्य तदवधारणात्मकतन्निरूपणस्य वा पङ्क्तिकृतो बुद्धिस्थत्वेन तद्दोषानपायादिति चेत्, न, स्वपदस्यात्र स्वतःप्रामाण्यवादिनां बुद्धिस्थवस्तुपरामर्शकत्वेन सर्वसामञ्जस्यात् । प्राभाकराः खलु स्वाश्रयेण प्रामाण्यं गृह्यत इति मन्यन्ते । अतः प्रामाण्याश्रयीभूतज्ञानस्यैव प्रामाण्यग्राहकत्वेन तेषां बुद्धिस्थत्वादत्रापि तद्बुद्धिस्थतोपलक्षितज्ञानत्वविशिष्ट एव स्वपदस्य वृत्तिर्बोध्या । **भट्टमिश्रयो**र्मते स्वाश्रयग्राहकेन ज्ञानेन प्रामाण्यग्रहाङ्गीकारात् तयोर्मते प्रामाण्याश्रयग्राहकज्ञानस्यैव बुद्धिस्थत्वात् तदुपलक्षितज्ञानत्वविशिष्टे स्वपदस्य वृत्तिराश्रयणीयेति ध्येयम् ।

**साङ्ख्यमते वेदान्तमते** च यथा द्रव्यादिपदार्थसप्तकेभ्यो विजातीयः स्वप्रकाश-चैतन्यात्मकः पदार्थविशेषः स्वीकृतोऽस्ति। **प्राभाकरभाट्ट**मतयोस्तु तादृशः कोऽपि पदार्थो नाङ्गीकृतो दृश्यते, तयोर्मतयोश्चैतन्यस्य निर्विषयत्वान्न्यायादिमतसिद्धज्ञान-पदार्थतस्तस्य वैजात्यं बोध्यम्। **न्यायादिमते** ज्ञानस्य सविषयकत्वनियमात् तन्मतयो-श्चैतन्यस्य स्वभावतो विषयासंसर्गित्वाद् गुणजात्यादिभिरयुक्तत्वाच्चैतन्यस्य द्रव्य-गुणकर्मस्वनन्तर्भावो बोध्यः। असमवेतत्वाच्चैतन्यस्य सामान्यविशेषाभ्यां विजातीयत्वं निष्प्रतियोगिकत्वात् समवायतः सद्रूपत्वाच्चाभावतश्चैतन्यस्य वैलक्षण्यं बोध्यम्। तच्चैतन्यं **साङ्ख्यमते 'पुरुषनाम्ना', वेदान्तमते** च **'ब्रह्म**नाम्ना' व्यवह्रियमाणं दृश्यते। तत्तन्मते च चैतन्यस्य स्वयम्प्रकाशरूपत्वमङ्गीकृतमस्ति। स्वयम्प्रकाशत्वञ्च चैतन्यस्य स्वभिन्नप्रकाशनैरपेक्ष्येण प्रकाशमानत्वरूपं बोध्यम्।

यद्यपि **प्राभाकरमतेऽसङ्गं** निर्विषयञ्च व्याख्यातस्वरूपं चैतन्यात्मकं वस्तु नाङ्गीकृतमस्ति, तथापि स्वयंप्रकाशात्मकं वस्तु स्वीकृतमस्ति। प्राभाकरमते ज्ञानं खलु सविषयकमपि गुणपदार्थेऽन्तर्भूतमपि स्वभिन्नप्रकाशनैरपेक्ष्येण प्रकाशमानतया स्वयं ज्योतिःस्वरूपमेव। साङ्ख्यवेदान्तनययोश्चैतन्यमिव प्राभाकरमते ज्ञानं स्वप्रकाश-स्वरूपं स्वीकृतमस्ति। ज्ञानस्य स्वयंप्रकाशत्वे तस्य निर्विषयत्वासम्भवे च स्वप्रकाश-दशायां तदीया विषया अप्यवश्यमेव प्रकाशिता भवेयुरिति तस्य विषयप्रकाशात्मकत्व-मङ्गीकरणीयं भवति। एतन्मते ज्ञानं स्वीयसविषयकत्वेनेव यथासम्भवं प्रमात्वेनापि सहैव प्रकाशितं भवतीति विषयकत्वस्येव प्रमात्वस्यापि स्वीयप्रकाशे स्वाश्रयातिरिक्तानपेक्षणात् स्वतःप्रकाशत्वं स्वीकृतमस्ति।

**भाट्टमते** ज्ञानं खलु आत्माश्रितो गुणविशेषः। तदेव चैतन्योपलब्धिबुद्धिप्रभृति-नाम्ना व्यवह्रियते। न तु साङ्ख्यवेदान्तसम्मतं चैतन्यमिव किञ्चिद् द्रव्यादिविलक्षणं निर्धर्मकं वस्तु भाट्टमते स्वीकृतमस्ति। ज्ञानस्य गुणपदार्थेऽन्तर्भावात् सविषयकत्वाच्च तत्तन्मतसम्मतचैतन्यपदार्थाद्वैलक्षण्यं तस्य बोध्यम्। एतन्मते ज्ञानस्य स्वयंज्योतिष्ट्वं स्वीकृतं नास्ति। एवमपि विषयप्रकाशात्मकत्वं तस्य भाट्टैरङ्गीकृतम्। तदात्मकत्वाभावे ज्ञानत्वस्यैव व्याहतेः। विषयप्रकाशात्मकस्य ज्ञानगुणस्य भाट्टमते स्वयंज्योतिष्ट्व-मनुव्यवसायगम्यत्वं वाङ्गीकृतं नास्ति। तन्मते ज्ञानमनुमानेन सिद्धं भवति।

मूलकृता विचाराङ्गविप्रतिपत्त्युपस्थापने या रीतिरवलम्बिता, तत्र प्रथमस्थले विधिकोटौ गुरुमिश्रभाट्टमतानि अनुगतरूपेण गृहीत्वा तन्निषेधेन तत्र न्यायमत-माविष्कृतम्। उक्तमतत्रये आत्मस्वरूपे ज्ञानतत्प्रामाण्ययोः प्रकाशे च परस्परं

वैषम्यमस्ति। तानि मतान्यपि न न्यायादिमतवत् सुप्रसिद्धानि। अतो विप्रतिपत्ति-वाक्यव्याख्यातुकामैरस्माभिस्तत्तन्मतानुसारेण आत्मा, ज्ञानम् तद्गतप्रामाण्यावगम-रीतिश्च सप्रमाणमुट्टङ्क्यते। प्राभाकरमते आत्मानः प्रतिक्षेत्रं भिन्नभिन्ना वर्तन्ते। नाद्वैतिनामिव सर्वक्षेत्रेषु तेषामभेदः। नापि ते स्वप्रकाशाः प्राभाकरैः सुषुप्त्यवस्थाया-मात्मप्रकाशस्यापि सर्वथाऽस्वीकारात्। स्वयंज्योतिष्ट्वे सुषुप्तावपि आत्म-प्रकाशापत्तेः। स्वाभाविकस्य आवरणाभिभवयोरसम्भवात्। अतः प्राभाकरमते आत्मस्वरूपं सर्वथा न्यायमतानुरूपम्। ज्ञानगुणवत्त्वेन द्रव्यत्वमपि तेषां नैयायिकाना-मिव सम्मतम्। ज्ञानस्वरूपे तु प्राभाकराणां भट्टनैयायिकाभ्यां वैमत्यमस्ति। तथा हि न्यायमते भाट्टमते च स्वप्रकाशत्वम् अन्यानपेक्षप्रकाशत्वरूपमलीकमेव। तत्तन्मते तादृशं वस्त्वेव नास्ति, यदन्यनैरपेक्ष्येण प्रकाशते।

प्राभाकरमते तु ज्ञानं यद्यपि बुद्ध्युपलब्धिभ्यां नैयायिकानामिवानर्थान्तरम्, तथापि तत् स्वप्रकाशस्वरूपम्। उत्पत्तिक्षणादेव स्वान्यनैरपेक्ष्येण यावदवस्थानं प्रकाशत एव। बुद्धेरपि सापेक्षप्रकाशात्मकत्वे जगदान्ध्यप्रसक्तेः। तथा च बुद्धि-प्रकाशकबुद्धेरपि तत्प्रकाशकज्ञानान्तरात् प्रकाशे आप्रलयमेकस्या बुद्धेः प्रकाशार्थमनन्त-बुद्धिकल्पनायां प्रथमोत्पन्नाया बुद्धेरिदानीमप्यप्रकाशेन प्रलयपर्यन्तं कस्यापि वस्तुनः प्रकाशो न सम्भवति।

प्राभाकरमतसिद्धा संवित् स्वयंप्रकाशापि साङ्ख्यवेदान्तसम्मतचैतन्यादि-विलक्षणैव। एतन्मते तस्या आत्मद्रव्यसमवेतत्वेनोत्पादविनाशप्रतियोगिगुणस्वा-भाव्याङ्गीकारात्। तत्तन्मते च चैतन्यस्यानुत्पन्नविनाशित्वेनागुणस्वाभाव्येन च सिद्धा-न्तितत्वात्। विषयाप्रकाशकत्वे संवित्त्वमेव व्याहन्येतेति संविदो विषयप्रकाशात्मकत्व-मवश्यमङ्गीकार्यम्। अतः प्राभाकरमतेन संविदां विषयप्रकाशकत्वं स्वप्रकाशकत्वं स्वप्रकाशात्मकत्वञ्च सिद्धम्। आश्रयाप्रकाशेऽनात्मभूतायाः संविदः प्रकाशेऽपि कस्येय-मित्यनिर्णयाद् घटादिवदात्मापि अवश्यं संविदि जायमानायां प्रकाशतैव। अतः प्राभा-करमते संवित् त्रिपुटीप्रकाशिकेति राद्धान्तः। तद्वति तत्प्रकारकत्वरूपं प्रामाण्यमपि असति बाधकप्रमाणे स्वाश्रयभूतया व्यवसायात्मकतत्तत्संविदा एव प्रकाशितं भवतीति प्राभाकरा मन्यन्ते।

मिश्रमते स्वयंप्रकाशात्मकं वस्तु नास्त्येव। नैयायिकानामिव मिश्रमतेऽपि अनुव्यवसायेन मानसप्रत्यक्षात्मकेन घटपटादिविषयकं व्यवसायात्मकं ज्ञानं प्रकाश्यते।

## ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं नवा ?

व्यवसायेन घटपटादिविषयाणां प्रकाशाद् अनुव्यवसायेन च व्यवसायात्मकज्ञानप्रकाशात् ताभ्यामेव ज्ञानाभ्यां व्यवहारोपपत्तौ जातायामनुव्यवसायस्य प्रकाशः केन भवतीति पृच्छाया अनवकाशेन तस्य प्रकाशेऽप्रकाशे वा क्षत्यभावात्, न ज्ञानस्य अनुव्यवसाय-प्रकाश्यतावादे अनवस्थया अनिष्टमापतति। एतन्मते आत्मस्वरूपं प्राभाकरमततुल्यम्। ज्ञानानामनात्मत्वमात्मसमवेतगुणत्वञ्च तथैव। अनुव्यवसाये च व्यवसायज्ञानमिव तदाश्रयीभूत आत्मापि तुल्यतया प्रकाशत इति न कस्येदं ज्ञानमिति पृच्छाया अवकाशोऽस्ति। तद्वति तत्प्रकारकत्वरूपं प्रमात्वमपि असति बाधकप्रमाणे अनुव्यवसायादेव निर्णीयत इति तन्मतानुसारेण प्रमात्वस्य स्वतःप्रकाशत्वं बोध्यमिति मिश्राणां सिद्धान्तः।

भाट्टाः खलु स्वयंप्रकाशात्मकं वस्त्वलीकमिति मन्यन्ते। तन्मते प्रमेय-मात्रस्यैव परप्रकाश्यत्वस्वीकारात्। प्राभाकरमताद् मिश्रमताच्चैतन्मते इयान् विशेषः। ज्ञानं न स्वयंज्योतिः, न वा मानसप्रत्यक्षसिद्धम्; ज्ञाततालिङ्गकानुमानेन तस्य अस्तित्वनिर्णयात्, तथा हि घटपटादिविषयकज्ञानं क्रियात्वात् (धात्वर्थत्वात्) स्वविषये घटपटादौ किञ्चित् फलमादधाति। तच्च तन्मते ज्ञाततेति नाम्ना व्यपदिश्यते। ज्ञातता च प्रत्यक्षगम्या। ज्ञाततायाः मानसप्रत्यक्षकाले ज्ञानाश्रयीभूत आत्मापि मानसेनैव प्रत्यक्षेण भासते, घटो मया ज्ञात इत्याद्याकारेण ज्ञाततायाः मनोग्राह्यत्वात्। ज्ञानस्य गुणत्वमनात्मत्वञ्च पूर्वपूर्वमतेन तुल्यमेव। आत्मस्वरूप-मपि पूर्ववदेव बोध्यम्। सुषुप्तौ आत्मनोऽप्यप्रकाशात् न तस्य स्वयंज्योतिष्ट्वं सम्भवति। स्वयंज्योतिष्ट्वप्रतिपादकश्रुतयस्तु आत्मा स्वस्यैव सकाशे प्रत्यक्षतया अवगतो भवति न परेषामित्यर्थे नेतव्याः। ज्ञानञ्च उत्पत्त्यनन्तरं प्रत्यक्षसिद्धया ज्ञाततया लिङ्गेन अनुमितं भवति। ज्ञानानुमानकाले च असति बाधकप्रमाणे तद्वति तत्प्रकारकत्वरूपं प्रमात्वमपि ज्ञातं भवतीति स्वतःप्रकाशत्वं भाट्टा अभिमन्यन्ते।

एतन्मतत्रयसाधारण्येन विधिकोटिमनुगमय्य प्रमात्वस्य स्वतःप्रकाशत्वे विप्रतिपत्तिमाह **ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा** इत्यादि। अत्र यथाक्रमं पञ्च विप्रतिपत्तयः प्रदर्शिताः। तास्वियं प्रथमा। ज्ञान-प्रामाण्यमिति धर्मिनिर्देशः। तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वरूपा विधिकोटिः प्राभाकरमिश्रभाट्टानां त्रयाणां सम्मता। तादृशसामग्रीग्राह्यत्वाभाव-रूपा निषेधकोटिः नैयायिकवैशेषिकयोरभिप्रेता।

ये तु अप्रामाण्यं स्वतः प्रामाण्यं परतो ग्राह्यमिति बौद्धमतमित्याचक्षते, तेषां मते निषेधकोटिर्बौद्धानामपि सम्मता स्यात्। बौद्धमतस्यैवंरूपता नास्माभिस्तदीय-ग्रन्थेषु कुत्रापि साक्षादुपलब्धा। अतोऽस्माकं मते पूर्वोक्तमतत्रयसाधारण्येव विधि-कोटिरिति सिद्धान्तः। तदप्रामाण्याग्राहकेति विशेषणांशस्य विचारोऽग्रे द्रष्टव्यः। तदंश-परिहारेण च यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वमेव विधिकोटिः स्यात्। **ज्ञानग्राहकेति।** ज्ञानविषयकज्ञानजनकेति तदर्थः। जनकत्वञ्च सामग्रीविशेषणम्। तथा च यावज्ज्ञान-विषयकज्ञानजनकसामग्रीजन्यज्ञानविषयत्वं पर्यवसिता विधिकोटिः।

**प्राभाकरमते** ज्ञानस्य स्वयंज्योतिष्ट्वात् व्यवसायात्मकं ज्ञानमेव ज्ञानविषयक-ज्ञानत्वेन गृहीतं स्यात्। तज्जनिका च सामग्री व्यवसायोत्पादिका सामग्री एव। तादृशसामग्रीजन्यज्ञानत्वेनापि तदेव व्यवसायात्मकं ज्ञानं गृहीतं स्यात्। तद्विषयत्वस्य व्यवसायगतप्रामाण्ये सत्त्वात्, प्राभाकरमतानुसारेण ज्ञानप्रमात्वे विधिकोटेः प्रसिद्धि-र्बोध्या।

विप्रतिपत्तौ चतुर्धा ज्ञानस्य प्रवेशो दृश्यते। द्विर्ज्ञानपदाभ्यां द्विश्च ग्रहपदाभ्याम्। ज्ञानप्रामाण्यमिति धर्मिकोटौ ज्ञानपदेन विधिकोटौ यावज्ज्ञानग्राहकेति ज्ञानपदेन तत्रैव च ग्राहकेतिपदान्तर्गतग्रहधातुना तत्रैव च पुनः ग्राह्यपदान्तर्गतग्राहिणा। तेषु धर्मिकोटौ ज्ञानत्वेन ज्ञानप्रवेशस्य व्यावृत्तिर्विचार्यते। तस्यात्रवेशे प्रामाण्यं तदप्रामाण्याग्राहक-यावज्ज्ञानग्राहकसामग्रीग्राह्यं न वेत्याकारेण विप्रतिपत्तिः पर्यवसिता भवति।

एवञ्च सति प्रमाणपदस्य करणल्युटा भावल्युटा च व्युत्पत्तिसम्भवेन तत्रापि च करणार्थ एव बहुलव्यवहारात् प्रामाण्यपदेन प्रमाकरणत्वं प्रथमतो गृहीतं भवति। करणत्वञ्च असाधारणकारणत्वे पर्यवसितमिति तद् इन्द्रियतत्सन्निकर्षादौ विद्यते। तादृशप्रामाण्यस्य प्राभाकरैर्ज्ञानग्राहकसामग्रीग्राह्यत्वानङ्गीकाराद् धर्मिणि तन्मतेन प्रदर्शितं स्वतोग्राह्यत्वं बाधितं भवतीति प्रामाण्यविशेषणतया ज्ञानपदेन ज्ञाननिष्ठत्व-मुपस्थापितम्। ज्ञानस्य प्रामाण्यमिति षष्ठीसमासनिष्पन्नत्वेन ज्ञानप्रामाण्यपदान्तर्गतं ज्ञानपदं ज्ञाननिष्ठार्थे लाक्षणिकम्। एवञ्च सति ज्ञाननिष्ठप्रामाण्यस्य धर्मितया पर्य-वसानात् प्रामाण्यपदं भावव्युत्पत्त्या निष्पन्नत्वेनावश्यं ग्रहणीयम्। तथा च प्रमात्वमेव विप्रत्तिपत्तौ धर्मित्वेन पर्यवसितं भवति प्रमात्वात्मकप्रामाण्यस्य प्राभाकरैः ज्ञानग्राहक-सामग्रीग्राह्यत्वाङ्गीकारात् तन्मते बाधपरिहारो बोध्यः।

यद्यपि ज्ञानपदमपि भावल्युटा करणल्युटा च व्युत्पन्नं भवितुमर्हति, तथापि प्रसिद्ध्यनुसारेण भावार्थकत्वमेव तत्पदस्य ग्रहणीयतया तत्समानाधिकरणप्रामाण्यपदस्यापि भावार्थ एव अवश्यं ग्राह्यत्वाद् ज्ञानपदसन्निधानात् प्रमात्वरूपमेव प्रामाण्यं विप्रतिपत्तौ धर्मीति बोध्यम् ।

नन्वेवमपि व्याप्तिज्ञानपदश्रवणादिगतानुमितिशाब्दादिकरणत्वस्य ज्ञानगतत्वाद् धर्मिणि प्रविष्टतया तादृशप्रमाकरणत्वस्य प्राभाकरादिभिरपि स्वतोग्राह्यत्वानङ्गीकाराद् अंशतो बाधस्तदवस्थ इति तत्परिहारार्थं प्रामाण्यपदस्य प्रमात्वार्थकत्वमवश्यं ग्राह्यम् । एवञ्च धर्मिणि ज्ञानपदमव्यावर्तकमिति वाच्यम् ।

अत्रोच्यते । तद्वति तत्प्रकारकत्वं विशेष्यावृत्त्यप्रकारकत्वम्, अबाधितानधिगततार्थविषयकत्वं वेति भिन्नं भिन्नं प्रमात्वं स्वीकृतमस्ति । एषान्तु केवलं तद्वति तत्प्रकारकत्वरूपं प्रमात्वमेव प्राभाकरादिमते स्वतोग्राह्यम् । अन्येषां नानाविशेषणघटितत्वेन पूर्वोत्पन्नविशेषणज्ञानसापेक्षग्राह्यतया स्वतोग्राह्यत्वासम्भवात् । तद्वति तत्प्रकारकत्वञ्चाविसंवादिन्यामिच्छायामपि अस्ति । इच्छागतस्य च तस्य तादृशप्रामाण्याश्रयेच्छाग्राहकेणाग्रहणाद् बाधवारणार्थं तद्वति तत्प्रकारकत्वस्य ज्ञाननिष्ठत्वेनावश्यं विशेषणीयत्वाद् ज्ञानपदं सप्रयोजनमिति ध्येयम् ।

अत्र केचित् पक्षकुक्षिप्रविष्टं प्रामाण्यपदं भावविहितल्युट्प्रत्ययनिष्पन्नत्वेनैव गृह्णन्ति । प्रकर्षद्योतकोपसर्गयोगात् माधातुः प्रकृष्टां मतिमुपस्थापयति । विशेष्यावृत्त्यप्रकारकत्वादिनानाप्रकर्षाणां मध्ये प्रकरणबलात् तद्वति तत्प्रकारकत्वरूपप्रकर्षयुक्तमतिरेवात्र प्रमाणपदार्थः । तदुत्तरतद्धितेन च तद्वति तत्प्रकारकत्वविशिष्टज्ञानत्वमुपस्थाप्यते । एवञ्च सति तादृशं ज्ञानत्वं प्रामाण्यपदेन विप्रतिपत्तौ धर्मित्वेन लब्धं भवति । व्युत्पत्तिलभ्यस्य तादृशार्थस्य ज्ञानातिरिक्तेऽवर्तमानत्वाद् ज्ञानपदं निष्प्रयोजनं भवतीति विचारयन्तो धर्मिप्रविष्टस्य विशेष्यीभूतज्ञानत्वांशस्य स्वतःप्रकाशत्वविचारेऽनुपयोगात् तद्वर्ज्यं तद्वति तत्प्रकारकत्वरूपं प्रामाण्यमेव विप्रतिपत्तौ धर्मि स्यात् । धर्मितावच्छेदकीभूततादृशप्रकारकत्वत्वेनानुगतस्य घटत्वादिमति घटत्वादिप्रकारकस्य कस्यापि इच्छायामपि सत्त्वाद् इच्छागततादृशप्रकारकत्वस्य च कस्मिन्नपि मते स्वतःप्रकाशत्वाभावाद् अंशतो बाधः स्यादिति तद्वारणाय ज्ञानपदमित्याहुः ।

एतदसमीचीनमिव प्रतिभाति । तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकेतिसाध्यकुक्षिप्रविष्टज्ञानस्यावश्यं पक्षीभूतप्रामाण्याश्रयत्वेन विवक्षणीयतया ज्ञानगततादृशप्रकारकत्वस्य अर्थतो लाभेन तदर्थं धर्मिणि पृथग्ज्ञानपदप्रवेशे प्रयोजनाभावात् । अन्ये तु प्रामाण्य-

मिति प्रामाण्यपदार्थं इत्यर्थः। तथा च प्रामाण्यपदार्थत्वेनैव धर्मित्वं बोध्यम्, न तद्वति तत्प्रकारकत्वत्वेन। प्रामाण्यपदार्थत्वञ्च प्रमाकरणत्वे विशेष्यावृत्त्यप्रकारत्वादौ च वर्तत इति तेषामपि धर्मिण्यन्तर्भावः स्यात्। तत्र च तदप्रामाण्याग्राहकेत्यादिविधिकोटेरभावाद् अंशतो बाध इति तन्निवृत्त्यर्थं धर्मिकुक्षौ ज्ञानपदप्रयोगः। न च प्रमाकरणत्वस्य विशेष्यावृत्त्यप्रकारत्वस्य च प्रामाण्यपदप्रतिपाद्ययोर्व्याप्तिज्ञानादिवृत्तितया च पक्षकुक्षिनिःक्षिप्तत्वात् तत्र च विधिकोटेरसत्त्वाद् ज्ञानपदप्रवेशेऽप्यंशतो बाधस्तदवस्थ एवेति वाच्यम्, ज्ञानपदस्यात्र प्रवृत्तिकारणीभूतज्ञानविषये लाक्षणिकत्वात्। प्रवृत्तिं प्रति च तद्वति तत्प्रकारकत्वरूपप्रामाण्यविषयकज्ञानस्यैव हेतुत्वाद् बहुवित्तायाससाध्यस्थलीयप्रवृत्तिहेतुभूतज्ञानविषयीभूतं यत् प्रामाण्यपदप्रतिपादितं वस्तु, तस्यैव धर्मित्वान्नांशतः सिद्धसाधनमित्याचक्षिरे।

वस्तुतस्तु घटत्ववति घटत्वप्रकारकत्वं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीगाह्यं न वेत्याकारिकैव विशिष्य विप्रतिपत्तिर्बोध्या। ज्ञानप्रामाण्यमिति तु तादृशधर्मिणो लाभाय परिचायकमेव; न तु यत्तदादिघटितो ज्ञानवृत्तित्वादिविशेषितश्च धर्मी विप्रतिपत्तौ प्रवेशनीयः। तथा सति कस्या अपि तद्वति तत्प्रकारकत्वव्यक्तेः स्वाश्रयज्ञानग्राहकयावत्सामग्रीग्राह्यत्वाभावेन विधिकोटेरेवाप्रसिद्धेर्धर्मिणस्तत्पदघटितत्वे घटत्ववति घटत्वप्रकारकत्वस्येव पटत्ववति पटत्वप्रकारकत्वस्यापि युगपदेव ग्रहणसम्भवेन तादृशस्वाश्रयग्राहकयावत्सामग्रीजन्यज्ञानस्य कुत्राप्यभावात्। एवञ्च ज्ञानत्वादिपदार्थानां व्यावृत्तिप्रदर्शने प्रश्न एव नावतरति तेषां धर्मिण्यप्रविष्टत्वादिति मादृशाः। घटत्ववति घटत्वप्रकारकत्वमपि न तादृशप्रकारकत्वत्वेन ज्ञानेच्छादिसाधारणतया अनुगमय्य ग्रहणीयम्। तथा सति स्वाश्रयत्वेन इच्छाया अपि ग्रहणसम्भवात् तत्तज्ज्ञानग्राहकयावत्सामग्रीग्राह्यत्वस्यापि अप्रसिद्धत्वेन विधिकोट्यप्रसिद्धेस्तादवस्थ्यात्। एवञ्च समानाकारकज्ञानीयतादृशप्रकारकत्वानां ज्ञानभेदे, विभिन्नानां प्रत्येकमेव तत्तत्प्रकारकत्वं विप्रतिपत्तौ धर्मित्वेन ग्राह्यम्। न चैवमननुगम इति वाच्यम्, मतत्रयाणामनुगमेन विप्रतिपत्तिप्रदर्शनस्यैव ग्रन्थकृतामभिप्रेतत्वात्। धर्मिणामननुगमेऽपि मणिकाराभिप्रायस्य व्याघाताभावादिति सर्वं चतुरश्रम्।

यद्यपि घटत्ववति घटत्वप्रकारकत्वत्वेनानुगतानां समानाकारकविभिन्नेच्छाज्ञानीयानां घटत्ववति घटत्वप्रकारकत्वानां धर्मित्वेऽपि स्वाश्रयेच्छाज्ञानानां प्रत्येकं ग्राहिका यावत्यः सामग्र्यस्तज्जन्यस्य कस्यापि ज्ञानग्रहस्याप्रसिद्धत्वेऽपि तादृशसामग्रीव्यापकत्वस्य स्वग्राहकत्वे निवेशेन घटत्ववति घटत्वप्रकारकत्वं स्वाश्रयज्ञान-

ग्राहकसामग्रीत्वव्यापकस्वग्राहकताकं न वेति विप्रतिपत्तिः सम्भवति। साध्यकोटा-वुभयत्र स्वपदं धर्मिपरं बोध्यम्। एवञ्च तादृशत्रिभिन्नसामग्रीणां प्रत्येकं घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्यग्राहकत्वस्य सत्त्वान् नाप्रसिद्धिनिबन्धनो दोषः।

तथाप्येतदसमीचीनमेव प्रतिभाति। तथा हि, तादृशप्रकारत्वाश्रयीभूतं यद् घटविषयकं ज्ञानं तद्विषयकग्रहजनकसामग्रीत्वेन यथा प्राभाकरमते तस्यैव व्यवसायात्मकघटज्ञानस्य उत्पादकसामग्र्या ग्रहणं भवति तथा अतीततज्ज्ञान-विषयकस्मरणशाब्दादिसामग्र्या अपि ग्रहणं स्यात् तादृशस्मरणशाब्दादि-सामग्र्यां घटत्ववति घटत्वप्रकारकत्वग्राहकत्वासत्त्वेन स्वग्राहकत्वस्य तादृश-सामग्रीत्वव्यापकत्वाभावाद् विधिकोटेरप्रसिद्ध्या सामग्र्यां यावत्त्वप्रवेशासम्भवः। ये तावत् प्राभाकरादयो ज्ञानप्रामाण्यस्य स्वतःप्रकाशत्वमङ्गीकुर्वन्ति तेषां मतेष्वपि न सर्वत्र ज्ञानविषयकज्ञानेषु स्वविषयीभूतज्ञानानां प्रामाण्यं प्रकाशते। प्राभाकरमते उत्पन्नं ज्ञानं स्वयं स्वमिव स्वगतप्रामाण्यमपि प्रकाशयति इति सिद्धान्तितम्। तन्मतेऽपि स्वयंप्रकाशात्मकानां ज्ञानानां कालान्तरे स्मरणमनुमानं वा न स्वीकृतमस्ति। स्मरणा-द्यात्मकेषु ज्ञानग्रहणेषु तद्विषयीभूतं ज्ञानाप्रामाण्यं ज्ञानोत्पत्तिकाले प्रकाशितमपि स्मरणादिकाले अप्रकाशितं स्थातुमर्हति। तथा च तत्र तत्र ज्ञानग्राहकसामग्रीषु प्रामाण्यग्राहकत्वस्यासत्त्वान् न तस्य तादृशसामग्रीत्वव्यापकत्वम्। एवं मिश्रादि-मतेष्वपीति स्वयमूहनीयम्।

एके तु मिश्रादिमते अगृहीतप्रामाण्यकज्ञानीयप्रमात्वविशेषे बाधवारणाय धर्मिणि ज्ञानपदमित्याहुः। तच्च ज्ञातरूपार्थे लाक्षणिकम्। एवञ्च ज्ञातस्यैव प्रमात्व-विशेषस्य पक्षत्वान् न तद्दोष इति। तदप्यपेशलम्। मिश्रादिमते अप्रमात्वग्राहकासमव-धानदशायामनुव्यवसायादिना ज्ञानप्रकाशकाले प्रमात्वप्रकाशस्यावश्यं स्वीकारेण तादृशं प्रमात्वमेवाप्रसिद्धं यस्य अप्रमात्वाग्राहकतज्ज्ञानग्राहकसामग्रीदशायां प्रकाशो न भवति। तज्ज्ञानस्याप्रकाशे तु तत्प्रमात्वात्मकधर्मिण एवाप्रसिद्धत्वेन तत्र बाधावतारप्रश्नस्यै-वानवकाशादिति परमार्थः। न च भाविज्ञानं निष्प्रकारकमित्येवं बाधनिश्चयसत्त्वे अप्रमात्वग्राहकस्यासमवधानदशायामनुव्यवसायादिना ज्ञानस्य प्रकाशेऽपि प्रमात्वं प्रकारकत्वघटिततया अप्रकाशितमेव स्यादिति तादृशज्ञानग्रहणस्थले मिश्रादिमते बाधः स्यादेवेति वाच्यम्—अनुभवविरोधात्। तथा हि तादृशबाधदशायां ज्ञानानामनुव्यव-सायस्वीकारे सप्रकारकत्वप्रकाशवर्ज्यो धर्मिमात्रप्रकाशात्मक एव स्यात्। ज्ञानस्य ताद्रूप्येण प्रकाशेऽनुभवविरोधस्य सर्वजनस्वीकृतत्वादित्यलमतिपल्लवितेन।

साध्यकोटौ तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकेति यावत्पदस्य प्रयोगो दृश्यते। तदुपस्थापितयावत्त्वञ्च ज्ञानग्राहकेतिप्रथमज्ञानपदार्थे ग्राहकेतिग्रहधात्वर्थे ग्राहकसामग्र्यां ग्राह्येति चरमग्रहधात्वर्थे वा विशेषणं भवितुमर्हति। प्रथमज्ञाने यावत्त्वनिवेशे तु तदप्रामाण्याग्राहकानि यावन्ति ज्ञानानि तद्ग्राहकसामग्रीग्राह्यत्वं विधिकोटिः स्यात्। एवञ्च सा अप्रसिद्धा भवति, कस्या अपि ज्ञानग्राहकसामग्र्याः यावज्ज्ञानग्राहकत्वाभावात्। अतस्तद्घटितं तादृशग्राह्यत्वमपि सुतरामप्रसिद्धं भवति। ग्राहकेति ग्रहधात्वर्थे यावत्त्वस्य प्रवेशे तु तदप्रामाण्याग्राहका यावन्तो ज्ञानग्रहास्तज्जनकसामग्रीग्राह्यत्वमेव विधिकोटिः। एवमपि तत्कोटिरप्रसिद्धैव भवति। कस्या अपि सामग्र्यास्तादृशयावद्ग्रहजनकत्वासम्भवात्। सामग्र्यां तस्य विशेषणत्वे तु तदप्रामाण्याग्राहिका ज्ञानग्राहिका यावत्यः सामग्र्यस्तद्ग्राह्यत्वं विधिकोटिर्भवति। एवमपि अप्रसिद्धसाध्यतैव दोषः स्यात्। ज्ञानग्राहिकाभिर्ज्ञानिप्रत्यक्षानुमानशाब्दबोधसमग्रीभिः यावतीभिः कस्यापि ग्रहस्याजननात् तादृशसामग्रीग्राह्यत्वमप्रसिद्धमेव। अतः ग्राह्यत्वमिति चरमग्रहधात्वर्थे एव यावत्त्वस्य अन्वय एष्टव्यः। एवञ्च तदप्रामाण्यग्राहकज्ञानग्राहकसामग्रीजन्या यावन्तो ग्रहास्तत्प्रत्येकग्राह्यत्वं तादृशग्रहत्वव्यापकविषयताकत्वं विधिकोटेः परिनिष्ठितं रूपं स्यात्। प्राभाकरमते यावद्ग्रहत्वेन स एव व्यवसायात्मको ग्रहः, मिश्रमते अनुव्यवसायात्मको ग्रहः, कुमारिलमते ज्ञाततालिङ्गकानुमित्यात्मको ग्रहो ग्रहणीयः। तद्विषयत्वस्य तादृशग्रहत्वव्यापकविषयताकत्वस्य वा पक्षीभूतघटत्ववति घटत्वप्रकारकत्वे सत्त्वाद् विधिकोटिप्रसिद्धिः सुगमा। न्यायमते पक्षे तादृशयावद्ग्रहविषयत्वस्य तादृशग्रहत्वव्यापकविषयताकत्वस्य वा असत्वात् निषेधऽकोटिरपि सरलैवेति बोध्यम्।

ननु सामग्र्यां यावत्त्वनिवेशपक्षे यावत्सामग्रीजन्यस्य कस्यापि ग्रहस्याप्रसिद्ध्या या साध्याप्रसिद्धिः पूर्वं प्रदर्शिता अत्रापि पक्षे सास्त्येव। सामग्रीपदस्य यावत्कारणपरत्वात्। तथा हि घटत्ववति घटत्वप्रकारकत्वं स्वाश्रयग्राहकयावत्कारणजन्यग्रहविषय इत्येवमत्र विधिकोटिः स्यात्। अनुव्यवसायानुमितिशाब्दात्मकज्ञानग्रहाणां यावन्ति कारणानि तज्जन्यस्य कस्यापि ग्रहस्यासम्भवादिति चेन्न। सामग्रीपदस्य तत्तत्कार्यव्यक्तिनिरूपितकारणसमुदायपरत्वात्। एवञ्च कस्यापि ज्ञानविषयकज्ञानात्मककार्यस्य उत्पत्त्यर्थमपेक्षितानि यावन्ति कारणानि तज्जन्यग्रहत्वेन तादृशयावत्कारणसापेक्षपूर्वोक्तज्ञानविषयकग्रहविशेषस्य ग्रहणसम्भवेन तद्विषयत्वस्य प्राभाकरादिमते तत्तत्प्रामाण्यात्मकधर्मिणि सत्त्वाद् विधिकोटिप्रसिद्धिः।

न च प्राभाकरादिमते ज्ञानस्य स्वप्रकाशत्वानुव्यवसायगम्यत्वज्ञाततालिङ्गकानुमितिप्रकाश्यत्वस्वीकारेऽपि तत्तन्मते अतीतादिज्ञानानां स्मरणमनुमानं शाब्दं वा ज्ञानं

ज्ञानभ्युपगतमस्ति। स्मरणाद्यात्मकेषु ज्ञानविषयकज्ञानेषु विषयीभूतज्ञानानां प्रामाण्यं न प्रकाशत इत्यपि तेषामभिमतम्। एवञ्च स्वाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वस्य पक्षीभूतप्रामाण्ये असत्त्वाद् विधिकोटेर्बाध इति वाच्यम्। अतीतादिज्ञानानामुत्पत्तिसमये तदव्यवहितानन्तरमनुव्यवसाये परवर्तिज्ञाततालिङ्गकानुमाने वा यदा तेषां ग्रहणमासीत् तदा तद्ग्रहे तदीयप्रामाण्यस्याप्यवश्यं प्राभाकरादिमते प्रकाशितत्वाद् अतीतादीनां तेषां स्मरणादावपि प्रामाण्यसहितानामेव तेषां तत्र क्रोडीभूतत्वात् तादृशयावद्ग्रहविषयत्वस्य सत्त्वेन विधिकोटेरबाधात्। तादृशस्थलेऽनुमानादौ साध्यप्रसिद्धेरपि स्मरणैकशरणाद् अनुमित्यात्मकज्ञानग्रहेऽपि अन्ततो गत्वा ज्ञानलक्षणाया प्रामाण्यप्रकाशसम्भवात्। यावत्त्वस्य चरमग्रहविशेषणत्वपक्षेऽपि धर्मिणि प्रतिस्वम् एवं प्रामाण्यं प्रवेशनीयम्। तदप्रामाण्याग्राहकज्ञानेत्यत्रापि तादृशप्रामाण्यव्यक्त्याश्रयीभूतमेव ज्ञानं साध्यकुक्षौ प्रवेश्यम्। अन्यथा पक्षकुक्षिनिक्षिप्तानामनन्तप्रामाण्यानां कुत्रापि विभिन्नविषयकविभिन्नज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वस्यासत्त्वाद् विधिकोटेर्बाधः पूर्ववदेव स्यादिति सर्वमवदातम्।

इदानीमवसरतः प्रतिज्ञातस्य तदप्रामाण्याग्राहकेत्यंशस्य व्यावृत्तिर्विचार्यते। एतदपि ज्ञानग्राहकेतिग्रहधात्वर्थे सामग्र्यां ग्राह्येति ग्रहधात्वर्थे वा विशेषणं भवितुमर्हति। सामग्र्यतिरिक्तेषु विशेषणत्वेन तदप्रामाण्याग्राहकत्वं तदप्रामाण्याविषयकत्वरूपं बोध्यम्। सामग्रीविशेषणत्वे तु तदप्रामाण्यग्रहाजनकत्वरूपो यथाश्रुत एवार्थो ग्राह्यः। तत्र प्रथमपक्षमवलम्ब्य चिन्त्यते। अप्रामाण्याग्राहकेत्यंशस्य सर्वथा परिहारे तु ज्ञानप्रामाण्यं यावज्ज्ञानग्राहकसामग्रीग्राह्यं न वेति विप्रतिपत्तिः पर्यवसिता भवति। एवञ्च सति धर्मिणि विधिकोटिर्बाधिता भवेत्। तथा हि प्रामाण्याश्रयीभूतज्ञानस्यापि अप्रामाण्यभ्रमदशायामप्रमात्वेनैव ग्रहणात् तादृशज्ञानग्राहकसामग्रीजन्यग्रहस्यापि अप्रमात्वविषयकत्वात् यावज्ज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वस्य पक्षीभूतज्ञानप्रामाण्येऽसत्त्वाद् बाधः स्पष्ट एव। प्राभाकरमते तादृशबाधज्ञानदशायामुत्पन्नस्य ज्ञानस्य अप्रामाण्यविषयकस्य ग्राहको यस्तदीयोत्पादककारणसमूहस्तज्जन्यस्य स्वात्मकव्यवसायस्य प्रमात्वाप्रकाशकत्वात् तन्मते विधिकोटेर्बाधः। मिश्रमतेऽपि तादृशस्थले ज्ञानानुव्यवसायस्यावश्यमप्रमात्वविषयकत्वात् तज्जनकसामग्रीजन्यचरमग्रहस्यापि अनुव्यवसायस्याप्रमात्वविषयकत्वावश्यम्भावात् तन्मतेऽपि विधिकोटेर्बाधः स्यादेव। भाट्टमतेऽपि तादृशस्थले ज्ञाततालिङ्गकानुमानकाले ज्ञानानुमितेः अप्रमात्वविषयकत्वाद् ज्ञानग्राहकसामग्रीजन्यानुमित्यात्मकग्रहविषयत्वस्य पक्षीभूतज्ञानप्रामाण्येऽसत्त्वाद् बाधो बोध्यः। सामग्रीविशेषणत्वपक्षे चरमग्रहधात्वर्थविशेषणत्वपक्षेऽपि व्यावृत्तिः पूर्ववदेव बोध्या। ग्राहकेति ग्रहधात्वर्थे अप्रामाण्याविषयकत्वरूपस्य प्रामाण्याग्राहकत्वस्य

विवक्षणे तु तादृशबाधभ्रमोत्तरकालजायमानस्य प्रामाण्याश्रयीभूतज्ञानग्रहस्याप्रमात्व-विषयकत्वनियमाद् अप्रमात्वविषयकज्ञानग्रहत्वेन ग्रहणासम्भवान्न तादृशज्ञानग्रहमादाय बाधो भवितुमर्हति। एवं चरमग्रहधात्वर्थविशेषणत्वपक्षेऽपि अप्रमात्वविषयकग्रहस्य प्रामाण्याग्राहकज्ञानग्राहकसामग्रीजन्यग्रहत्वेन ग्रहणासम्भवात् तत्पक्षेऽपि न बाध इति मर्मार्थः।

यद्यपि ज्ञानग्रहणात् पूर्वं धर्मिणोऽप्रसिद्धत्वात् न तत्र अप्रमात्वस्य ग्रहणं भवितुमर्हति। प्राभाकरमते उत्पत्तिकाल एव ज्ञानस्य स्वगतप्रमात्वेन प्रकाशस्वीकाराद् अनन्तरकालेऽपि तेन बाधादेव न तत्राप्रमात्वस्य ज्ञानं सम्भवति, एवं मिश्रादिमतेऽत्रपि अनुव्यवसायादिना ज्ञानप्रकाशकाले एव तद्गतप्रमात्वस्याप्यवश्यं निर्णयात् पूर्वकाले इव नोत्तरकालेऽपि तत्राप्रमात्वग्रहणं भवितुमर्हतीति कथम् अप्रामाण्याग्राहकेत्यंशस्य पूर्वोक्ता व्यावृत्तिः संगच्छते। तथापि भाविज्ञानमप्रमेत्याकारेण स्वोत्पत्तेः पूर्वकाले प्रमाज्ञानात्मकधर्मिणि ज्ञानत्वेन सामान्येन जायमाने अप्रमात्वभ्रमोत्पत्तौ बाधाभावात्। भाविज्ञानमप्रमा इत्येवमाकारेण पूर्वकालीनज्ञानस्य नव्यनैयायिकैर्बहुत्र स्वीकारात्। वस्तुतस्तु अप्रामाण्याग्राहकेति मूलस्य अप्रामाण्यज्ञानजनककारणासमवहितत्वार्थकत्वे व्यावृत्तिः सुलभा। तादृशसमवधानदशायां ज्ञानग्रहणेऽपि प्रामाण्यग्रहणासम्भवाद् विधि-कोटेर्बाधो न दुर्लभ इति तत्तन्मतानुसारेण तदंशस्य व्यावृत्तिः स्वयमूहनीया।

तदप्रामाण्याग्राहकेति तत्पदाप्रक्षेपे अप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्य-त्वमित्येव पर्यवसिता विधिकोटिः। एवञ्च सति घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्य-ग्रहणकाले घटत्वाभाववति घटत्वप्रकारकत्वरूपाप्रामाण्यघटकस्य तादृशप्रामाण्यग्रह-प्रतिबन्धकज्ञानविषयस्य घटत्वादेर्ग्राहकसामग्र्या अवश्यं समावेशाद् अप्रामाण्या-ग्राहकतादृशप्रामाण्याश्रयीभूतज्ञानग्राहकसामग्र्या अप्रसिद्धिः स्यादिति तद्वारणार्थम् अप्रामाण्यकुक्षौ तत्पदमावश्यकम्। तथा च तस्मिन् अप्रामाण्यमिति सप्तमीसमास-निष्पन्नत्वेन तदप्रामाण्यपदस्य तत्तज्ज्ञानगतं यदप्रामाण्यं तदग्राहकत्वस्यैव विशेषणत्व-लाभात् तादृशप्रामाण्यग्रहप्रतिबन्धकीभूतज्ञानविषयस्यापि घटत्वादेर्ज्ञानवृत्तित्वाभावात् तदप्रामाण्यपदेन घटत्वादिकं व्यावृत्तमेव स्यात्। एवञ्च न घटत्ववति घटत्वप्रकारकत्व-रूपप्रामाण्यग्राहकसामग्र्या अप्रामाण्याग्राहिकायाः प्रकृतेऽप्रसिद्धिः।

न च तत्पदाप्रवेशेऽपि अप्रामाण्याग्राहकान्तर्गतस्य अप्रामाण्यस्य साक्षात् प्रमात्वग्रहप्रतिबन्धकीभूतज्ञानविषयत्वार्थकत्वे न घटत्ववति घटत्वप्रकारकत्वरूप-प्रामाण्यग्रहणकाले घटत्वविषयकज्ञानसामग्र्या अवश्यं समावेशादपि विधिकोट्य-

प्रसिद्धिः। प्रदर्शितविप्रतिपत्तौ घटत्ववति घटत्वप्रकारकत्वरूपप्रमात्वस्य धर्मित्वात् तादृशप्रमात्वग्राहकसामग्र्येव ज्ञानग्राहकसामग्रीत्वेन गृहीता स्यात्। तादृशस्थलेऽप्रमात्व-ग्रहस्य भ्रमत्वरूपत्वावश्यम्भावादलौकिकसन्निकर्षजन्यत्वं तस्यावश्यं स्वीकार्यम्। प्रकृतप्रमात्वस्य च लौकिकसन्निकर्षेणैव ग्रहणात् तादृशलौकिकप्रत्यक्षे च भ्रमज्ञानस्य प्रतिबन्धकत्वाभावात् न अप्रमात्वघटकीभूतघटत्वादेस्तादृशप्रमात्वग्रहप्रतिबन्धकज्ञान-विषयत्वेन ग्रहणं भवितुमर्हति। तथा च तत्पदाप्रवेशेऽपि न अप्रमाण्याग्राहकतत्त-त्प्रमात्वाश्रयीभूतज्ञानग्राहकसामग्र्यप्रसिद्धिनिबन्धनो दोष इति तत्पदमनतिप्रयोजनक-मिति वाच्यम्। इदं ज्ञानं निष्प्रकारकमित्यादिज्ञानीयनिष्प्रकारत्ववति निष्प्रकार-कत्वरूपप्रमात्वस्य धर्मितास्थले विधिकोटेरवश्यमप्रसिद्धेः।

**तदप्रामाण्याग्राहकेति।** तदप्रामाण्याग्राहकत्वस्य सामग्रीविशेषणत्वपक्षे व्यावृत्तिः प्रदर्श्यते अस्यानुल्लेखे ज्ञानप्रामाण्यं यावज्ज्ञानग्राहकसामग्रीग्राह्यं न वेति विप्रति-पत्तेराकारो जायते। अत्र प्रामाण्याश्रयीभूतज्ञानानां ग्राहिका यावत्यः सामग्र्यस्तत्प्रत्येक-जन्यग्रहविषयत्वं विधिकोटिः स्यात्। एवञ्च मिश्रादिमते विधिकोटेर्बाधो नैयायिकादिमते च निषेधकोटेः सिद्धसाधनता दोषो भवति। पक्षीभूतप्रामाण्याश्रयी-भूतज्ञानस्य यथा इदं ज्ञानं घटत्ववति घटत्वप्रकारकमित्याकारेणानुव्यवसायो भवेत् तथा व्यवसायोत्पत्तिकालीनदोषादिसमवधानात् इदं ज्ञानं घटत्ववति घटत्वप्रकारत्वा-भाववदित्याकारेणापि अनुव्यवसायादिना ग्रहणं भवितुमर्हति। ज्ञानग्राहकया-वत्सामग्र्यन्तर्गततादृशदुष्टसामग्रीजन्यपूर्वोक्ताकारकग्रहविषयत्वस्य पक्षीभूतप्रमात्वेऽ-सत्त्वाद् विधिकोटेर्बाधो बोध्यः। एतन्निरासार्थमेव सामग्र्यां तदप्रामाण्याग्राहकत्वं निवेशितम्। एवञ्च दोषघटितसामग्र्या अप्रामाण्याग्राहकत्वान्न तादृशसामग्र्या ज्ञानग्राहकयावत्सामग्र्यामन्तर्भावः। तथा च बाधनिरासः। यद्युच्यते प्रतियोगिवि-नाकृतस्य अभावबोधस्यासम्भवेन इदं ज्ञानं घटत्ववति घटत्वप्रकारकत्वाभाववदित्या-कारकज्ञानग्रहेऽपि अभावविशेषणतया घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्यस्य भावात् बाधप्रसक्तिरेव नास्ति अतस्तद्वारकं तदप्रामाण्याग्राहकेति विशेषणं व्यर्थमेवति; तदा इदं ज्ञानं भ्रम इत्याकारकज्ञानग्रहणे प्रामाण्यस्याग्रहणात् प्रसक्तस्य बाधस्य वारणाय तद्विशेषणमावश्यकमेव।

न च इदं ज्ञानं भ्रम इत्याकारकज्ञानग्रहस्यापि ज्ञानग्राहकयावत्सामग्रीजन्य-ग्रहान्तर्गतत्वेन तादृशज्ञानग्रहे च प्रामाण्यविरोधिनो भ्रमत्वस्य ग्रहणात् तद्ग्राह्यत्वस्य पक्षीभूतप्रामाण्येऽभावाद् विधिकोटेर्बाध इति वाच्यम्। तदभाववति तत्प्रकारक-ज्ञानत्वरूपभ्रमत्वस्य तद्वति तत्प्रकारकज्ञानत्वरूपप्रामाण्याभावानात्मकत्वात् ग्राह्या-

भावनिश्चयस्य प्रतिबन्धकत्वे तादृशभ्रमत्वज्ञानस्य प्रमात्वग्रहं प्रत्यप्रतिबन्धकत्वात् भ्रमत्वग्रहणकालेऽपि प्रमात्वग्रहणे बाधकाभावेन तादृशभ्रमत्वग्रहेऽपि प्रमात्वग्रहस्य कल्पनासम्भवात्। यद्युच्यते ग्राह्याभावानात्मकत्वेऽपि वह्निजलयोरिव प्रमात्वभ्रमत्वयोर्नियतासामानाधिकरण्यरूपविरोधसत्त्वात् कथं भ्रमत्वग्रहणकाले तत्रैव ज्ञाने प्रमात्वग्रहसम्भव इति। तदापि विरोधदर्शनकाल एव अवच्छेदकधर्मदर्शनविधया जलज्ञानस्यैव वह्निज्ञाने भ्रमत्वग्रहस्य प्रमात्वग्रहे प्रतिबन्धकत्वं कल्पनीयं स्यात्। तादृशविरोधज्ञानासमवधानदशायां भ्रमत्वज्ञानेऽपि प्रमात्वनिर्णये बाधकाभावात् तादृशयावत्सामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे सत्त्वात् तदप्रामाण्याग्राहकेति सामग्रीविशेषणमनर्थकमिति चेन्न। भ्रमत्वे प्रमात्वविरोधज्ञानदशायामुत्पन्नस्य इदं भ्रम इत्याकारकज्ञानग्रहस्य प्रमात्वाग्राहकत्वात् विधिकोटेर्बाधो दुर्निवार एवेति तन्निरासार्थं ज्ञानग्राहकसामग्र्यां तदप्रामाण्याग्राहकत्वस्य अवश्यं निवेशनीयत्वादिति ध्येयम्।

यद्वा इदं ज्ञानं निष्प्रकारकमित्याकारकभ्रान्तज्ञानग्रहे प्रामाण्यस्याग्रहाद् विधिकोटेर्बाध इति तन्निरासार्थमप्रामाण्याग्राहकत्वं सामग्रीविशेषणमावश्यकम्। अस्मिन् पक्षे प्रामाण्यग्रहप्रतिबन्धकीभूतज्ञानसामग्र्या एवाप्रमाण्यग्राहकत्वम् बोध्यम्; तादृशसामग्र्यसमवधानमेव अप्रामाण्याग्राहकेत्यनेन ज्ञानग्राहकसामग्र्यां विशेषणत्वेन प्रविष्टम्। अनुव्यवसायस्याभ्रान्तत्वपक्षे तु अप्रामाण्याग्राहकेत्यंशस्य व्यावृत्तिप्रदर्शनार्थं प्रदर्शिता ज्ञानग्रहा इदं ज्ञानं घटत्ववति घटत्वप्रकारकत्वाभाववदित्याद्याकारिकाः सर्वा एव अनुमित्यादिरूपा ग्राह्याः ज्ञानग्राहकेत्यत्र ज्ञानपदस्य पक्षीभूतप्रामाण्याश्रयत्वेन वस्तुनः प्रमात्मकस्य पूर्वोक्तप्रकारेण भ्रान्तानुव्यवसायासम्भवात्। तादृशज्ञानविषयकानुमानादिस्थले च मूलीभूतज्ञानस्य पक्षीभूतप्रमात्वाश्रयीभूतस्य अतीतत्वादनुमानादिस्थले विषयविधया अनुव्यवसायकारणीभूतस्य व्यवसायात्मकज्ञानस्य असत्त्वात् तदानीमनुव्यवसायसामग्रीविरहेण तया प्रतिबन्धात् तादृशज्ञानविषयकानुमित्यात्मकज्ञानस्योत्पत्त्यसम्भव इति तात्पर्यम्।

पूर्वमेतदुक्तं यद् अप्रामाण्याग्राहकमितिसामग्र्यां ज्ञानग्रहे चरमग्रहे वा विशेषणं भवितुमर्हति, तत्र प्रदर्शितं विशेषणं प्राभाकरमतेऽप्रसिद्धमिति कथं तद्विशेषणयुक्ता विधिकोटिः मतत्रयसाधारणी स्यात्, प्राभाकरमते भ्रमात्मकज्ञानस्य सर्वथा अस्वीकारात् तद्ग्राहकत्वमपि तन्मतेऽलीकमेव। अतः उक्तपदस्य तादृशं व्याख्यानमावश्यक येन प्राभाकरमतेऽपि अप्रामाण्याग्राहकत्वं प्रसिद्धं भवेत्। अतोऽप्रामात्वग्राहकत्वाभावरूपस्याप्रमात्वाविषयकत्वस्य वा आपाततो लब्धस्यार्थस्य न विधिकोटौ प्रवेशस्तादृशार्थस्य प्राभाकरैरनंगीकारात् तत्पदव्याख्यायां दीधितिकारेणोक्तं यत् तज्ज्ञानगतप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसम्मतं तद्भिन्नत्वमत्र अप्रामाण्या-

ग्राहकत्वं बोध्यम् । एवञ्च नेदानीं तदप्रसिद्धिरूपो दोषः । भट्टमतानुसारेण प्रामाण्या-ग्राहकं सत् ज्ञानग्राहकं तदेव भवेत् यदिच्छादिलिङ्गकं ज्ञानानुमानम् । तादृशानुमानस्य भट्टमते प्रामाण्यग्राहकत्वमस्वीकृतम् । साधारणतस्तन्मते ज्ञाततालिङ्गकानुमानस्यैव प्रमात्वग्राहकत्वात् । समर्थप्रवृत्तिजनकत्वलिङ्गकज्ञानानुमानस्य प्रामाण्यग्राहकत्वं सर्वेषां सम्प्रतिपन्नमस्ति । तथा च भट्टमतसिद्धज्ञाततालिङ्गकानुमानस्य प्रामाण्यग्राहकत्वे नियमात् तादृशमनुमानं प्रामाण्याग्राहकाद् भिन्नमवश्यं स्यात् । तदेव च भट्टमतानु-सारेण प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तद्भिन्नत्वेन ग्राह्यं स्यात् । तदप्रामाण्याग्राहकज्ञानग्राहकतादृशानुमितिजनकसामग्रीजन्यज्ञानाविषयत्वस्य प्रमात्वे सत्त्वाद् भट्टमते विधिकोटिप्रसिद्धिर्बोध्या । प्रभाकरमते सिद्धा या ज्ञानोत्पादिका ज्ञानग्राहिका सामग्री तस्या भट्टेन ज्ञानग्राहकतया अनभ्युपगमाज् ज्ञानोत्पादिकापि सामग्री प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तदन्यत्वेन गृहीता स्यात्, एवञ्च ज्ञानोत्पादकसामग्र्यास्तदप्रामाण्याग्राहकसामग्रीत्वेन ग्रहणात् तादृशसामग्री-जन्यग्रहविषयत्वस्य प्रमात्वे सत्त्वात् प्राभाकरमतानुसारेण विधिकोटिप्रसिद्धिः । मिश्रमतसम्मता या अनुव्यवसायसामग्री तस्या भट्टमतानुसारेण ज्ञानाग्राहकत्वात् सापि प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तदन्यत्वेन गृहीता स्यात् । एवञ्च तदप्रामाण्याग्राहकज्ञानग्राहकसामग्रीत्वेन च तस्या ग्रहणात् तादृश-सामग्रीजन्यज्ञानविषयत्वस्य प्रामाण्ये सत्त्वात्, मिश्रमतानुसारेणापि विधिकोटिः सुलभै-वेति सर्वमवदातम् ।

पूर्वत्र तदप्रामाण्याग्राहकेत्यंशस्य यथा नाप्रसिद्धिर्भवति तथा व्याख्यानप्रसंगे तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन यद्भट्टमतसिद्धं तद्भिन्नत्वस्य अप्रामाण्या-ग्राहकत्वमुक्तम् । विशेषणांशे तज्ज्ञानप्रामाण्याग्राहकत्वेनेत्यत्र तत्पदाप्रवेशे घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्यस्य धर्मित्वे तत्र विधिकोटिर्बाधिता भवतीति तन्निरासार्थं कथितविशेषणांशे पक्षीभूतप्रामाण्यव्यक्तेः प्रवेश आवश्यक इति तदर्थं तत्र तत्पदं प्रदत्तम् । तथा हि यदि शब्दादिना पटज्ञानं प्रमा अयञ्च घट इत्याद्याकारकं समूहालम्बनं ज्ञानं स्वीक्रियते तदा तत्र ज्ञाने पटत्ववति पटत्वप्रकारकत्वरूपप्रामाण्यस्य प्रकाशात् तादृशशाब्दज्ञानसामग्र्यां सामान्यतः प्रामाण्याग्राहकत्वस्य असत्त्वेन ज्ञानग्राहकत्वस्य च सत्त्वेन प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तदन्यत्वेन सापि सामग्री तादृशयावत्सामग्र्यन्तर्गता भवति, तज्जन्यज्ञानविषयत्वस्य घटत्ववति घटत्व-प्रकारकत्वरूपपक्षीभूतप्रामाण्येऽसत्त्वाद् विधिकोटेर्बाधो बोध्यः । तत्पदप्रवेशे तु विधिकोटावपि घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्यव्यक्तेरेव प्रवेशात् प्रदर्शितज्ञानस्य च तादृशप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसम्मतत्वात् तद्भिन्नत्वरूप-

मप्रमाण्याग्राहकत्वं तादृशसामग्र्यां नास्तीति न तादृशसामग्रीजन्यग्रहविषयत्वस्य पक्षीभूतप्रामाण्येऽसत्त्वेऽपि बाधः। प्रामाण्यग्राहकत्वमित्यत्र ग्राहकत्वं प्रामाण्यग्रहरूपफलेन विशिष्टत्वरूपं बोध्यं न तु प्रामाण्यग्रहस्वरूपयोग्यत्वरूपम्। एवं ज्ञानग्राहकमित्यत्रापि फलोपधानरूपमेव तद् ग्राह्यम्। तथा च तत्प्रामाण्यग्रहानुपहितत्वेन ज्ञानग्रहोपहितत्वेन च यद्भट्टमतसिद्धं तद्भिन्नत्वमप्रामाण्याग्राहकत्वमिति पर्यवसितोऽर्थः। प्रथमोपधाय कत्वस्थले स्वरूपयोग्यत्वमात्रविवक्षणे इदं ज्ञानं घटविषयकमित्याद्याकारकशाब्दादिज्ञानग्राहकसामग्रीमादाय विधिकोटेर्बाधः स्यात्। तथा हि प्रदर्शितज्ञानविषयकशब्दज्ञानजनकसामग्र्याः प्रामाण्यग्रहस्वरूपयोग्यतया प्रामाण्याग्राहकत्वस्य तत्र असत्त्वेन सापि सामग्री प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धादन्यत्वेन गृहीता स्यात्। तादृशसामग्रीजन्यस्य इदं ज्ञानं घटविषयकमित्यादिशाब्दज्ञानस्य विषयतायाः प्रामाण्येऽसत्त्वेन विधिकोटिर्बाधिता भवति। फलोपधानरूपप्रामाण्यग्राहकत्वस्य विवक्षणे पुनस्तादृशप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च तत्सामग्र्या भट्टमतसम्मतत्वात् तद्भिन्नत्वं तत्र नास्तीति न तामादाय विधिकोटेर्बाधावसरः। एवं ज्ञानग्राहकत्वेनेत्यत्र स्वरूपयोग्यत्वरूपस्य ग्राहकत्वस्य निवेशे प्राभाकरमतसिद्धा ज्ञानग्राहकसामग्री तदप्रामाण्याग्राहकत्वेन गृहीता न स्यात्। एवञ्च सति विधिकोटेर्मतत्रयसाधारण्यं न भवति। तथा हि भट्टमते ज्ञानस्यातीन्द्रियतया ज्ञानविषयो घट इत्याद्याकारकं प्रत्यक्षज्ञानं ज्ञानांशे उपनीतभानात्मकमवश्यं स्यात्। तादृशज्ञानस्य सर्वानुभवसिद्धत्वेन भाट्टैरनङ्गीकारासम्भवात्। प्रदर्शितौपनायिकभाने घटात्मकधर्मिभासकसामग्र्या अपि अवश्यमपेक्षितत्वेन अयं घट इत्याकारकघटविषयकप्रत्यक्षसामग्र्या अपि तादृशौपनायिकभाने स्वरूपयोग्यत्वमस्ति। एवञ्च अयं घट इति प्रत्यक्षोत्पादकसामग्र्याः प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धतया तत्र कदापि प्रदर्शितमप्रामाण्याग्राहकत्वं न स्यात्। तथा च प्राभाकरमतसिद्धप्रामाण्यग्राहकसामग्र्यस्तदप्रामाण्याग्राहकज्ञानग्राहकसामग्रीत्वेन ग्रहणासम्भवादुक्तविधिकोटेर्मतत्रयसाधारण्यं न भवतीति ज्ञानग्राहकत्वेन च भट्टमतसिद्धमित्यत्रापि ज्ञानग्राहकत्वं ज्ञानग्रहणरूपफलेन विशिष्टत्वरूपं बोध्यम्। फलोपधानविवक्षणे च प्राभाकरमतसिद्धा सामग्री अपि विधिकोट्यन्तर्गता भवति। अयं घट इत्याकारकप्रत्यक्षोत्पादकसामग्र्या ज्ञानविषयकज्ञानरूपफलेन अनुपहितत्वात् तदप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तदन्यत्वस्य तत्र सत्त्वादिति तात्पर्यम्।

नन्वेवं ज्ञानग्राहकत्वेन यद् भट्टमतसिद्धमित्यत्र ज्ञानविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितस्वरूपयोग्यतावत्त्वेन यद् भट्टमतसिद्धमिति विवक्षणेऽपि प्राभाकरमत-

सिद्धा ज्ञानोत्पादकसामग्री तदप्रामाण्याग्राहकज्ञानग्राहकसामग्रीत्वेन ग्रहीतुं शक्या भवति। अयं घट इत्याकारकप्रत्यक्षज्ञानोत्पादकसामग्रयन्तर्गतात्ममनोयोगादेर्ज्ञान-सामान्यकारणस्य ज्ञानविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितस्वरूपयोग्यतावत्त्वेन भट्टैरनङ्गीकारात् तद्घटितकारणकूटात्मिकायाः प्रत्यक्षज्ञानोत्पादकसामग्रया अपि सुतरां तादृशजन्यतानिरूपितस्वरूपप्रमात्वं न निश्चितं भवितुमर्हति। ज्ञानगतधर्माणां द्वाभ्यामेवोपायाभ्यां निर्णयो जायते स्वतः परतो वा, ज्ञानत्वादौ तथा दर्शनात्। तयोरुपाययोस्तत्रासम्भवादुपायान्तरस्य चासत्त्वात् प्रमात्वं न निर्णेतुं योग्यमितिपूर्वपक्षे ग्रन्थकारो मीमांसकमतमनुसृत्य तं समाधातुमुपक्रमते **ननु स्वत एवास्तु तन्निरूपण-मिति**। अत्र ग्रन्थकारस्य मीमांसकमतानामेव बुद्धिस्थत्वात् सर्वनामपठितेन स्वपदेन प्रमात्वाश्रयीभूतज्ञानग्राहिकाः सामग्रयस्तादृशज्ञानग्राहकत्वेनानुगतेन रूपेणोपस्थाप्यन्ते। जनकतानिरूपितजन्यत्वं पञ्चम्यर्थस्तस्य च प्रमात्वनिश्चयात्मकनिरूपणपदार्थेऽन्वयात् स्वाश्रयज्ञानग्राहकसामग्रीजन्यः प्रमात्वस्य निश्चय इत्यर्थो लभ्यते।

**इति प्रामाण्यग्रहे मीमांसकपक्षः**

# किं कालिदासो मिथिला-निवासी

डा० जयमन्तमिश्रः
कुलपतिः,
कामेश्वरसिंह-दरभंगा-संस्कृतविश्वविद्यालयस्य, दरभंगा

❁ ❁ ❁

अस्ति विहारस्योत्तरस्यां दिशि दरभंगाप्रमण्डले मधुबनीमण्डले वेनीपट्टी-नामकेऽनुमण्डले उच्चैठनामा ग्रामः। यत्रास्ते अनुपलब्धलिखितविस्तरेतिहासमपि परम्पराप्राप्तप्रसिद्धेतिहासम् लोकाकर्षणकेन्द्रम् सुप्रसिद्धम् उच्चैठभगवती-स्थानम्। तस्य पार्श्वे विद्यते अद्यापि कालिदासनामाभिहितपीठम्। परम्पराप्राप्तप्रवचनप्रमाणेन अत्रैव पीठे अधीयानः अत्यन्ताज्ञानः अतिमन्दमतिः मिश्रोपनामकः कश्चित् स्थानीयश्छात्रः, यो हि एकदा प्रावृषि भयङ्करायां तमिस्रायां घनघोरं गर्जति वर्षति मेघे योगाख्याया नद्याः पारे अवस्थिते देवीकालीमन्दिरे प्रदीपप्रज्वालनाय अलसैः स्वयं गन्तुमसमर्थैः पीठच्छात्रैः समुत्साहितः देवीसन्निधौ प्रदीपं प्रज्वालयितुं जगाम। भयङ्करवृष्टिकारणात् छात्रावासे तदानीं परावर्तितुं सोऽसमर्थो बभूव। प्राक्तनपुण्य-प्रसादात् समुद्भूतपूर्वसंस्कारः स देवीमाराधयामास। प्रसन्ना देवी वरदाभवत्। मन्दमतिश्छात्रः कृतकृत्योऽभवत्। तदानीन्तनादेव कालात् स कालिदासेति नाम्ना प्रसिद्धोऽभूत्। क्रमेण स एव कविताकामिनीविलासः कविकुलगुरुः कालिदासः प्रसिद्ध इति कथयन्ति परम्पराप्रसारणे मिथिला-निवासिनो मनीषिणः।

पुरातने सर्वकारीये 'खतियौन' इति नाम्ना प्रसिद्धे भूसर्वेक्षाभिलेखे 'कालिदास-डीह' इति समुल्लेखो विषयमिमं प्रमाणयतितराम्। आधुनिक-तत्रत्य-कालिदास-महाविद्यालयः कालिदासस्मारक-समितिश्च इमं प्राचीनेतिहासं प्रचारयतितमाम्।

ऋतुसंहार-कुमारसंभव-रघुवंश-मेघदूत-विक्रमोर्वशीयमालविकाग्निमित्राभिज्ञान-शाकुन्तल-प्रणेता कालिदासः स्वरचनासु स्वसमयं स्वनिवासस्थानं च स्पष्टतः क्वापि नोदलिखदिति विजानते सर्वे विपश्चितः। फलतः अद्यापि एतादृशस्य महाकवेः समयो जन्मस्थानं च सन्दिग्धे स्तः। यद्यप्येतस्यैतत् फलं यद् महाकविकालिदासः सम्पूर्णभारतस्य, न कस्यापि प्रान्तविशेषस्य, तथापि समस्येयं विचारणीया समाधानी-येति विपश्चित ऊहापोहं कुर्वन्ति। अत्रापि कालिदासस्य समयः ख्रिष्टपूर्वप्रथमशतक-समुद्भवस्य विक्रमाब्दजनकस्य उज्जयिनी-नरेशस्य विक्रमादित्यस्य नवसु रत्नेषु अन्यतमत्वाद् यथानिश्चितप्रायस्तथा तस्य जन्मस्थानं न निश्चितम्।

महाकविकालिदासस्य जन्मस्थानप्रसङ्गे उपर्युक्तपरम्पराप्रमाणातिरिक्तं तस्य रचनामाधारीकृत्य मनीषिणः अधोनिर्दिष्टाभ्यन्तरप्रमाणं समुपस्थाप्य मिथिलां तस्य जन्मभूमिं निश्चिन्वन्ति।

**१, मिथिला-मैथिल-मैथिली-विदेहाधिपतिशब्दानामनेकवारं प्रयोगः**

सीतापितुर्जनकस्य कृते महाकविकालिदास-कृतः मैथिल[1]-विदेहाधिपति[2] शब्द-प्रयोगः, सीतायाः कृते मैथिली[3] शब्दप्रयोगस्तत्प्रसङ्गे मिथिलाशब्दप्रयोगश्च तस्य मिथिला-मैथिलविदेहप्रियतां संसूचयति, मिथिला-निवासित्वं च समर्थयति।

**२. सीता-तिरस्कारासहिष्णुता**

सीता-निष्कासनमसहमानस्य महाकवेः रघुवंशे अभिव्यक्तस्तादृशः क्षोभस्तस्य[4] मैथिलीं जानकीं प्रति यमात्मीयभावं संसूचयति, सोऽपि कविकुलगुरोः मिथिला-निवासित्वं समर्थयति।

**३. जनकपुर-सीमन्तिनीनां शृङ्गारावर्णनम्**

सीता-परिणय-प्रसङ्गे महाकविः जनकपुर-सीमन्तिनीनां शृङ्गार-वर्णनं न करोति; किन्तु मैथिली यदैव अयोध्यां प्रविशति, तां द्रष्टुकामानां तत्रत्यानाम् अङ्गनानां शृङ्गारमयं[5] वर्णनं करोति कविः। मेघदूते उज्जयिनी-वर्णनप्रसङ्गे महाकविः तत्रत्य-रमणी-लोलापाङ्गरमणमेव लोचनफलं मनुते[6]। एवं हि मिथिलाभूमि-भिन्नानां नारीणां तथाविधशृङ्गारवर्णनम्, मिथिलानिवासिनीनां शृङ्गारस्य अवर्णनं च महाकवेः मिथिला-मातृभूमित्वं प्रकटयति।

---

१. तं न्यमन्त्रयत सम्भृतक्रतुर्मैथिलः स मिथिलां व्रजन् वशी (रघुवंशे ११।३३)
मैथिलाय कथयाम्बभूव सः—तत्रैव ११।३७।
वीर्यशुल्कमभिनन्द्य मैथिलः—तत्रैव ११।४७।
मैथिलः सपदि सत्यसागरः—तत्रैव ११।४८।
कार्मुकाभिहरणाय मैथिलः—तत्रैव ११।४३।
अब्वपु त्रिपु विसृष्टमैथिलः—तत्रैव ११।२।

२. तौ विदेहनगरीनिवासिनाम्—तत्रैव ११।३६।
वमौ तमनुगच्छन्तो विदेहाधिपतेः सुता—तत्रैव १२।२६।

३. पुरमविशदयोध्यां मैथिलीदर्शिनीनाम्—तत्रैव ११।३६।
जनकतनया स्नानपुण्योदकेषु (पूर्वमेघे)
इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा (मेघदूते उत्तरे ३७)
मैथिली-तनयोद्गीतनिःस्पन्दमृगमाश्रमम् (रघुवंशे १५।३७)
मैथिलेयौ यथाविधि—तत्रैव १५।३१।

४. वाच्यस्त्वया मद्वचनात् स राजा वह्नौ विशुद्धामपि यत् समक्षम्।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत् सदृशं कुलस्य॥ (रघुवंशे १४।६१)

५. रघुवंशे ११।९३।

६. वक्रः पन्था······लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि। (पूर्वमेघदूते–२७)
तत्रैव २८।२९।३१।३७।३८।४१।

## ४. मिथिला-प्रचलितप्रथानुसारेण हिमालयवर्णनम्

महाकविः कुमारसंभवे[१], रघुवंशे[२], विक्रमोर्वशीये[३], अभिज्ञानशाकुन्तले[४] च हिमालयं सजीवं देवतात्मरूपेण वर्णयति। मिथिला-जन-जीवने, विद्यापतिगीतेषु, मिथिला-लोकगीतेषु यथा हिमालयो मेनायाः पतिरूपेण, गिरिजायाः पितृरूपेण शिवस्य श्वसुररूपेण च वर्ण्यते, तथैव कालिदासेन स्वरचनासु हिमालयो नगाधिराजो वर्ण्यते। एवंविधवर्णनं कालिदासस्य हिमालय-निकटवर्ति-मिथिलास्थानं स्वजन्मभूमिस्थान-मिति प्रकाशयति।

## ५. मिथिला-विविध-व्यवहार-वर्णनम्

(क) मिथिलाया बाला यथा पूजोपकरणानि पुष्पादीनि स्वयमाहरन्ति, तथैव कालिदासस्य गिरिजा हिमालयस्य निदेशेन पूजासामग्रीमाहरति[५]।

(ख) गिरिशेन सह गिरिजायाः पाणिग्रहणं मिथिलाया विवाह-पद्धतिमनु-सरति। मिथिलायां विवाहात् पूर्वं कन्यायाः सर्षपदूर्वादलादिभिः प्रसाधनं क्रियते, पश्चादुद्वर्तनलेपो विधीयते, घटजलेन स्नानं च कार्यते। ततः परं गोरोचनादिना तस्याः प्रसाधनं विधाय मातृका-पूजार्थं कुलदेवतागृहे सा आनीयते। गिरिजायाः विवाहात् पूर्वमेव प्रसाधनं विधीयते[६]। एतद्धि मिथिला-विवाहपरिपाटीसमनुसरणं महाकवेः मिथिलानिवासित्वं प्रमाणयति।

---

१. अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः। (कुमारसंभवे–१।१)
तत्रैव अन्येऽपि विविधाः श्लोकाः प्रसंगाश्च।

२. रघुवंशे द्वितीये सर्गे, चतुर्थसर्गे—७९।

३. विक्रमोर्वशीये चतुर्थाङ्के।

४. अभिज्ञानशाकुन्तले सप्तमाङ्के।

५ अनर्घ्यमर्घ्येण तमद्रिनाथः स्वर्गौकसामर्चितमर्चयित्वा।
आराधनायास्य सखीसमेतां समादिदेश प्रयतां तनूजाम्॥ (कुमारसंभवम्–१।५८)
अवचितबलिपुष्पा वेदिसंमार्गदक्षा नियमविधिजलानां बर्हिषां चोपनेत्री।
गिरिशमुपचार प्रत्यहं सा सुकेशी नियमित-परिखेदा तच्छिरश्चन्द्रपादैः॥ (तत्रैव–१।६०)

६. सा गौरसिद्धार्थनिवेशवद्भिर्दूर्वाप्रबालैः प्रतिभिन्नशोभम्।
निर्नाभि कौशेयमुपात्तबाणमभ्यङ्गनेपथ्यमलञ्चकार॥ (तत्रैव ७।७)
विन्यस्तवैदूर्यशिलातलेऽस्मिन्नाबद्धमुक्ताफलभक्तिचित्रे।
आवर्जिताष्टापदकुम्भतोयैः सतूर्यमेनां स्नपयांबभूवुः॥ (तत्रैव ७।१०)

(ग) अधिमिथिलमद्यापि यथा विवाहकाले कन्या लाजाहोमं विधाय होमाग्निधूमं जिघ्रति, तथैव पार्वती वैवाहिकाग्नौ लाजै[1]र्होमं विधाय होमधूमं[2] जिघ्रति। एतदपि मिथिला-व्यवहारानुसरणं कालिदासस्य मैथिलत्वं सूचयति।

(घ) मिथिलायां विवाह-विधि-समाप्त्यनन्तरं यथा एकासने वरेण सह स्थितां वधूं प्रति दूर्वाक्षतदानराशीर्विधीयते, तथैव पाणिग्रहणानन्तरं पार्वती-परमेश्वरयोः चतुरस्रवेद्याम् आर्द्राक्षतैराशीविधानमवलोक्यते[3]।

(ङ) मिथिलायां विवाहात् परं चतुर्थीकर्मसमाप्तेः पूर्वं वर-वध्वोः कौतुकागारे यथा भूमावेव शयाते, तथैव उमा-महेश्वरौ कौतुकागारे क्षितिविरचितशय्यां शयाते[4]।

(च) मिथिलायां यथैव वरो वध्वा हस्तमाददानः कौतुकागारमागच्छति, तथैव गिरिशो गिरिजायाः करमाददानः कौतुकागारमागच्छति[5]। एतद्विशिष्टमिथिला-व्यवहारानुसरणं कालिदासस्य मिथिलानिवासित्वं प्रमाणयति।

(छ) भारतवर्षे प्रायः मिथिलायामेवेयं परिपाटी यद् विवाहात् परं वरः श्वशुरालये बहूनि दिवसानि निवसति। वृषध्वजोऽपि शैलराजभवने विवाहात् परं मासं यावन्निवसति[6]। एतद्विशेषव्यवहारानुसरणं महाकवेर्मैथिलत्वं प्रकटयति।

(ज) मिथिलायामद्यापि विधिरयं प्रचलितोऽस्ति यद् विवाहविधिसमाप्त्यन्तरं वरेण प्रयुज्यमाना वधूः ध्रुवदर्शनं करोति, 'ध्रुवो दृष्ट' इति चोच्चारयति। एवमेव पार्वती विवाहान्ते 'ध्रुवदर्शनं करोति' 'दृष्ट' इति चोच्चारयति[7]। किमिदं कालिदासस्य मिथिलावासित्वं न प्रमाणयति ?

---

१. तौ दम्पती त्रिः परिणीय वह्निमन्योन्यसंस्पर्श-निमीलिताक्षौ।
स कारयामास वधूं पुरोधास्तस्मिन् समिद्धार्चिषि लाजमोक्षम्॥ (तत्रैव ७।८०)

२. स लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद् वदनं निनाय॥ (तत्रैव ७।८१)

३. क्लृप्तोपचारां चतुरस्रवेदीं तावेत्य पश्चात् कनकासनस्थौ।
जायापती लौकिकमेषणीयमार्द्राक्षतारोपणमन्वभूताम्॥ (तत्रैव ७।८८)

४. अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य क्षितिधरपतिकन्यामाददानः करेण।
कनककलशयुक्तं भक्तिशोभासनाथं क्षितिविरचितशय्यं कौतुकागारमागात्॥ (तत्रैव ७।९४)

५. क्षितिधरपतिकन्यामाददानः करेण। (तत्रैव ७।९४)

६. एवमिन्द्रिय-सुखस्य वर्त्मनः सेवनादनुगृहीतमन्मथः।
शैलराजभवने सहोमया मासमात्रमवसद् वृषध्वजः॥ (तत्रैव ८।२०)

७. ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन।
सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी कथमप्युवाच॥ (तत्रैव ७।८५)

(झ) यथा मिथिलायां बालानामक्षरारम्भो भूमावेव क्रियते, तथैव रघोरपि राजकुमारस्य अक्षरारम्भः भूपृष्ठ[1] एव भवति स्म। एतद्वर्णनमपि कालिदासस्य मैथिलत्वं सूचयति।

(ञ) अधिमिथिलं स्निग्धो जन ओदकान्तमनुगम्यत इति प्रथा प्राचीनकालादद्यापि प्रचलति। शकुन्तला यदा हस्तिनापुरं गच्छति, महर्षिकण्वस्तामनुगच्छति सरस्तीरपर्यन्तम्[2]। ततः स परावर्तते। एतन्मिथिला-प्रथानुसरणं कालिदासस्य मिथिलावासित्वं समर्थयति।

(ट) मिथिलायां दुहितृ-द्विरागमनसमये दुहितुर्भ्राता भगिन्या सह भगिनीपतिगृहपर्यन्तं गच्छति। इयं परिपाटी पुरातनकालादधुनापि प्रचलति। शार्ङ्गरवमिश्रः शकुन्तलया सह हस्तिनापुरं यावद् अनुव्रजति[3]। एतदपि कालिदास्य मैथिलत्वं प्रमाणयति।

(ठ) अधिमिथिलं तरुच्छायायां स्थिताः शिशवो गुप्तमणिसंज्ञक-बालक्रीडामद्यापि कुर्वन्ति, यत्र हस्तेषु सिकतां नीत्वा निमीलितनेत्राः कियद्दूरे ताः (सिकताः) संस्थापयन्ति। पश्चाद् उन्मीलितनेत्राः तासु सिकतासु गुप्तं द्रव्यमन्वेषयन्ति। इमामेव बालक्रीडां महाकविः मेघदूते[4] अलकावर्णनप्रसङ्गे प्रदर्शयति। 'रत्नादिभिर्वालुकादौ स्मृता दैशिकक्रेलयः' इति मल्लिनाथेन कृतमेतस्य व्याख्यानम्। अत इदं दैशिकक्रीडनकमेवेति निश्चितम्। मिथिलायां प्रचलितस्यास्य क्रीडनकस्य वर्णनेन कालिदासस्य मिथिलावासित्वं सूच्यते।

(ड) महाकविः अधरसौन्दर्यवर्णने मिथिलायां 'तिलकोड़' इति नाम्नातिप्रसिद्धं बिम्बफलम् अधरोपमानरूपेण बहुशो निर्दिशति।[5] यस्यानुहरणं विद्यापतिप्रभृतिभिः कविभिरपि कृतम्। एतदपि वर्णनं कालिदासस्य मैथिलत्व समर्थयति।

---

१. न्यस्ताक्षरामक्षरभूमिकायां कार्त्स्न्येन गृह्णाति लिपिं न यावत्।
सर्वाणि तावच्छ्रुतवृद्धयोगात् फलान्युपायुङ्क्त स दण्डनीतेः॥ (रघु० १८।४६)

२. भगवन्! ओदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते। तदिदं सरस्तीरम्। अत्र सन्दिश्य प्रतिगन्तुमर्हसि। (अ० श० चतुर्थाङ्के)

३. अभिज्ञानशाकुन्तले चतुर्थाङ्के।

४. अन्वेष्टव्यैः कनक-सिकता-मुष्टि-निक्षेप-गूढैः।
संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः॥ (उत्तरमेघे-४)

५. नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणाम्। (तत्रैव-'१)
पक्व-बिम्बाधरोष्ठी।—तत्रैव १९
उमामुखे बिम्बफलाधरोष्ठे। (कुमारसंभवे–३।६७,

(ढ) कुमारसम्भवे गौरीशंकर-विवाह-प्रसङ्गे महाकविः महाकोशीप्रपातस्य चर्चां करोति। इदं हि महाकोशी-प्रपातस्थानं मिथिलायाः प्रसिद्धं तीर्थं वाराह-क्षेत्रम्, यत्र हिमालयाद् निःसरन्त्यः सप्त नद्यो महाकोशीति नाम्ना प्रसिद्धाः प्रथमं मिलित्वा त्रिवेणीरूपेण पश्चात् प्रपातरूपेण नीचैरागच्छन्त्यः एकाकारा भवन्ति, या एवाग्रे कोशी कौशिकी वा प्रसिद्धाः। अयमेव महाकोशीप्रपातो यत्र सप्तर्षीणां व्योमगङ्गास्नानं वर्ण्यते कहाकविना। अत्र महावराहदंष्ट्रा प्रसिद्धतीर्थम्—वराहक्षेत्रम् स्मारयति। महाकवेरेतद् वर्णनं मिथिला-निवासित्वमभिव्यनक्ति।

(ण) ऋतुसंहारे ग्रीष्मर्तुवर्णने सभद्रमुस्तस्य[१] परिशुष्ककर्दमस्य सरसो वर्णनं ग्रीष्मकालिकमिथिलां निर्दिशति।

(त) प्रावृड्वर्णने इन्द्रगोपकैः[२] शुक्लेतररत्नभूषिता वसुन्धरा भवतीति कथनम्।

(थ) निम्नाभिमुखस्य नवोदकस्य भुजङ्गवद् वक्रगतिप्रसर्पण[३]वर्णनं च संसूचयति, यत् कालिदासेन प्रावृट्-कालीन-मिथिला साक्षाद् व्यलोकि। अत एव तथाविधं सूक्ष्म-वर्णनं तेन कृतम्।

(द) शरद्वार्णने काशस्य[४] आपक्वशालेश्च[५] महाकविना कृतं वर्णनं हेमन्त-शिशिरयोर्विभिन्नरूपाणां शालीनां[६] वर्णनं महाकविः मिथिला-प्रदेशेन सह घनिष्ठ-परिचयं सूचयति। शालीनां तानि रूपाणि मिथिलायां स्वाभाविकरूपेण प्राप्यन्ते।

---

१. महाकोशी प्रपातेऽस्मिन् सङ्गमः पुनरेव नः। (कुमारसंभवे ६।३३)
२. आप्लुतास्तीर-मन्दार-कुसुमोत्करवीचिषु।
व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु॥ (तत्रैव ६।५)
३. आसक्तबाहुलतया सार्द्धमुद्धृतया भुवा।
महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि॥ (तत्रैव ६।८)
४. सभद्रमुस्तं परिशुष्ककर्दमं सरः खनन्नायतपोत्रमण्डलैः।
रवेर्मयूखैरभितापितो भृशं वराहयूथो विशतीव भूतलम्॥ (ऋतुसं०–१।१७)
५. प्रभिन्नवैदूर्यनिभैस्तृणाङ्कुरैः समाचिता प्रोत्थितकन्दलीदलैः।
विभाति शुक्लेतर-रत्न-भूषिता वराङ्गनेव क्षितिरिन्द्रगोपकैः॥ (तत्रैव २।५)
६. विपाण्डुरं कीटरजस्तृणान्वितं भुजङ्गवद् वक्रगति-प्रसर्पितम्।
स साध्वसैर्भेककुलैर्निरीक्षितं प्रयाति निम्नाभिमुखं नवोदकम्॥ (तत्रैव २।१३)
काशांशुका विकचपद्म-मनोज्ञ-वक्त्रा सोन्मादहंस-रव-नूपुरनादरम्या।
आपक्वशालि रुचिरानतगात्रयष्टिः प्राप्ता शरन्नववधूरिव रूपरम्या॥ (तत्रैव ३।१)
नवप्रवालोद्गमसस्यरम्यः प्रफुल्ललोध्रः परिपक्वशालिः।
विलीनपद्मः प्रपतत् तुषारे हेमन्तकालः समुपागतोऽयम्॥ (तत्रैव ४।१)
परिणतबहुशालि-व्याकुलग्रामसीमा। (तत्रैव ४,१९)
प्ररूढशालीक्षुचयावृतक्षितम्। (तत्रैव ५।१)

(ध) जनकवंशस्य शासनानन्तरं मिथिला मगधसाम्राज्ये समागता। अत एव कालिदासेन मगधाधिपस्य तथाविधं सादरं वर्णनमकारि। रघोः दिग्विजयवर्णन-प्रसङ्गे मगधनरेशस्य पराजयो नादर्शि। न केवलमेतावदेव इन्दुमती-स्वयंवर-प्रसङ्गे महाकविना ससम्मानं सर्वप्रथमस्थानं मगधनरेशायैव[1] अदायि। मगधराजः प्रसिद्ध-पराक्रमः शरणागतवत्सलः परन्तपः राजन्वान्[2] प्रजारञ्जनराजेत्यादिभिर्विशेषणैर्महा-कविना सश्रद्धं विभूषितः। अन्येषां च पूर्वदिग्-वर्तिनां भूभृतां पराजयः प्रदर्शितः[3]। एतद्धि महाकवेः स्वदेशनरेशं प्रति सम्मानं सूचयति।

(न) यदि नाम कालिदासः उज्जयिनी-निवासी अभविष्यत्, तर्हि सर्वप्रथमं स्वयंवर-प्रसङ्गे स्वदेशनरेशस्यैव वर्णनमकरिष्यत्। एतत् प्रसङ्गे च अवन्ति-नाथस्य वर्णने—

"तामिस्रपक्षेऽपि सह प्रियाभिर्ज्योत्स्नावतो निर्विशति प्रदोषान्" इत्येवं रूपेण **प्रियाभिः** सह अयं नरेशः निर्विशतीति पतिवरा-भावप्रतिकूलरूपेण वर्णनं नाकरिष्यत्।

एवं हि मगधाधिपं प्रति सम्मानस्य अवन्तिनाथं प्रति अतथाविधभावस्य प्रदर्शनात् कालिदास-मगध-साम्राज्यान्तर्गत-मिथिलां स्वजन्मनः विभूषयाञ्चकारे-त्यनुमीयते[4]।

एवं हि परम्पराप्राप्तप्रमाणेन, 'कालिदासडीह' इति भूसर्वेक्षणे अङ्कितेन, विविध-मिथिला-व्यवहार-वर्णनेन, मिथिला-मैथिल-मैथिलीं प्रति अत्यन्तानुरागेण, समादरेण पूर्वप्रदर्शितविभिन्नप्रमाणैश्च महाकवेः कालिदासस्य जन्मभूमिर्मिथिलेति प्रतिपादयन्ति विवेकिनो मिथिलामनीषिणः।

प्रख्यातकविकर्मकौशलस्य कालिदासस्य पश्चाद् गुणग्राहिणो विक्रमादित्यस्य उज्जयिनी-नरेशस्य नवसु रत्नेषु अन्यतमत्वाद् उज्जयिनीकर्मभूमिरभूदिति विद्वांसो निश्चिन्वन्ति इति शम्।

● ● ●

१. प्राक्सन्निकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत् सुनन्दा ॥ (रघुवंशे ६।२०)

२. असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः।
राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा ॥
कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीं त्वाहुरनेन भूमिम्।
नक्षत्रताराग्रहसङ्कुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ (रघुवंशे–६।२१।२२–२४)

३. तत्रैव–६।३०।५३।४९।

४. रघुवंशे–६।३४।

# पण्डितपुरन्दरस्वर्गीयश्रीरामाज्ञापाण्डेयः,
# तस्य व्याकरणदर्शनभूमिका च

श्रीकेदारनाथ ओझाः
सम्मानितप्राध्यापकः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालस्य ।

❀ ❀ ❀

पञ्चम-विश्व-संस्कृत-सम्मेलनोपलक्षित सारस्वतीसुषमा-विशेषाङ्के १९८२ ईशाब्दे सुधीसुधाकर-कुलपति-श्रीगौरीनाथशास्त्रि-प्रकाशन-प्रस्तावनया संस्तुना सम्पूर्णानन्द-संस्कृतविश्वविद्यालयेन प्रकाशितैषा भूमिका दर्शनीया ।

**ओंकारः प्रकृतिः परा खरवैः शास्त्रे हरेः कारिका-**
**मध्ये भाष्यतरङ्गिणी सुलहरी-फेन-प्रभानन्दिनी ।**
**संविद् व्याकृतिवर्षिणी मम मनोमोदाय संवादिनी**
**रामाज्ञाश्रुतिवर्णिता विजयतेऽन्तर्वाक्सुधास्यन्दिनी ॥१॥**

अस्या भूमिकाया अवलोकनेन मम मनसोऽसाधारणो मोदः, विश्रुतयशसोऽस्य लेखकस्य व्यक्तित्वेन गाम्भीर्येण स्वतन्त्रवेषभूषया आवश्यककार्यानुकूलया सकारणया सफलया नियतया दिनचर्यया, देशकालोचितकार्यकारिव्यवहारेण नैरुज्याधायिका-सततभ्रमणव्यायामेन, ताटस्थ्याविरोधिना नैकविचारविभेदसहचारिणा सौहार्द-सौन्दर्येण, सङ्गतिसङ्गितास्वातन्त्र्येण, विलक्षणवैचक्षण्यादिगुणगणेन च प्रभावितस्य मम पुरोऽत्रलोक्यमाना महाश्रमवैदुष्याध्ययनान्वेषणयोजनसमन्वयनकल्पनाधृतिसमुत्साहादीनि विविधानि असाधारण्यानि उपस्थापयन्तीयं **'भूमिका'** चेतसि किं रचयतीति सहृदयानां पाठकानां सुहृदयान्येव कथमपि जानीयुः ।

एते रामानुजश्रीसम्प्रदायस्य तिलकधारिणः कुलपरम्परया तत्सम्प्रदायसेविनः । एतेषां पितृपादा अपि एतानपेक्ष्याधिकगौराङ्गास्तादृशतिलकधारिणः पूजासक्ता लालघट्टे विरलाविद्यालये मया साक्षात्कृताः । एषां सपरिवारावासे सहवासस्यावसरो न लब्धः, परं काश्यां स्वपरिवारसहवासिनां पाटलिपुत्रे च पुत्रपरिवारावासमधितस्थुषां च प्रत्यहं पादाभ्यां भ्रमणमथालोकं समर्थनपुरस्सरमश्रृणवञ्च । भ्रमणमपि न्यूनं होराद्वयं क्रोशयुगमञ्च, त्रिचतुरहोरं त्रिचतुरक्रोशञ्च स्वाभाविकम् । भ्रमणे पादप्रक्षेपोऽपि करद्वयादन्यूनभूमिलङ्घी द्रुततरश्च । बलवानपि साहसिकः सहगामी एकस्मिन्नेव दिवसे साहसं समापयति स्म । भ्रमणस्यास्य वैयवहारिकतयाऽपि अवलोकनीयैव । **'यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम्'** इति रीत्या भारतीयेषु येषु महानगरेषु नगरेषु च कथमपि कञ्चित्कालं निवासावसरोऽजनि, तत्रत्या प्रायः समे धनिनः श्रेष्ठिनो व्यवसायिनो राजकीये सामाजिके देशसेवया वा उच्चपदे आसीना धार्मिका आचार्या

मठाधीशादयश्च चातुर्याञ्चितचारुवाचा च वेषेण धर्माचरणेन च प्रभाविताः सुहृदो भक्ताः शिष्याः प्रणयिनश्च सञ्जाताः। तेन पुनस्तत्र तत्र गमने यात्रायां निवासे चानुषङ्गिकः सुविधाविशेषः समुपातिष्ठतैव; किन्तु अदसीयाः षट्-सप्त तनयाः शिक्षायां जीविकासेवायाञ्च राजकीयायामराजकीयायाञ्च शिक्षासम्बद्धायां चिकित्सायां यान्त्रिक्यां व्यवसायीयायाञ्च सुखेन सफला अभूवन्। कन्याश्च क्लेशं व्ययबाहुल्यञ्च विनैव सम्पन्न-शिक्षितपरिवारं प्रापन्। एवमन्यदप्यनेकविधा व्यवहारसफलता। जनपदे स्वकीये रतसड़ (रतिसदन) ग्रामे साङ्गोपाङ्गं विशालं मन्दिरं **श्रीसम्पूर्णानन्दपुस्तकालयश्च** चिरं दर्शनीयञ्च व्यवहारफलं चकास्ति।

भ्रमणस्य व्यायामदृशाऽपि नैरुज्यं बलस्फूर्तिसंरक्षणञ्च तेनानुभूतमन्यैः स्फुटमवलोकितञ्च। 'अन्तिमस्तनयो मम षट्षष्टितमे वयोवर्षे जातः पुष्टो हृष्टश्च' इति स्वस्थता गर्वोक्ति सकृदश्रौषम्। क्रमशस्तिस्त्रः धर्मपत्न्यः सञ्जाताः। प्रथमाया एकः पुत्र एव, द्वितीयतृतीययोरन्याः सन्ततयः, एतावताऽपि आयुः कस्य करे? अशीतितमे एकाशीतितमे वा वयोवर्षे तेषां काश्यां शरीरावसानम्। तदानीं तृतीया पत्नी सेवते स्म। अन्ते महान् रोगो मूत्रेण सह रक्तस्रावः कष्टकरो जातः। मासत्रयाद-न्यूनं पटनाचिकित्सालयावासे वासे उपद्रवाः समेधन्ते, औषधाद्युपचारेण शाम्यन्ति, रोगो मूलं न त्यजतीत्येव स्थितिः प्राचलत्। जीवननिराशः काश्यामागतः।

१९४८ ईशाब्दतः ५३ पर्यन्तं प्रायस्त्रिस्तेषामन्या दिनचर्या अंशेनावालोकिषम्। श्रीसम्पूर्णानन्दमहोदयस्य कश्चित्सुपुत्रो जयपुरे राजस्थानराज्यसर्वकारस्य किमपि सचिवपदं सेवमानो विराजते स्म। तस्यैव प्रासादस्यैकभागे तत्र गता एते महाशया न्यवसन्। तदानीं यात्राया उद्देश्यं प्राक्सूचितयोर्मन्दिरपुस्तकालययोः पूरणाय धन-संग्रहः प्राचलत्। देवेन सह पूजासामग्री अवलोकिता, तदनुकूला प्रातश्चिरमर्चना श्रुता। तदनन्तरं प्राग्वर्णितं भ्रमणम्, मध्येऽह्नि स्वयं पूर्णः पाकस्ततो भोजनम्। रात्रौ दुग्धादिपानञ्च, इत्यादिक्रमवागच्छम्, पुस्तकाद्यवलोकनं पत्रादिसमुत्तरणञ्च निशायामेवावशिष्यते।

मतभेदसहिष्णुर्मैत्री एषां पूज्यश्रीसभापतिशर्मोपाध्यायैः सह दृष्टा, बहुभ्यः श्रुता कार्यकलापैरनुमित्या च दृढा आश्वस्ता च। पण्डितेषु तेषामेव पूज्यपादानां मुखाद् श्रीरामाज्ञापाण्डेयपण्डितः शास्त्रनिविष्टमतिरध्ययनकल्पनापटुरित्यादिकं साक्षात्परिचयात्प्रागश्रृणवम्। परस्परं विवेचने **'नावबुध्यते भवान् हठं करोति'** प्रभृति वचः कदाचनाकर्णयम्। एवं बहूनां समर्थनञ्चावाप।

श्रीमन्त उपाध्यायमहोदया विद्याव्यवसायिनः स्वयंपाका नित्यधर्मानुष्ठाननिरता अध्यापनतत्परा बहुभिर्मया च साक्षात्कृताः। षष्टेरुपरि वयसि दशभिः पञ्चदशभिर्वा मासिकवृत्त्या रात्रौ होरामात्रस्य कृते श्रीपण्डितराधाकान्तझान्यायाचार्यमहोदयान्

आमन्त्र्य प्रत्यहं नव्यन्यायग्रन्थानां विचारात्मकमध्ययनं समाचरन्निति तेषामसाधारण्यम्। उपाध्यायमहोदयस्य दैनिकमनुष्ठानं स्मार्तानुसारि, पाण्डेयस्य वैष्णवम्। न तत्परिवारयोरपितु तयोरेव उपाध्याय-पाण्डेयमहोदययोर्मैत्री आजीवनं सम्यङ् निर्वाहमापत्। वयसा अल्पीयसा उपाध्याया अग्रजाः पाण्डेयाश्चानुजाताः।

इयं भूमिका पण्डितप्रकाण्डानां पाण्डेयमहोदयानां यादृशमध्ययनं नियतं च श्रमं सूचयति, तदवलोकनेन मम मनसि बलाद्विस्मयः समुदेति, यन्मम परिचयगोचरो न कश्चित्संस्कृतसाहित्यशास्त्री विद्वान् सफलसामाजिकव्यवहारेण साकं शास्त्रपरिशीलनं समरक्षत्। नैतदन्वेषणं यदा कदा पुस्तकावलोकनेन संभवति; किन्तु निरन्तरं सुचिरम्, तत्रापि समाजप्रभावपातकुशलस्य नियतस्वयंपाकभगवत्पूजाव्यायामनिरतस्य। अस्मादृशां सकृद्भाष्याध्ययनं नैककार्यविरोधेन चिरं तत्परतया विशेषश्रमानुभवेन च महाकठिनं जायते। एते च विपश्चिच्चूडामणयो विविधदृशा बहूनां विषयाणां विचिचीषया निश्चिचीषया च बहुकृत्वो गभीरं महाभाष्याब्धिमालोकडयन्निति अनुसन्धातारोऽध्येतारः सद्यः स्वयमवगन्तारः। एवं वाक्यपदीयस्यापि। तथामुद्रितानाममुद्रितानाञ्च सव्याख्यानां प्रातिशाख्यनिरुक्तानां सम्बद्धतन्त्रग्रन्थानाञ्च अन्वेषणे पठने मनने व्याकरणप्रसिद्धग्रन्थाभिप्रेतैः सह समन्वयनयने च भूयानसाधारणः श्रम एषां मनीषिणां दृष्टिपथमायाति।

यद्यपि कतिपयैर्महद्भिः प्रेरिता एतेऽत्रान्वेषणे विवेचने च प्रवृत्ता इति अदसीयलेखेन प्रतिभाति; तथापि ततो बलान्मनसि आगच्छति यत्ते प्रेरका महाशयाः **'त्वां धूरियं योग्यतयाऽधिरूढा'** प्रभृतिभारविभणितिरीत्या कैश्चिद्विलक्षणैः कामपि योग्यतामेषां पर्यचिन्वन्, यस्याः फलमियम्।

**निःसंकोचं वक्ति, तेनास्मानुपदिशति च**

प्रथमं चिरमन्विष्टा विवेचिता लिखिता अपि विषया अग्रिमविशेषाध्ययनेन विपरीताः प्रत्यभासन्तेत्यादिरत्र लेखः। तेन अल्पाध्ययनेनैव सिद्धान्तव्यवस्थायै न प्रवर्त्तितव्यम्, विशेषाध्ययने प्रवर्त्तितव्यम्। अल्पाध्ययनेनेदं समीचीनमिदं नेति व्यवस्थापनमनुचितम्। परं विशेषाध्ययनमपि मनसि विश्वासं समुत्पादयेत्, तदैव तत्सफलम्; अन्यथा सिद्धान्तव्यवस्थापनं क्व स्थानमुपेयात्? तथा एषां मनसि आस्था। बहवः पदार्थाः पाणिनीयदर्शनानुकूला महाभाष्यवाक्यपदीयनिरुक्ताद्याधारेणान्विष्टाः प्रमाणिता व्यवस्थापिताश्च प्रायश्चतुस्त्रिंशतो वर्षेभ्यः प्रागयोध्याप्रचलिते "संस्कृतम्" पत्रे तथा साम्प्रतं व्याकरणनिबन्धमालायां हिन्दीयुते प्रकाशिते मम **'पाणिनीयं व्याकरणं तदुपरि आक्षेपाश्च'** इत्याख्ये निबन्धे मया चिन्तितं वर्तते, पाणिनीयदर्शने यद्दर्शनानुकूला अपेक्षिताः कतिपयपदार्था अद्यावधिनोपलब्धाः। केचन लेखभेदेन न व्यवस्थिता

इत्यादि। तस्य भूयांसोंऽशा अनया भूमिकया समर्थ्यन्ते। मूलग्रन्थः प्रतिमा कीदृशी, कया दशया क्व वर्तत इति न जानामि। परमियं भूमिकैव प्रचुरामध्ययनसामग्रीमुपस्थापयन्ती हर्षं विषादञ्च युगपदेव वर्षति नान्यतरस्यावस्थानं रचयति।

अधुना साधारणतयाऽवलोकनमेव जायते, तदनन्तरं प्रमाणानां प्रमेयाणाञ्च परस्परयोजनया भूमिकायाः समनुगमनम्। तदेव साधारणमध्ययनं सम्पद्येत। तदपि साम्प्रतं न सिद्ध्यति। सम्यगध्ययनन्तु यत उद्धृतानि प्रमाणवचनानि तत्स्थलानां ग्रन्थाध्ययनासम्भवे प्रकरणानाञ्च समन्वय आवश्यक एव उद्धृतप्रमाणस्य वास्तविकत्वाश्वासे स्वमनसः स्वयं परीक्षाऽवश्यमापतति। भूमिकानुकूल एव प्रमाणप्रकरणसमन्वयः? तद्विपरीतो वा कश्चिदभिप्रेतः प्रमाणस्य मनसि अवभासते। अवभासते चेद् द्वयोः परीक्षा पुनः स्वयं कार्या, तत्र योऽवतिष्ठते स सिद्धान्तपक्षतया वर्णनीयः। विचारापेक्षिणां पाठकानां मनोरञ्जनाय पूर्वोत्तरपक्षयोरवस्थापनमावश्यकम्। तादृशसमध्ययनन्तु शरीरेन्द्रियमनोबलविहीनस्य पुस्तकसामग्रीदीनस्य रुग्णस्य मम दुर्लभमेव, यच्छक्यं तदनुष्ठेयमिति न्यायेन समुत्कण्ठितमनसा च यदवलोकितम्, तदेव किञ्चित्संक्षेपेण सूचयित्वा समर्थान् अध्ययनशीलान् विदुषः प्रार्थये सम्यगध्ययनाय। इतस्ततः पयांसि संगृह्य दधिरूपतां नीत्वा किञ्चिन्मथितमपि, नवनीतञ्च दृश्यते। कियता मथनेन उदश्वितः पृथङ् नवनीतस्थापनमवशिष्यत इति प्रतिभाति। धन्याः समर्थाः सुधियः श्रमेण सफला भवन्तु इति कामये।

**पञ्चदशे पृष्ठे भूमिकाया अवलोकनीयम्**

**'व्याकरणस्यैव कात्स्न्यं निरुक्तं स्वार्थसाधकञ्च'** इदं मया व्याकरणनिबन्धमालायां सकारणं व्याख्यातं वर्तते। तत्र व्याकरणपदेन प्रातिशाख्यं गृहीतमस्ति, अत्र तु पाणिनीयव्याकरणस्यापि पूरणमवभासते। परं दृष्टिभेदोऽवश्यमनुसन्धेयः। मम लेखे व्याकरणपदेन पाणिनीयं व्याकरणमेवाभिप्रेतम्, अत्र तु पाणिनीयसदृशानि अन्यानि व्याकरणानि निरुक्तं प्रातिशाख्यञ्च गृहीतानि सन्ति। तत्रापि व्याकरणपदार्थस्य व्यापकता पाणिनीयाष्टके दर्शनानुकूलपदार्थानामनुपलब्धे निरुक्ते चोपलब्धेरङ्गीकृता। मम लेखे तु संस्कृतभाषास्वभावानुगमनपुरस्सरं प्रकृतिप्रत्ययादिभागकल्पनया लाघवेन साधुत्वान्वाख्याने भाषास्वरूपज्ञापने च पाणिनीयाष्टकस्य परिपूर्णत्वं वर्णितम्। साधुत्वान्वाख्याने स्वयं परिपूर्णं पाणिनीयं व्याकरणं नान्यत्किमपि अपेक्षत इति मम दृष्टिः। भूमिकायास्तु व्याकरणदर्शनं तदनुकूलपदार्थविद्योतनेन पुष्णाति निरुक्तमिति दृष्टिभेदः।

**तत्रापि क्षुद्रमपि ममाध्ययनमेवं मनुते**

वर्ततां नाम किमपि पाणिनीयं दर्शनम् अपेक्षितपदार्थशृङ्खलासज्जितं परं न तज्ज्ञापनं सूत्र-वार्तिक-महाभाष्याणामुद्देश्यभूतम्। पाणिनेः सूत्राणि ग्रन्थः, सूत्राणां

सूचनामात्रं समुद्देश्यभूतं प्रसिद्धम्। सूचितानां पदार्थानां परस्परं योजनं वाक्यार्थ-महावाक्यार्थसम्पादनं लौकिकैः प्रसिद्धिमुपगतैः सर्वत्र वाक्यार्थोपपादने समर्थैर्यथासम्भवं सर्वैरुपायैरुपपादनम्। **'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्'**[1] इति परिभाषाचिरन्तनी सर्वत्र शास्त्रेषु वाक्यार्थसंयोजिनी पाणिनिनाऽपि केनापि रूपेणावध्याता, वाक्यार्थोपपादकमसिद्धोपायैर्व्याख्यानेन वाक्यार्थपूरणे सम्भवति सौगमाय स्फुटत्वाय वा सूत्रे पदानि समेधयितुं न समीहन्ते स्म पाणिनिमनीषिण इति भावः। तामेव रीतिमनुससार भगवान् कात्यायनः, न व्याचख्यौ न वा व्याख्यानोपायान् प्रदर्शयाञ्चकार, केवलमावश्यकं सूचनीयं सूचयामास।

व्याख्यातुः पतञ्जलेरपि सूक्ष्मरूपस्य क्रमबद्धस्य स्फुटतालाघवादिगुणगुम्फितस्य पाणिनीयाष्टकस्य कलायां श्रद्धामावहतो व्याख्यानेन तन्महिमानं स्फोटयतस्तस्य साधुत्वान्वाख्याने सुरगिरः समनुगमे च परिपूर्णतासमर्थतादिमहत्त्वख्यापनमेव मुख्य-मुद्देश्यं सम्बभूव, न पाणिनीयदर्शनानुकूलपदार्थानां प्रदर्शनम्। बहुविदो व्याख्याकलायां बहूनि लौकिकानि वैदिकानि शास्त्रान्तरनिकाये स्वनिकाये च प्रसिद्धानि उदाहरणा-न्यायान्ति एवेति तादृशेन प्रसङ्गेन केचन पाणिनीयदर्शनोपयोगिनोऽपि विषयास्तत्र समायाताः, न तैः शृङ्खलायामबद्धैर्दर्शनस्वरूपं निर्मातुं शक्यते। प्रववृते च महामनीषी राजाभर्तृहरिस्तदर्थम्। अवश्यमेव किमपि दर्शनस्य स्वरूपं निश्चिकाय, परमल्पा-क्षरबहुलायां सूत्रादिलाघवपरम्परायां पालितः पोषितश्च महान्तं विषयं कारिकाभिः प्रकाशयितुमियेष। तस्यापि मनस्तासु कारिकासु न तुतोषेति संशये, यतः सोपज्ञ-टीकायां स्फोरयितुं प्रारेभे। अन्यमानसविषयं कथं निश्चिनुयाम्? मान्या मनीषिमणयो भूमिकाविधातारोऽपि वाक्यपदीयसमन्वये चिक्लिशुः। तृतीयपृष्ठे **'वाक्यपदीयस्य चातिजटिलतयाऽशुद्धिबाहुल्येन च विषयबोधनाक्षमत्वान्नैव विशुद्धतया स्वान्ता-मोदजनकत्वम्'** इति भूमिकाया अक्षराणि नाहमपि वाक्यपदीये तादृक् तुष्यामि, परं यावान् श्रमस्तत्रापेक्षितस्तावन्तं विधातुं नाधुनाऽप्यपारयमिति न्यूनतयाऽवतिष्ठे। सामर्थ्ये सति पुस्तकानि दुर्लभान्यभूवन्। बहूनां वाक्यपदीयोपरि विचारेषु प्रकाशितेषु सामर्थ्यं मामत्यजत्। अवश्यमुपकारिणो भवेयुर्लेखाः, श्रमोऽपेक्षितः।

तथा चैतैरुपायैर्दर्शनस्वरूपनिर्माणेऽसन्तुष्टा भूमिकानिर्मातारो व्याकरणभिन्न-वेदाङ्गत्वेन प्रसिद्धं निरुक्तं व्याकरणपदस्य व्यापकमर्थं कल्पयन्तो जगृहुः। यतो **'जायतेऽस्ति विपरिणमते'** प्रभृतीन् षड्भावविकारान् वार्ष्यायणिमतं समुद्धरति निरुक्तम्। नाख्यायते चैतद् भूमिकायां शब्दार्थनिरूपणाध्याये त्रिपञ्चाशत्तमे पृष्ठे। एतत्सहायेन च परिणामवादं वैयाकरणसिद्धान्तं निर्णेतुं यतन्ते भूमिकायामेवान्यत्र।

---

१. परिभाषेन्दुशेखरः।

मम तु एवं प्रतिभाति – वाक्यपदीये वर्णिता व्याख्याताश्चेमे भावविकाराः, वस्तुस्वभावतया लोकव्यवहारसिद्धं वार्ष्यायण्युपज्ञतया निरुक्तं गृह्णाति। श्रीभर्तृहरि-महोदयश्च यतः कुतोऽपि अवापत् स्वमनसि वा उद्भावयत् स्वप्रक्रियया चोपयोजितवान् इति का चिन्ता ? नैतावता चामूल्यानि वस्तूनि लभ्यन्ते व्याकरणदर्शनेन। व्याकरण-दर्शनस्य सम्प्रदायविच्छेदश्चानुभवत्येव भूमिका तथा च व्याकरणपदस्य तादृश-व्यापकतार्थकत्वं तस्य निरुक्तेन प्रपूरणञ्च नातिवर्तते। निरुक्तप्रातिशाख्यादीनामपि कार्यसम्पादनं पाणिनीयाष्टकस्य समुद्देश्यमिति व्याकरणग्रन्थमालायां विचारितमेवास्ति। किञ्च चतुर्भिः संघातारम्भपरिणामविवर्तवादैः षड्भावविकारा व्याख्यायन्ते।

द्वादशपृष्ठे ज्ञानप्राधान्येनान्यदर्शनानामवतर इति शीर्षके व्याकरणागमे तु प्रसङ्गे इदमपि चैकचैतन्यप्रधानं ममेदं प्रतिभावं दर्शनम्, परमन्ये दार्शनिका भूत-भौतिकसृष्टिवस्तुषु प्रकाशक्रियावरणादिस्वभावान् अनुस्यूतान् पश्यन्तस्तदुपादानतया प्रकृतिरूपेण सत्त्वरजस्तमस्स्वभावं कारणमप्यङ्गीकुर्वन्ति। वैयाकरणमहर्षयस्तु सर्वेषु सृष्टवस्तुषु शब्दानुविद्धत्वमवलोकयन्तस्तेषामुपादानेऽपि अव्याकृतं वर्णक्रमादि-रहितं श्रवणाद्यगोचरं शब्दं पश्यन्ति। अत एव शाब्दिका अपि ते उच्यन्ते, यथा वेदान्तिनः सत्त्वप्रधानोपाधिकतया विष्णुः, रजःप्राधान्ये ब्रह्मा, तमसा च तादृशेन महेश इति व्यवस्थापयन्ति, तथा वैयाकरणैः शब्दप्रधानोपाधिवशाच्छब्दब्रह्म गीयते। प्रकाशस्वभावस्य सत्त्वस्येव परिणामितया प्रकाशस्वभावस्य शब्दब्रह्मण उपाधेः शब्दस्यापि न चैतन्यकोटौ प्रवेशः, किन्तूपाधिकोटावेव भाष्याभिप्रेतस्य कूटस्थलक्षण-लक्ष्यस्य चैतन्यस्य परिणामेन सांशतया वा कथमपि संस्पर्शो वारणीय एव वैयाकरणा-नाम्, अन्यथा किमवशिष्येत् कूटस्थम्। शब्दस्य चैतन्यस्य चैक्यस्वीकारे चैतन्यस्यापि परिणामिता प्रसज्येत। वाग्योगाभ्यासेन शब्दब्रह्मण उपासनया च रजस्तमसोरभिभवे शुद्धसत्त्वेन सह परया वाचो व्यष्टिरूपायाः प्रकाशे तदधिष्ठितचैतन्यस्य चैको समष्टि-परावागधिष्ठितस्य चैतन्यस्य महतः परमेश्वरस्य वागृषभस्याभिन्नतया उपासकात्मनः सायुज्यमभेदरूपं सिद्ध्यति।

यथा सत्त्वरजस्तमांसि सर्वत्र वर्तमानानि क्षोभवशाद् न्यूनाधिकभावेन मिश्रणा-त्कार्यभेदान् जनयन्ति, तथा विभुः परावागपि प्रकाशस्वरूपा परमात्मन उपाधिः सर्वत्र विद्यते। जीवानां शरीरसृष्टौ आकाशवच्छरीरेऽपि तस्याः प्रवेशः। सा च अक्रमा निरवयवा मूलाधारस्थपवनविशेषसंस्कृता अभिव्यज्यत इति संयतमनसामनुभवः।

सैव च घटपटादिस्थूलशब्दवासनासध्रीचीना सक्रमा स्थूलशब्दाकारेणापि क्रमशः पश्यन्तीमध्यमावस्थाभ्यां मनोगोचरो जायते। एवं विकाररहितकण्ठताल्वादि-स्थानप्रयत्नयन्त्रादिसहायमाप्ता वैखरीरूपेण श्रवणेन साक्षात्क्रियते। संहृतक्रमाद्य-भ्यासवाग्योगविदा स्वमूलाधारस्थपराऽभिव्यक्तिसहकारेण विभुपरायाः परमेश्वरोपाधेः

प्रत्यक्षे स्वात्मनः परमेश्वरेण वागृषभेणाभेदः स्फुरति, तदेव सायुज्यम् । अहमाकाशस्यात्मनो विमर्शोऽन्तःकरणस्येव शब्दाकारस्यापि प्रवेशः । परमात्मा जीवात्मन आत्मा व्यवह्रियते । इदमेव **'अपि प्रयोक्तुरात्मानम्'** इत्यादि वाक्यपदीयपद्येनोक्तम् । भूमिकायां त्रयोदशे पृष्ठे व्याकरणदर्शनस्य सम्प्रदायविच्छेदं संसूच्य खेदः प्रदर्शितः । पुण्यराजहेलाराजभ्यामपि पूर्णा सम्प्रदायपरम्परा नालभ्यतेत्यभिव्यज्यते ततः । श्रीनागोजीभट्टपरिगृहीतव्याकरणदर्शनसम्प्रदायस्य संक्षेपेण सूचितस्य व्याचिख्यासया किञ्चिदिदं प्रदर्शयामि । भट्टमहोदयस्य सम्प्रदायरक्षणे भक्तिरपि दृश्यते । लघुमञ्जूषायाम् अवादिभावरूपां मायाम् अनिर्वचनीयख्यातिञ्च श्रमेण वेदान्तप्रस्थानभिन्नानां साधयितुमखण्डयत् । तद्वशाच्छब्दार्थोभयसंसारस्य मिथ्यात्वं न्यवारयत् ।

दार्शनिकानां मल्लशालाख्यातिवादे भिन्नामेव बौद्धसदृशीम् असतोऽपि वस्तुनो दोषवशादेव सन्निकर्षं विनैव ख्यातिमङ्गीचकार । भूमिकायां निर्दिष्टैः कतिपयैरंशैः सम्प्रदायं तं प्रपूर्य व्यवस्थितरूपञ्च विधाय बृहदारण्यकोपनिषदः सृष्टिप्रक्रियया संयोजयेत् कश्चिद् धन्यो विद्वान् परिश्रमीति काशीविश्वेश्वरं विनिवेदये ।

अहन्तु शब्दस्य चैतन्ये स्फुटं प्रामाणिकं वचनं नोपलभे, व्यवहारस्तु चैत्रश्चेतनश्चैत्रस्य आत्मा चेतन इति विविधः । यथासमन्वयस्तथाऽन्येषामपि वचनानाम्, प्रकाशप्रकाशकत्वव्यवहारः सत्त्वेऽपि परं तस्य न चैतन्यम् ; किन्तु चैतन्याभिव्यञ्जकत्वमेव । तत्सूत्रस्थमहाभाष्यस्य 'सर्वस्य चेतनावत्वात्' इत्यादिवार्तिकं बहवः समुदाहरन्ति, विभोश्चैतन्यस्य सर्वसम्बद्धतया तथा लेखे को विस्मयः ? 'शृणोत ग्रावाणः' इतिवदेव वाक्यसूचितग्रावचैतन्यवद् न शब्दस्य चैतन्यं वैयाकरणाः स्वीकुर्वन्ति । साम्प्रतं पुस्तकं सविधे नास्ति, तथापि निम्नलिखिताभिप्रायं समाधानभाष्यस्य चिरात् स्मरामि—सत्यम् इच्छायां सन् परं परेच्छायाः प्रत्यक्षासम्भवात् प्रतिष्ठासोर्गन्तुमिच्छामि इति वचनं श्रुत्वैव प्रयोक्ता जिगमिषतीति न प्रयुङ्क्ते ; किन्तु प्रस्थानचिह्नानि दृष्ट्वा, तेन भाषास्वभावात् प्रयोगनिमित्तं प्रस्थानचिह्नानि न इच्छा, न वा इच्छा नियता चेतना, आसन्नपतनस्य आसन्नमरणस्य च चिह्नानि अत्रापि इति भाषास्वभावविज्ञो भगवान् चिह्नानि प्रादर्शयत् । तथा च तत्र चेतनाया उपयोग एव वारितः ।

किञ्च अवाधिते आपामरे शब्दत्वेन व्यवहारे सक्रमवर्णाकारत्वं श्रोत्रग्राह्यत्वञ्च शब्दत्वव्यापकं दृष्टम्, तयोरभावे कथं शब्दत्वमङ्गीकार्यम् इति काठिन्यम् । स्थूलानां शब्दानामुपादानतया सूक्ष्मस्य शब्दत्वमिति चेत्, परिणामोपादानतया विवर्तोपादानतया वा ? नाद्या सम्भवति, मूलचैतन्यस्य आत्मनः कैरपि वैदिकैरद्यापि परिणामिताया अनङ्गीकारात् । विमर्शशक्तिवशात्प्रत्यभिज्ञादर्शनं सर्वं शिवमयं ब्रूते, चेत्, धन्यो मम नागेशभट्टो विमर्शको मायाशक्तित एव शब्दब्रह्माणं प्रारभते, परां च परामृशति । तथा च शक्तिवादिनस्तान्त्रिका दार्शनिकाः शक्ति-शक्तिमतोर्भेदाभेदौ वर्णयन्तो मूलकारणस्य

चेतनस्यानेकात्मकतां परिणामितां च वारयन्ति। विवर्त्तोपादानतायाञ्च द्वितीयपक्षे कार्योपादनयोः साजात्यं न कैश्चिदङ्गीक्रियते। अस्मिन् व्याकरणदर्शने विवर्त्ततादात्म्ययोः वैलक्षण्येऽन्यत्र लिखितवान् प्रकाशितवाँश्चेति नात्रोद्धरामि। श्रीभर्तृहरिरपि अनादिनिधनमित्यादिप्रारम्भिकपद्ये विवर्त्तसहायमुपादाने शब्दतत्त्वं कार्ये चार्थभावं विजातीयं प्रदर्शयति। यद्यपि वाक्यपदीये विवर्तपरिणामशब्दौ संकीर्णार्थौ सन्दिग्धार्थौ वेति बहूनां लेखः, तथापि अत्र सम्यक् समन्वेति। अतो मूलोपादानेऽनेकात्मता नेष्यते। तत्र क्रमः संहृतक्रम इत्यादि कल्पनाऽपि नोचिता।

एवं 'प्रजापतिर्भूरिति व्याहरद् भुवमसृजत्' इत्यादिना गन्धवती भूः भूशब्दात्मिका न जाता, अन्यथा पृथिवीशब्दात्मिका क्षयात्मिका उर्वीशब्दात्मिका अन्वेषणीया आपद्येरन्। तादृशि गन्धवति द्रव्ये भूशब्दताऽपि न वास्तविकी, भूशब्दव्यवहारस्य संकेतग्रहाधीनत्वात्, श्रोत्रग्राह्यत्वचक्षुर्ग्राह्यत्वयोर्विरोधात्। भूशब्देन व्यवहरन्नपि अङ्गुल्या निर्दिशन्नपि जानाति यद् बधिरः शब्दं न शृणोति, अन्धश्च भुवं न पश्यति, व्यवहारकालेऽपि बाधितोऽभेदव्यवहारः परस्पराध्यासमूलकः। सामान्यशब्दोपादनस्य परिणामोऽपि भूशब्दः पृथिवीशब्दश्च बाधितं परस्परमभेदं नाश्रयतो मृत्परिणामयोः कुम्भकटाहयोर्भेदात्। तस्माच्छब्दार्थयोरभेदव्यवहारोपपादनाय न एकस्य शब्दात्मकोपादानस्यान्वेषणं सफलम्। शब्दोपासनया शास्त्रे सिद्धिं वर्णयति चेत्, शास्त्रन्तु शालग्रामशिलायां विष्णोरिव, नर्मदाशिलायां शिवस्येव शब्देन समेषां देवानामुपासनां सफलामेव वर्णयति। न तदर्थं वास्तवाभेदसाधनं फलभाक्। शास्त्रं जगन्मूलकारणं शब्दं वक्तीति चेत् सत्यम्, शास्त्रं शब्दमेव वक्ति ; किन्तु तदर्थे तस्य तात्पर्यम्। लोकाः शालग्रामपूजकं विष्णुपूजकं नासत्यं ब्रुवते।

एवं 'न सोऽस्ति प्रत्ययो लोके' प्रभृतिकारिकया हरिणा प्रोक्तः सर्वं ज्ञानं सविषयकमिति न्यायसिद्धान्त इव सर्वं ज्ञानं शब्दविषयकमिति वस्तुतो व्याकरणसिद्धान्तः। तत्रापि यो ह्यर्थः शब्दगोचरस्तस्य वाचक एव शब्दो नान्यो भासते, सोऽपि वाचकः शब्दो यस्य संकेतग्रहो जागर्ति, नान्ये पर्याया अपि इत्यादिकमनुसन्धेयम्। अन्येषामपि दर्शनानां निकाये क्वचिज्ज्ञाने शब्दभानं न सर्वस्मिन्निति विशेषः। परं तेषां न शब्दार्थयोस्तादात्म्यम्, इत्यपि स्मरणीयमेव। तथा ज्ञाने शब्दभानायापि न शब्दार्थयोः शब्दानां वा एकस्य शब्दात्मकस्य मूलकारणस्य कल्पना फलवती। तथा सत्यपि शब्दार्थयोः शब्दानां वा परस्परं वास्तवाभेदसम्पादनासम्भवात्। एवञ्च यत्र क्वचिन्मूलकारणे प्रामाणिकवचनेषु शब्दात्मत्वयोगोऽवभासेत, तत्र शब्दस्य अभि०प्रच्छन्नवाचकत्वादिसरण्या आध्यासिकं तादात्म्यं मृग्यम्। आगमः सर्वप्रमाणापेक्षया प्रबल इत्यभिमानः सम्प्रदायभेदसाधने कलहेऽपि सबलो न सहसा आग्रहणीयः। तस्य दृष्टान्तोऽपि

प्रसिद्धः। प्रत्याक्षानुमित्यादिबाधसहकृत एवागमः। एकं शक्तिव्यपाश्रयादित्यादि-परमप्राचीनं वाक्यपदीयं वचनं कस्मिन् दर्शने न समन्वेति? क्व न शक्तिपदार्थः? अध्यासश्च भूमिकायां त्र्यशीतितमे पृष्ठे लप्स्यते।

एवमपि चिन्तनीयं कृपया मननशीलैः पाठकैः

> क्रियाशक्तिप्रधानायाः शब्दशब्दार्थकारणम्।
> प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्माभवत् परा॥
> बिन्दोस्तस्माद्भिद्यमानाद् रवोऽव्यक्तात्मकोऽभवत्।
> स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते॥

इति वचनद्वयं लघुमञ्जूषासञ्चितं श्रीभर्तृहरिर्यदि अज्ञासीत्, तर्हि भर्तृहरेर्मूल-कारणे चेतने शब्दरूपत्वे तात्पर्यवर्णनप्रयासः केषां कथनं न वृथा? प्रथमेन परायाः प्रथमं कारणं भिद्यमानो बिन्दुरुक्तः। बिन्दोश्च प्रकृतिरूपत्वं न चेतनत्वमुक्तम्। द्वितीयेन तु प्रथमवदेव वर्णयता बिन्दोः प्रकृतिरूपत्वं नोक्तम्। तथा च शब्दशब्दार्थकारणयो रवपरयोः शब्दब्रह्मेति गीयमानयोः स्फुटं सादिता प्रति-पादिता। बिन्दोर्मूलप्रकृतित्वं मूलप्रकृतिमूलकत्वं वेति द्वितीयं वचनं न निर्णयते। प्रकृतेश्च शब्दरूपता नोक्ता। श्रीनागोजीभट्टस्तु वाक्यपदीयपरिशीलनो बिन्दोरपि जायमानत्वं वर्णयति। तथा च वैयाकरणानाम् एतादृशे शब्दब्रह्मणि वाक्यपदीयस्य उपक्रमोपसंहारादितात्पर्यनिर्णायकसम्पादनं रोचेत। अन्येन पथा निर्णयोऽसम्भवः प्रतिभाति इति संसूच्य विस्तरादस्माद् विरमामि। अन्यच्च किञ्चिद् वैयाकरणानां शब्दाद्वैतमूले रवे न्यवेदयमेवम्।

प्रकृतभूमिकायां नागोजीभट्टस्येदं व्याकरणदर्शनसंयोजनं न व्यख्यातं न वा आलोचितम्। तृतीयपृष्ठे 'लघुमञ्जूषादिना च नास्य गतार्थता' इति शीर्षकं निर्माय अस्वरसः प्रदर्शितः। स्वयञ्च महता श्रमेण विविधकल्पनया च या श्रेणिः प्रदर्शिता, तामपेक्ष्य लघुमञ्जूषास्थिता सरणिर्व्यवस्थिता प्रतिभाति, तेन च भूमिकाविषया लघुमञ्जूषया गतार्था इत्यपि न मतम्; अपितु मञ्जूषारीत्याऽपि व्याकरणदर्शनस्वरूप-योजनायां कतिपये भूमिकाविषया अवश्यं योजनीयाः प्रतिभान्ति।

भूमिकायाः साधननिरूपणाध्याये शततमे (१००) पृष्ठे वस्तुतस्तु इत्यादिना व्यवस्थापने विदुषामवधानं प्रार्थये। तत्र सम्प्रदानापादाने न वस्तुतः कारके, कारकाणामविवक्षाशेषः इत्यादिना प्रसिद्धः शेषः कारकम् इति व्यवस्था वर्तते। सम्प्रदानापादानयोर्धात्वर्थः क्रिया न वर्तते, अतस्तयोर्वास्तवं कारकत्वं न भवति। राज्ञः पुरुष इत्यत्र शेषोऽपि क्रियाकारकपूर्वक इत्यादि वाक्यपदीयरीत्या राजा पुरुषाय ददातीति क्रियाकारकपूर्वक एव स्वस्वामिभावस्वरूपं धत्ते। तत्र कर्तृत्वसम्प्रदानत्वादि-विशेषस्याविवक्षायामपि सामान्यं कारकत्वं शेषेऽपि अनुवर्तत एवेत्याद्युपपादनं तत्र द्रष्टव्यम्।

अत्र भाषास्वभावे शाब्दबोधस्वरूपे च ममाप्यनुभवः प्रमाणमिति विश्वास-पुरस्सरं निम्नलिखितो निष्कर्षः। धात्वर्थक्रियाश्रयः कारकमिति न कारकलक्षणम्, धात्वर्थस्य साक्षादाश्रयकर्तृकर्मणी विहाय करणादावव्याप्तेः ? परम्परासम्बन्धेन धात्वर्थाश्रयत्वं सम्प्रदानापादानयोरपि कारकत्वमक्षतम्। भाष्यवार्तिकादिषु सम्प्रदानापादानयोर्धात्वर्थाभावात् सौकर्यविवक्षायां कर्तुरविवक्षायाञ्च कर्मकर्तृभावो न भवतीत्येवोक्तम्, न कारकत्वाभावः। पच्धात्वर्थः पाको बहुव्यापाररूपः। करणाधिकरणादीनां काष्ठस्थाल्यादीनां व्यापाराः प्रज्वलनधारणादयोऽपि पाकान्तर्गतास्तेषु भवति पचतेः प्रयोगः। सम्प्रदानापादानव्यापारौ न धात्वर्थ इति भाषास्वभावः। धात्वर्थानुकूलव्यापाराश्रयः कारकलक्षणम्, धात्वर्थानुकूलाः सम्प्रदानस्यानुमत्यादयोऽपादानस्यावधित्वादयो व्यापारा इति बहवो वैयाकरणा वर्णयन्ति, इति सम्यक्सिद्धान्तः।

शेषोऽपि न कारकम्, कर्तृत्वादीनां समेषां विशेषाणामविवक्षायां सामान्यं क्व तिष्ठेत् ? विशेषमन्तरा सामान्यस्यासम्भवात्। किञ्च राज्ञः पुरुष इत्यादौ स्वस्वामिभावस्यैव समेषां भानमिति सम्बन्धसामान्ये षष्ठ्याः शक्तिः, प्रकरणवशात् स्वस्वामिभावो विशेषो वाक्यार्थः। राजा पुरुषाय ददाति तेन राज्ञः पुरुषे सत्त्वमिति पश्चाद्भावीबोधः केषाञ्चिदेव तथा व्युत्पन्नानां नाभिधा प्रयोज्यः ; किन्तु तादृशशब्दजन्यत्वानुभवे तादृशवासनावतामालङ्कारिकनयेन व्यञ्जनया अन्येषाञ्च मानसो बोध इति अन्या वार्ता। क्रियाकारकपूर्वक इति वाक्यपदीयन्तु वस्तुव्युत्पादनाय प्रवृत्तम्, न तु शब्दयार्थवर्णनाय।

अतः परं वृत्तिनिरूपणाध्याये चतुर्विंशत्युत्तरशततमे पृष्ठे एवं सतीत्यादिना निष्कर्षे चिन्तयन्तु—इदानीं सविधे भाष्यपुस्तकाभावान्मूलसमन्वयासम्भवेऽपि एतदवलोकनोद्बुद्धप्राक्तनभावबोधवासनया भाष्याभिप्रायविषये किञ्चित्सूचयामि। उपपदसंज्ञायां समर्थवचनमिति वार्तिकं प्रत्याचक्षाणस्य भाष्यकारस्येत्थमभिप्रायः। संज्ञासूत्रमिदं न पदविधिरिति समर्थः पदविधिरिति सूत्राप्रवृत्या असमर्थेऽपि उपपदसंज्ञापादनं वार्तिककृतां न सम्यक्, संज्ञासूत्रमिदं न स्वतन्त्रम्; किन्तु विधिसूत्रैकवाक्यतया साधुत्वप्रकारकबोधोपयोगिबोधजनकम्, विधिसूत्रञ्च कर्मण्यण् इति कर्मण उपपदसंज्ञापुरस्सरम् अण् प्रत्ययं विदधाति, तच्च पदविधिस्तत्र समर्थपरिभाषया समर्थोपस्थितौ असमर्थे प्रत्ययस्य उपपदसंज्ञायाश्चाप्रवृत्त्या उपपदसंज्ञायां समर्थवचनमिति वार्तिकं व्यर्थम्। अत्र कर्मण्यण् सूत्रस्य स्फुटं पदविधित्वमुक्तं वृत्तित्वञ्च भाष्याभिप्रेतम्। तथा च भाष्ये कृतो वृत्तित्वेन व्यवहारः। समासेन गतार्थत्वात्कृतो वृत्तित्वस्वीकारो व्यर्थं इति मह्यं न रोचते। यतः प्रथमम् अण्प्रत्यय उपपदसंज्ञा च, तदनन्तरं 'उपपदमतिङ्' इति सूत्रं प्रवर्तते, अन्यथा व्यर्थं स्यात्। असमर्थे कृति उपपदसंज्ञायाञ्च समासस्यासामर्थ्येऽप्रवृत्या नित्यविधेरप्रवृत्त्या च कुम्भं कारमात्रस्य परिनिष्ठत्वमापद्येत।

अतः कृतः पदविधित्वं वृत्तित्वञ्च भाष्यरीत्या सम्यक्। एवञ्चात्र सन्दर्भे 'मूलकेनोपदंशं भुङ्क्ते' इत्यादौ वृत्तित्वारोपकष्टं वृथा भाति। भाष्यरीत्या सर्वस्य कृतो वृत्तित्वात्।

किञ्च भाष्यकारो यथा कर्मण्यण् सूत्रं व्याख्याति, तथा वैयाकरणा 'ण्वुल्तृचौ' इति सूत्रं व्याख्यातुं संनह्यन्ताम्। प्रथमे कर्मणि कर्तरि इति कारकपदद्वयं वर्तते, द्वितीये केवलं कर्तरीति एकम्, एतावान्नेव विशेषः, द्वितीयेऽपि धातोः कर्तरि अनयोः सम्बन्धो वर्तते। अत्रापि पदगन्धोऽयमपि पदविधिः, तस्माद् धातोः तद्धात्वर्थकर्तरि एव प्रत्ययौ भवतो न अन्यार्थकर्तरि। भाषास्वभावोऽपि पाचकपदेन पाककर्ता एव गृह्यते, न छेदनकर्ता। तथा च कृतो वृत्तित्वमेकार्थीभावसामर्थ्यञ्चेति वैयाकरणसिद्धान्तः साधु सङ्गच्छते। अतः प्रकृतिप्रत्ययार्थयोः पृथगुपस्थितेरभावान्मिलितोपस्थितिवशाच्च शाब्दबोधे वैयाकरणनये धात्वर्थण्वुलर्थयोः कश्चिदाकाङ्क्षाप्रयोज्यः सम्बन्धो न भासते, व्यपेक्षासम्बन्धवादिन्यायनये ण्वुलर्थकृती धात्वर्थस्यानुकूलत्वं सम्बन्धो भासते, इति व्यवस्था।

अत्रैव सन्दर्भे भाष्यकृता तु समर्थः पदविधिरिति सूत्रं प्रत्याख्यातमिति भूमिका। तस्याभिप्रायं कैयटे उद्द्योते चेत्यादिना अग्रिमपृष्ठस्य प्रारम्भे वर्णयति भूमिका। तत्रापि अभिप्रायः स्फोरणीयः—समासादावेकार्थीभाववृत्तिस्वीकारेऽपि क्वचित्साकाङ्क्षेऽपि वृत्तिस्वीकारे गमकत्वाद् वृत्तिरिति बहुत्रोच्यते। एवंसति यत्र गमकं तत्र वृत्तिः, असति गमके न वृत्तिरित्यायाति। तथा च समर्थपरिभाषा व्यर्था। लक्ष्यैकचक्षुष्काणां कृते व्यर्था लक्षणैकचक्षुष्काणां कृते सा परिभाषेति प्रदीपोद्द्योतयोर्निष्कर्षो निःसरति। प्रकारान्तरेणापि प्रत्याख्यानं न वस्तुतः प्रत्याख्यानम्। तत्रापि एवं चिन्तनीया आस्तिकानां वैदिकानां मते वेदोऽनादिः, सृष्टेरारम्भे ईश्वरेण वेदोपदेशपक्षेऽपि 'यत्वतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता' इति भामतीरीत्या वेदानुपूर्वी अपि नित्या, तत्सम्बन्धा तन्मूला च सुरसरस्वती भाषा अनादिः, अनादौ च भाषाव्यवहारे वृत्तिमन्तः शब्दास्तत्समर्थकानि च पदानि चिरात्प्रसिद्धानि, तेषां वृत्तिमतामनन्तानां शब्दानां लघुनोपायेन व्युत्पादनाय पाणिनेर्व्याकरणप्रक्रिया। प्रक्रिया च वाक्यैरेव वृत्तिं वर्णयन्ती कार्यशब्दिका जाता। तस्याः कृते वृत्तिव्युत्पादकसूत्राणि तत्सम्बद्धा समर्थपरिभाषा च सफला एव। ये तु नित्यशब्दकास्तेषां वृत्तिविषयाः शब्दा अनादिव्यवहारादेव सिद्धाः, व्यवहारादेव तेषां व्युत्पत्तिरपि इति लक्ष्यैकचक्षुष्काणां तेषां कृते न वृत्तिविषयाणि सूत्राणि, न वा समर्थपरिभाषा उपयुज्यन्ते। अन्यविधसूत्रसूत्राक्षरप्रत्याख्यानवन्नेदं प्रत्याख्यानं वृत्तिविचारे न किमपि कर्तुं प्रभवति, इतस्तु इदमेव शिक्षणीयं यत्प्रथमं संस्कृतभाषा व्यवहारशिक्षा, लाघवेन भाषाव्युत्पत्तये व्याकरणमिति।

एकशेषस्य वृत्तित्वम्

इतोऽग्रे अष्टाविंशत्यधिकशततमे पृष्ठे 'परं नवीनैस्तु' इत्यादिना पदविधि-लक्षणं कृत्तद्धितसमाससन्नाद्यन्तेषु चतसृषु वृत्तिषु तत्समन्वयश्च प्रत्यपादि। एक-शेषस्य चर्चा न कृता, इतः प्राक् तु श्रीनागोजीभट्ट एकशेषं विहाय चतस्रो वृत्तीः प्रदर्शितवानित्याद्युक्तम्।

एवमेव छात्रावस्थायां श्रीनित्यानन्दजीशेखरटीप्पणसहायेन ममानुभवः। परं सकृदेकस्य वैयाकरणपुङ्गवस्य मुखाच्छात्रावस्थायामेव 'एकशेषे पदविधिलक्षणं न प्रयाति, तत्र सामर्थ्योपस्थितेः फलमपि नास्ति' इति श्रुतं चिरात्स्मरामि। त्रिंशतो वर्षेभ्यः प्राक् संस्कृतं पत्रे प्रसङ्गान्तरवशात्तावदेव सूचयित्वा प्राकाशयञ्च, यदधुना मम व्याकरणनिबन्धमालायां लभ्येत। साम्प्रतन्तु एतद्विषयिणीमेनां भूमिकां विलोक्य व्यचिन्तयम्—किं चिरादियमेवावस्थाऽस्य विषयस्य अथवा किञ्चित् परावर्तताऽपि। अन्वेषणमर्हति, परमन्वेषणस्य पङ्गोर्मम का शक्तिः ? द्वित्रा व्याकरणाध्यापका अन्यान् वैयाकरणान् पृष्ट्वा वक्तुं मया प्रार्थिताः। अनुष्णाशीतास्ते तथैवातिष्ठन्। वरीयां-सश्चिराद् भूरिव्याकरणशास्त्रमध्यापयन्तोऽभ्यस्तशास्त्राः सविधवर्तिनः सन्तः श्रीशशिधरमिश्रमहोदयाः पृष्टा यथाऽवोचन् तथा सैवावस्थाऽस्येति प्रत्यभात्।

तदापि चेतसि समुदैत—पदविधिलक्षणमिदं नातिचिरन्तनम्। श्रीपर्वतीयमहो-दयेन कुतश्चित्प्राप्तं स्वयं वा निर्मितम्। बहुषु व्याकरणपुस्तकेषु एकशेषयुताः पञ्चवृत्तय उपलभ्यन्ते, लक्षणनिर्मातुर्महापण्डितस्य दृष्टिरेकशेषे नापतदिति न सम्भवति। अन्यासु वृत्तिषु इव एकशेषेऽपि लक्षणसमन्वयः कृतो भवेत्। अथवा एकशेषवृत्तित्वं विद्विषतस्तस्य विदुषस्तादृशो विद्वषोऽध्यापने लेखे वा अवश्यं प्राचलत्। उभयोरधुना प्रचाराभावोऽध्येतॄणां प्रमादेन परम्पराभङ्गकृत एव। किं सत्यमिति विचिकित्सायामेक-शेषस्य सहविवक्षापर्यवसाय्येकार्थीभावसामर्थ्यनिमित्तकत्वं मम प्रथमं प्रास्फुरत्। द्वन्द्वे तथा द्वन्द्वार्थस्यैकसम्बन्धेनैकशेषेऽपि। ध्रुवं पश्य खदिरं छिन्धि इत्यसहविवक्षायां द्वन्द्वो न भवति, तथा धरण्याः पालनस्य क्षमायाश्च वासस्य नृपे विवक्षायाम् असहविव-क्षया क्षमयोरित्येकशेषो न जायते, एवं सकर्मतयोभयोश्छेदनपदार्थान्वयविवक्षायां सहविवक्षावशाद् धवखदिरौ छिन्धीति यथा द्वन्द्वः, तथा स्वकर्तृकवासाधिकरणतया नृपेऽन्वयविवक्षायां सहविवक्षासम्पत्त्या वासेन तस्मिन् क्षमयोरित्यादिप्रयोगः प्रसिद्ध्यति, असहविवक्षायां द्वन्द्वैकशेषौ न भवत इति सुरगिरः स्वभावावधारणाय चेष्टन्तां पाठकाः। न तथा व्यवहारे शाब्दबुद्धिरुदेतीति परीक्षन्ताञ्च। शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जयेत्याद्यसमस्तस्थले यथा यथासंख्यान्वयः सुबोधो न तथा द्वन्द्व-घटकानां समसंख्यानां यथासंख्यान्वयः, समुदायस्य समुदायेऽन्वयेन द्वन्द्वं सम्पाद्य पुनर्यथासंख्यान्वये यथासंख्यसूत्रसामर्थ्यवर्णनेन क्लिश्यन्ति। अजाविधनौ देवदत्त-

यज्ञदत्तौ न ज्ञायते कस्याविः कस्याजा धनमित्युदाहरन्ति च। तथा चैकशेषस्य वृत्तित्वं विधित्वञ्चेष्टम्।

एवं सति समापतिता वैकशेषविधावपि पदविधिलक्षणसमन्वयाय कल्पना प्रसरतु तत्रभवतां पाठकविवेचकानाम्। पदसंज्ञाप्रयोजकसुप्प्रत्ययप्रयोजकप्रातिपदिकसंज्ञोद्देश्यतावच्छेदकार्थवत्त्वसम्पादकविधिरेकशेषविधिरिति कल्पनाया मार्गः। प्रत्यर्थं शब्दाभिनिवेश इति पक्षे प्रतिव्यक्ति बोधायैकैकशब्दप्रयोगोपयोगे नानाव्यक्तिबोधाय नानाशब्दप्रयोगे प्रसक्ते एकः शिष्यते, अपरे लुप्यन्ते इति एकशेषविधिकार्यम्। यः शिष्यते स लुप्यमानार्थाभिधायीति वैयाकरणानां वाक्यशेषः। अर्थाभिधायित्वमर्थबोधकत्वमर्थवत्त्वं फलति। एकस्यां शब्दव्यक्तौ नानार्थनिरूपितां शक्तिमर्थवत्त्वं सम्पादयत्येकशेषविधिरिति तस्य मार्जनम्।

धन्येयं भूमिका याऽसमर्थमपि मामेतावन्तं मार्गं बलात्प्राचालयदिति तद्विधातारं धन्यतमं मन्यमानः श्रान्तोऽग्रे गमनाद् विरमति विद्वद्दयोदयबुभुक्षुर्मुमुक्षुभवनीयः काशीमुमूर्षुः केदारनाथ ओझाः।



# मीमांसकमते मोक्षविचारः

श्री एस्० सुब्रह्मण्यशास्त्री
शास्त्रचूडामणि-आचार्यः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

❀ ❀ ❀

पूर्वमीमांसकेषु भगवान् जैमिनिरेवेदानीमुपलभ्यमानग्रन्थकर्तृषु प्राचीनतमत्वेन वक्तुं शक्यते। ततः पूर्वकालेऽपि मीमांसका आसन्नेव बादरि-बादरायण-काशकृत्स्न-आत्रेय ऐतिशायनादीनां सूत्रेषूदाहरणात् काशकृत्स्नीया मीमांसा इति महाभाष्यवचनात् काशकृत्स्नेन मीमांसाग्रन्थोऽपि व्यरचीत्यूह्यते। तत्र च जैमिनिरनीश्वरवादीति प्रसिद्धिस्तु तत्कृतमीमांसासूत्रेषु देवतानां फलदातृत्वं निराकृत्य कर्मण एव फलदातृत्वाभ्युपगमात्। परन्तु जैमिनीयशिव**वेदपादस्तवस्य** प्रसिद्धत्वात्, तस्य श्रीशिवताण्डवदर्शनार्थं चिदम्बरक्षेत्रागमनं ताण्डवदर्शनं तदेवाधिकृत्य स्तोत्ररचनं तस्य च स्तवस्य अद्यापि तस्मिन् क्षेत्रे पूजकैः पठनं च जैमिनेः अतिशायिनीं शिवभक्तिं सूचयन्ति।

अपि च ब्रह्मसूत्रेषु आमनन्ति चैनमस्मिन् इति सूत्रे[1] जाबालोपनिषदमुदाहृत्य मूर्धादिचिबुकान्ते वैश्वानरस्य सम्पदुपासनोदाहरणाद् जैमिनिः देवताविग्रहादिकमिच्छतीत्येव जानीमः।

अपि च ब्राह्मेण जैमिनिरुपन्यासादिभ्य इति चतुर्थाध्यायचतुर्थपादीयसूत्रेण[2] मुक्तो यावत्सर्वमुक्ति अपहतपाप्मत्वादि सत्यसंकल्पत्वान्त गुणाष्टकयुक्तेश्वररूपेणावतिष्ठते इति स्पष्टमवगमात् जैमिनिः सेश्वरवादीत्यत्र न सन्देहः।

यत्तु फलमत उपपत्तेरित्यधिकरणे (३ २-३७), धर्मं जैमितिरत एव (३-२-३९) इति पूर्वपक्षसूत्रेण जैमिनिः धर्म एव फलदाता, नेश्वरः इति वदन् न देवतानां विग्रहं मन्यते। एवं देवताधिकरणे मध्वादिष्वसंभवादनधिकारं जैमिनिः इति सूत्रेण जैमिनेः मध्वाद्युपासनास्वनाधिकारोक्तिः, ततः ज्योतिषि भावाच्चेति आदित्यादीनां ज्योतिर्वाचिसूर्यादिपरत्वात् न तेषामधिकार इत्युक्तम्, न तदितरदेवानां देहवत्त्वं निवारयति। फलदानानुक्तिस्तु पूर्वमीमांसायां निर्णीतप्रकारेण देवतानां विग्रहसम्भवेऽपि न फलदातृत्वम्। तत्तु ईश्वरस्यैवेत्यभ्युपगमादुपपद्यते। तदभ्युपगमश्च कर्मप्राधान्यं दृढीकर्तुमित्यभिप्रयन्ति मीमांसकाः। अत एव संकर्षकाण्डीयचतुर्थतृतीयपादीये यस्यै देवतायै वषट्कुर्यात्, तां ध्यायेदित्यादिसूत्रे यस्यै देवतायै वषट्कुर्यात् तां मनसा ध्यायेत् इति

---

१. वे० सू० १।२।७६। २. तदेव-१४।४।४।

विधौ देवताशब्दस्य ध्यानं विधीयते, उत देवतास्वरूपस्य करचरणादिविशिष्टस्येति सन्देहे अर्थस्यैव ध्यानं पूर्वपक्षिते तत्कथं नवमे देवताविग्रहनिराकरणाद् इति शङ्कायां भाष्यवाक्यं सत्यं निराकृतं न पुनस्तन्निरासोऽधिकरणार्थः, न देवता न फलं न देवता-प्रयुक्ता धर्मा न च स्वरूपेण देवता कर्माङ्गभावं प्रतिपद्यत इत्यधिकरणार्थः। यत्र पुनः देवताध्यानमुपदिश्यते, तत्रेतिहासपुराणमन्त्रार्थवादस्मृत्यधीनदेवतास्वरूपं हविषि गृहीते ध्येयं इति समर्थितं दृश्यते। अत एव धर्मं जैमिनिरिति सूत्रस्यापि देवतायाः फलदातृत्वाभाव एवाभिमतः, न तु विग्रहाभाव इत्यत्र तात्पर्यम्—तस्माद् जैमिनिः ईश्वरं स्वीकरोतीत्येवावगम्यते। ईश्वरस्तु शिववेदपादस्तुत्यनुरोधात् शिव एव। निर्गुणं ब्रह्मापि जैमिनिरभ्युपगच्छत्येव, परं जैमिनिर्मुख्यत्वात् साक्षादप्यविरोधं जैमिनिः इत्यादि सूत्रेभ्यो ब्राह्मेणेति सूत्रं तु यावत्सर्वमुक्ति मुक्तस्येश्वरभावापत्तिरिति सिद्धान्त-मुपोद्बलयति। एतेन मूलमहर्षेः मुक्तौ न विवादः।

व्याख्यातारौ भट्टप्रभाकरौ तावद् वेदान्तसिद्धं निर्गुणं ब्रह्म तत्साक्षात्काराद-विद्यानिवृत्तौ मोक्षः प्रपञ्चमिथ्यात्वं चाङ्गीकुरुत इति सप्रमाणं निरूप्यते।

भट्टप्रभाकरस्तावत् बृहत्यां (पृ० २३९) यदि परं ब्रह्मविदामेष निश्चयः यदुप-लभ्यते, तदसत्, यन्नोपलभ्यते तत्तत्त्वं इति—नमस्तेभ्यो विदुषिनोत्तरं वाच्यमित्यत्र परिहार इति प्रपञ्चमिथ्यात्वाभ्युपगमः, तथा यदुक्तं अहङ्कार-ममकारौ अनात्मन्यात्मा-भिमानौ इति मृदितकषायाणामेवैतत् कथनीयम्, न कर्मसंगिनाम् इत्युपरम्यते। आह च भगवान् द्वैपायनः—

'न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम्' इति रहस्याधिकारे तस्मान्न विवृतमत्र भाष्यकारेण भगवता वचनानुरोधाद् नाज्ञानात्–इति।

अत्र प्रभाकराभिप्रायेण भाष्यकारस्याप्यद्वैतसम्प्रदाय एव तात्पर्यम्, परं तु आत्मनोऽकर्तृत्ववादिवेदान्तसिद्धान्तस्यात्र प्रकटने न कोऽपि कर्मसु प्रवर्तेत कर्मशास्त्र-व्याख्यानं सन्दर्भविरुद्धं च स्यादिति। एतेन स्वाभिप्रायोऽपि अद्वैताभिमतपदार्थेषु मुक्तौ च वर्तत एवेति सूचितम्।

श्रीकुमारिलभट्टास्तु आत्मवादान्ते वदन्ति इत्याह—

**नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या।**
**दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन॥**

इति आत्मवादमुपसंजहार। ग्रहैकत्वाधिकरणे तु (३–१–७)—

**शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते।**
**तदप्यधिष्ठितं सर्वमेकेन परमात्मना।**
**तत्रर्वेदादयो देहाः प्रोक्ता येऽपि पृथक् पृथक्।**
**भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगताः सदा॥**

इत्यादिना आत्मचैतन्यस्य सर्वत्रोपादानतया अनुगमोपगमाद् ब्रह्माद्वैतवादः सम्मत इति वक्तुं शक्यते। आत्मस्वरूपज्ञानदाढर्यं वेदान्तेभ्योऽधिगन्तव्यमिति वदन् वार्तिककारः अद्वैतवेदान्तमेवाभिप्रैति विशिष्टाद्वैतद्वैतमतानामर्वाचीनत्वाद् वेदान्तपदेन तत्काले अद्वैतस्यैव व्यवहरणाच्च ।

स्वयं च भट्टः शिवभक्तः, अत एव श्लोकवार्तिकारम्भे—

विशुद्धज्ञानदेहाय त्रिवेदी दिव्यचक्षुषे ।
**श्रेयः प्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥**

इति श्रीशिव एव नमस्कृतः ।

एतत्सर्वं मीमांसाशास्त्रमूलग्रन्थकर्तॄणां मोक्षविषये तत्रापि श्रीशङ्करभगवत्पाद-पुरस्कृताद्वैतमोक्षविषये महान् समादरोऽस्तीति प्रदर्शयितुमुक्तम् । इतः परं भट्टसोमे-श्वरपार्थसारथिमिश्रादीनां मोक्षविषयेऽभिप्रायो विविच्यते। यद्यपि मीमांसकानां उदयनादितार्किकवद् अद्वैत एव परमं तात्पर्यं परमादरश्च; तथापि तत्तद्दर्शननियमानु-सरणेन बद्धत्वात् ते तन्मतानुसारेणैवात्मस्वरूपं निरूपयन्ति, अन्यथा अद्वैते कर्तृत्व-भोक्तृत्वयोः आत्मनि परमार्थतः असम्भवात् मीमांसकानां कर्मानुष्ठाने प्रेरणं दुष्कर-मापद्येत । तार्किकाणां च—

**न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।**
**उपासनैव क्रियते श्रवणानन्तरागता ॥**

इत्युदयनोक्तरीत्या न्यायशास्त्ररीत्या ईश्वरानुमाने परिष्कृते सति तेन संस्कृतबुद्धीनां निर्विघ्नं वेदान्तविचारे प्रवेष्टुं बुद्धिपाटवं लभ्येत सोपानारोहणन्यायेन ।

इदानीं मीमांसकैः स्वसिद्धान्तरीत्या कीदृशं मोक्षमिच्छन्ति तत्साधनं च किमिति विवेचनीयं वेदान्तोक्तरीत्या मोक्षोपगमे तत्साधनस्य ज्ञानस्य निर्विकल्पक-अकर्तृभोक्तृब्रह्मसाक्षात्काररूपतया कर्म साहचर्यं न संभवतीति प्रकारान्तरमेवाव-लम्बनीयम् । तत्र समन्वयाधिकरणप्रथमवर्णकरीत्या भट्टमतं व्याख्येयम् । तत्र च पक्षे उपनिषद्गतानां ब्रह्मवाक्यानां कर्मसूद्देश्यभूतदेवतापरत्वं त्वंपदार्थबोधकवाक्यानां कर्मकर्तृजीवप्रतिपादकत्वमिति संक्षेपः ।

मीमांसाभाष्यकरैः **'स एष यज्ञायुधीयजमानः अञ्जसा स्वर्गं लोकं याति'** इति श्रुतिः प्रत्यक्षविरुद्धा कर्मानुष्ठातुः समनन्तरं स्वर्गमनादर्शनात्, अतः उक्तं वचनं 'ग्रावाणः प्लवन्ते' इतिवदप्रमाणम्, अतः 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रप्रमाणमिति पूर्वपक्षे प्राप्ते सूत्रसमर्थनार्थं शरीरव्यतिरिक्तमात्मानं स्वर्गगन्तारं प्रसाधयति । तादृशात्मप्रमाणनिरूपणपरं सूत्रं नोपलभ्यते ।

वेदान्तभाष्यकाराः श्रीशङ्करभगवत्पादास्तु एक आत्मनः शरीरे भावात् इति सूत्रभाष्यारम्भे (३-३-५३) ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तम् इति शङ्कित्वा समाहितं-सत्यमुक्तं भाष्यकृता न तु तत्रात्मास्तित्वे सूत्रमस्ति। इह तु स्वयमेव सूत्रकृता तदस्तित्वं आक्षेपपुरस्सरं प्रतिष्ठापितम्। अत एव भगवता उपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रशक्तौ शारीरके वक्ष्याम इत्युद्धारः कृत इति। यद्यपि विषयसम्बन्धप्रयोजनाधिकारिभेदाद् वेदान्तशास्त्रं पूर्वमीमांसाया भिन्नमेव ऐकशास्त्र्यं वदन्तोऽपि प्रायः पूर्वतन्त्रं न पठन्ति, पूर्वतन्त्रपठनेन वैराग्यं न प्राप्नुवन्ति च; तथापि एकवेदार्थविचाररूपत्वेनोभयोः शास्त्रयोः एकत्वमभ्युपेत्य भगवद्भिः शास्त्रप्रमुखे इत्युच्यते।

यथाश्रुतग्राहिणां तु पूर्वमीमांसायां मोक्षविचारो नापेक्षित इत्यपि वक्तुं शक्यते। यतो हि कर्मकाण्डे—**'प्रजामनु प्रजायते तदु ते मर्त्यामृतम्'** (तै. ब्रा.), **'प्रजाभिरग्ने अमृतत्वमस्याम्'** इत्यादिवाक्यैः पुत्रपौत्रादिपरम्परया मूलपुरुषस्य जीवनमेव कर्मकाण्डाभिप्रेतममृतमिति प्रतीयते। एवं 'अमृतमेभ्य उदगायत् सहस्रं परिवत्सरान्' इति सहस्रसंवत्सरजीवनरूपममृतत्वं गानेन सम्पादयामासेत्यर्थः। एवं **'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति'** 'अपाम सोमममृता अभूम'—इत्यादिकमपि वाक्यजातं दीर्घकालस्थायित्वं वा पुत्रपौत्राद्यनुवृत्तिर्वा अमृतत्वं प्रतीयते। तथापि कर्मकाण्ड एव **'अग्निमुग्धो हैव धूमतान्तः स्वं लोकं न प्रति प्रति प्रजानाति'** इत्यादयः स्वात्मलोकोऽन्योऽस्ति, तत्र प्रयत्नः कार्य इति सूचयति। उपनिषत्स्वेव केषुचित् प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म, (मु-१-२) इति कर्मप्राप्यं अमृतत्वं न शाश्वतं इति सूचयन्ति। **'तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते'** (छा० ८-२) इत्यादयः कर्मप्राप्य लोकस्य क्षयिष्णुत्वं विस्पष्टमाहुः।

अपि च तत्तु समन्वयादित्यधिकरणे प्रथमवर्णके भट्टमतरीत्या पूर्वपक्षोद्भावने भाष्यवाक्यं 'वेदानां क्रियापरत्वस्य जैमिनिना आम्नायस्य क्रियार्थत्वात्' इति सूत्रेणोक्त्वाद् वेदान्तानामक्रियार्थानामानर्थक्यं अध्ययनविध्युपात्तत्वाद्वा कर्तृदेवतादिप्रतिपादनेन क्रियाविधिशेषत्वं उपासनादिक्रियान्तरविधानार्थत्वं वा इति। द्वितीयवर्णके च क्रियाविधिशेषतयैव वेदान्तानां ब्रह्मप्रतिपादनार्थत्वम्, यथा—आत्मा द्रष्टव्यः, आत्मेत्येवोपासीत् इत्यादिश्रुतेः इति च प्रतिपादनाद् मीमांसकमतं स्वर्गादिसाधनक्रियामेव पर्यवस्यति। स्वर्गाद्यतिरिक्तनित्यमोक्षे मीमांसकाभिप्रायो न दृश्यत इति केचन मन्येरन्; तथापि भट्टप्रभाकरयोः भाष्यव्याख्यात्रोः नित्यमोक्षोऽपि मीमांसकाभ्युपगतोऽस्ति। स च ज्ञानकर्मसमुच्चयसाध्य इत्यभिधानाद् मीमांसाया दर्शनत्वप्रसिद्धेश्च तन्मते कीदृशो मोक्षः ? कथं च सः सम्पादनीयः ? इति जिज्ञासूनामुपकाराय तन्मतमत्र प्रदर्श्यते।

तथा हि भट्टाचार्याः—आत्मा स्वयंज्योतिरिति भाष्यम्, तदर्थत्वेन वार्तिके—

ज्ञानशक्तिस्वभावोऽतो नित्यः सर्वगतः पुमान् ।
देहान्तरक्षमः कल्प्यः योऽगच्छन्नेव योक्ष्यते ॥
यजमानत्वमप्यात्मा सक्रियत्वात् प्रपद्यते ।
न परिस्पन्द एवैकः क्रिया नः कणभोजिवत् ॥
न च स्वसमवेतैव कर्तृभिः क्रियते क्रिया ।
क्रिया धात्वर्थमात्रं स्यात् अन्याधारेऽपि कर्तृता ॥
सत्ताज्ञानादिरूपाणां कर्त्ता तावत् स्वयं पुमान् ।
योऽपि भूतपरिस्पन्दस्तत्राधिष्ठानतो भवेत्[1] ॥

इत्यादिश्लोकैः भट्टाः स्वाभ्युपेतात्मनः स्वरूपं वर्णयन्ति । आत्मा विभुः ज्ञानादिगुणवान्, तस्य यागादिषु कर्तृत्वं तदनुकूलकृतिमत्वमेव । कृतिश्चात्मधर्मो ज्ञानादौ कर्तृत्वं तु आश्रयत्वमेव । क्रियासु कर्तृत्वं शरीरेन्द्रियादीनामेव साक्षात्, आत्मा तु तत्तत्क्रियानुकूलज्ञानादिमत्वात् कर्त्ता । तदुक्तम्—"अन्याधारेऽपि कर्तृता"—इति ।

पार्थसारथिमिश्रास्तु शास्त्रदीपिकायां आत्मा शरीरेन्द्रियप्राणमनोभ्यो भिन्नः विभुश्च, तस्याणुत्वे युगपत् शिरः पादयोः वेदनानुपलम्भप्रसंगः । प्रतिदेहं चात्मा भिन्नः, एकत्वे चैत्रानुभूतस्य मैत्रेण स्मरणापत्तेः, स चात्मा स्वप्रकाशः । तत्त्वं च स्वेनैव वेद्यत्वम् । अत एव मामहं जानामीति सार्वजनीनः प्रत्यय आत्मनः कर्तृत्वकर्मत्वोभयविषयकः । स्वयमेव प्रकाशत इति स्वप्रकाशत्वमिति व्याख्याने आत्मनः सुषुप्तौ भानप्रसङ्गः ।

भट्टसम्मतः आत्मा सिद्धान्तबिन्दौ मधुसूदनसरस्वतीभिरित्थं निरूपितः—जडो बोधात्मक आत्मा, तदर्थश्च आत्मा अंशद्वयवान्—चिदंशः, जडांशश्चेति । तत्र चिदंशेन आत्मा द्रष्टा, सोऽहमिति प्रत्यभिज्ञागोचरश्च । अचिदंशेन तु ज्ञानसुखादिरूपेणात्मा-परिणमत इति । जानामीति प्रत्यये ज्ञेयत्वं च ज्ञानरूपातीन्द्रियव्यापारेण विषयनिष्ठ-ज्ञाततारूपसंवित्कर्तृत्वं चेति तद्व्याख्यातारः । एतादृशात्मनो बन्धो नाम आत्मनः प्रपञ्चसुखदुःखादिसम्बन्धः ।

मोक्षस्तु सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते । पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम्, इति भट्टोक्तेः आत्मज्ञानं संयोगपृथक्त्वन्यायेन क्रत्वर्थं पुरुषार्थं च । तत्र **'अविनाशी वा अरेऽयमात्मा, मात्राऽसंसर्गस्तस्य भवति'** इति श्रुतौ मात्राशब्देन भूतेन्द्रियधर्माभिधानात् शरीरादिव्यतिरिक्तनित्यात्मप्रतिपादनपूर्वकस्य 'आत्मा वा

---

१. श्लोकवार्तिकम् आत्मवादे – ७३-७६ ।

अरे द्रष्टव्य इत्यात्मज्ञानविधेः फलाश्रवणाद् दृष्टसम्भवे अदृष्टकल्पनाऽयोगात् कर्मप्रवृत्तिसिद्ध्यर्थत्वं निश्चीयते, असंसारिस्वरूपात्मज्ञानस्य तु कर्मप्रवृत्त्यर्थत्वायोगाद् मोक्षरूपपुरुषार्थत्वमेव ।

पुरुषार्थरूपमात्मज्ञानं द्विविधम्—अभ्युदयार्थं मोक्षार्थं चेति । तत्र च य आत्मा 'अपहतपाप्मा विजरो विमृत्युः' (छा.७) इत्यादिश्रुत्युक्तापहतपात्मत्वादिगुणाष्टकविशिष्टस्य सगुणात्मज्ञानस्य फलं **'स यदि पितृलोककामो भवति, यदि मातृभ्रातृस्वसृलोककामो भवतीत्यादौ संकल्पादेवास्य पित्रादयः समुत्तिष्ठन्ति'** इति श्रुत्युक्तं योगजं अणिमाद्यैश्वर्यं फलम् । निर्गुणात्मज्ञानस्य तु निःश्रेयसं फलम् 'ब्रह्मलोकमभि संपद्यते, न स पुनरावर्तते' इत्यत्र ब्रह्मैव लोकोऽभिप्रेतः, तत्प्राप्तिः फलं कर्तृत्वभोक्तृत्वादिपरित्यागेन शुद्धनिजरूपतयाऽवस्थानं मोक्षोऽभिहितः । मोक्षार्थी च काम्यप्रतिषिद्धे त्यक्त्वा नित्यनैमित्तिके कुर्यात् प्रत्यवायपरिहाराय । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते' इत्यादिकं तु अर्थवादो ज्ञानमात्रेण वस्तुनाशासम्भवात् । ननु बन्धहेतुकर्मनाशादेव मोक्षसिद्धेः, ज्ञानवैफल्यं शङ्कनीयम् । सत्यपि पूर्वकर्मक्षये कर्तृत्वाभिमानानिवृत्तौ मुमुक्षोः पुनः जन्महेतुभूतकर्मकरणप्रवृत्तेः अनिवार्यत्वात् ।

ननु मोक्षे आनन्दानुभवः कथम् ? तस्य मोक्षकाले उत्पत्तिस्वीकारे अनित्यत्वात् मुक्तस्य पुनरावृत्तिप्रसंगात् इति चेत् । अयं भट्टानामभिप्रायः आत्मनि स्वाभाविकः आनन्दोऽस्ति, स च संसारदशायां वायुविक्षिप्तदीपवद् न स्पष्टं प्रकाशते, दुःखमिश्रत्वात् । मुक्तौ तु दुःखविगमात् स्पष्टं प्रकाशते । तदुक्तम्—

**निजं यत्त्वात्मचैतन्यं आनन्दश्चेष्यते च यः ।**
**यच्च नित्यविभुत्वादि तेनात्मा नैव मुच्यते ॥**

पूर्वोक्तं अभावात्मको मोक्ष इति मतं मतान्तराभिप्रायकमित्याहुः ।

श्रीपार्थसारथिमिश्रास्तु—मोक्षे आनन्दानुभवः मोक्षकालेऽपि मनसोऽनुवृत्त्यैवोपपादनीयः । स च मोक्षस्य अमनस्कत्वश्रुतिविरुद्ध इति दुःखाभावात्मक एव मोक्ष इत्यभिप्रयन्ति । तदुक्तं वार्तिके— न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् । तस्य च ध्वंसत्वादेवानन्त्यम् । तन्निर्वाहश्चेत्थम्—यो हि देहद्वयाद्विविक्तं अजमजरमात्मानं विजानाति, तस्य विविक्तस्य पूर्वकृतकर्मणां भोगेन क्षयः । काम्यप्रतिषिद्धयोरकरणात् स्वर्गनरकवारणम् । देहपाते सकलदुःखध्वंसरूपो मोक्षः । तत्र मुमुक्षुः नित्यनैमित्तिके कुर्यात् प्रत्यवायपरिहाराय । आत्मस्वरूपज्ञानात् संचितपुण्यापुण्यनिवृत्तिः—इत्यंज्ञानकर्मसमुच्चयमाहुः ।

प्राभाकरास्तु-आत्मा जडः, तद्धर्मो ज्ञानं स्वप्रकाशम् । स्वप्रकाशत्वं न स्वविषयकत्वम्; अपि तु परप्रकाश्यत्वाभावः । सुखादयोऽप्यात्मधर्मा ज्ञानं सर्वमिति मातृमेयविष-

यक्तं ज्ञाने प्रकाशते। तत्र घटादिज्ञानेऽपि आत्मा भासते 'घटमहं जानामी'त्येव प्राथमिकज्ञानोदयात्।

अस्मिन् मते निखिलदुःखनिवृत्तिर्मोक्षः सांसारिकसुखमपि दुःखमिश्रत्वाद्दुःखमेव। न च मोक्षे आनन्दः श्रुतिसिद्ध इति वाच्यम्, वेदस्य कार्यपरत्वाद् सिद्धस्याबोधकत्वात्। न चात्मसुखं संसारदशायामभिभूतम्, तस्य स्वप्रकाशज्ञानात्मकत्वात्। न च परमप्रेमास्पदत्वाद् आत्मा आनन्दः। दुःखनिवृत्तावेव जनानां प्रेमदर्शनात्, इति स एव मोक्षः। आत्मा प्रतिशरीरं भिन्नः, विभुश्च, आत्यन्तिकदुःखोच्छेदो मोक्षः।

मोक्षसाधनं तु—निषिद्धकाम्यवर्जनं शरीरारम्भभयात् प्रारब्धं भोगेन क्षीयते सञ्चितं तु आत्मचिन्तनेन निवर्तनीयम्।

श्रीमधुसूदनसरस्वत्यस्तु भाट्टसम्मतमोक्षमेवमाहुः—ज्ञानकर्मसमुच्चयादेव नित्यज्ञानेन नित्यसुखाभिव्यक्तिः मोक्षः। मानसज्ञानेन वा तदभिव्यक्तिः। तन्मते आत्यन्तिकदुःखनिवृत्तिर्मोक्ष इत्यन्ये—इति।

● ● ●

# शब्दशक्तिप्रकाशः

डॉ० श्रीरामपाण्डेयः
न्यायवैशेषिकविभागाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालस्य

बोधे बाधाविधानां पटुकटुकरिणां दर्पमालान्तदक्षा-
सैंही शक्तिः पदानां नयमतिललिता कामदा काचिदन्या ।
तर्कैर्वक्रैर्दुरूहा बुधवनवनिता मान्यशास्त्रैकमार्गा,
ध्वान्ताध्वोद्धूलिलीलां दलयति भयदां चिन्तिता चिद्विधात्री ॥

वीणापाणिप्रसूतागमवननिवहे तत्त्वसौन्दर्यसिक्ता,
भुक्तास्तर्कैः करालैर्मुनिमतिततिभिः सान्द्रमोदं दधाना ।
मान्या धन्या वदान्या हरति मतिमतां सर्पदर्पं दयार्द्रा,
लोकज्योत्स्ना सुधा सा जयति जयकरी बोधदा शब्दशक्तिः ॥

चण्डा पण्डाप्रभावैस्त्रिभुवनजयिनी तार्किकाणां कदैका,
ज्योतिःशास्त्रार्थमञ्चे जगति विजयते युक्तिपुञ्जाञ्चिताशा ।
चिन्ता चेतोहराणां सृजति नवनवां शास्त्रचर्चां बुधानां
तामूहे शब्दशक्तिं सुरवरवचसां न्यायकान्तारगोऽहम् ॥

जीवनाधायकः प्राणो विविधब्रह्माण्डभाण्डस्य व्यवहार एवेति विदन्ति समे व्यवहारनारायणानुगाः संसारिणः । व्यवहारमन्तरा सचेतसां सामाजिकानां ह्लादकारि जीवनं दुःशकमिति न तिरोहितं विपश्चितां सुरसरस्वतीसमुपासकानां मतिमताम् । वाच्यवाचकाभ्यां प्रवर्तमानः स व्यवहारो दृष्टिगोचरीक्रियते प्रतिपलं जगति व्यवहारानुभवैकमर्मज्ञैरप्रतिमप्रतिभाप्रभावभाभासुरैर्बोधशीलैकरत्नैः । मनुजो वाच्यमवगत्य वाङ्मयेन निजीयेन बोधयते मनुजान्तरम् । बोधनमिदमेव व्यवहारत्वेन दिश्यते । व्यवहारोऽयं वाच्यवाचकसम्बन्धपरतन्त्रः । अज्ञातसंसर्गकः शब्दो हृदयहारी नैव जायते । न विच्छित्तिविशेषं कमपि वा जनयते । अतः प्राक् सम्बन्धस्य विमर्शः परमावश्यकः ।

स च संसर्गः सारस्वतानां पुरस्तात् संस्कृतापारपारावारे शक्तिलक्षणाव्यञ्जना-तात्पर्यभेदाद् वृत्तिनाम्ना चतुर्धा चर्च्यमानोऽवद्योतते ।

न्यायशास्त्रे तु शक्तिलक्षणाभेदाद् द्विविध एव स गीयमानो राजते। अविदितरमा वाक् प्रबोधाय न कल्पतेऽक्लेशाय च न विकल्पतेऽपित्वबोधं जनयन्ती बहुलक्लेशायैव जायते। प्रस्तुते ह्रस्वकाये प्रबन्धे शक्तिरेव वाच्यवाचकत्वेन सङ्क्षेपेणैव प्रकाश्यते।

शक्तिसान्निध्येनैव शब्दार्थौ व्यवहारप्रदौ। शक्तिशून्यं मानवं प्रौढा प्रत्यहं दुःखदैव यथा तथैव अज्ञातशक्तिका वाक् कदापि नैव रमयति श्रोतारं वक्तारं पाठकं लेखकं वा दक्षमपि मनुजम्। अभिज्ञानभिज्ञपरिचायिका सा सर्वत्र वाग्व्यवहारे ताण्डवं तनुते। अतः शक्तेः स्वरूपस्य प्रकाशोऽन्वेष्य आवश्यकः।

**वाच्यवाचकभावः**

वाच्यश्च वाचकश्चेति वाच्यवाचकौ तयोर्भावो वाच्यवाचकभावः। वाच्य-वाचकशब्दयोर्द्वन्द्वः। तदनन्तरं भावशब्देन सह षष्ठीतत्पुरुषः। द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति पथा भावशब्दस्य वाच्यशब्देन वाचकशब्देन च सह सम्बन्धो बोध्यः। अनया रीत्या वाच्यवाचकभावशब्दो वाच्यभावो वाचकभाव इत्युभयरूपतां धत्ते। वाच्यभावो वाच्यता, वाचकभावश्च वाचकता, वाच्यता अर्थे पदस्य सम्बन्धो वाचकता च पदेऽर्थस्य सम्बन्धः।

वाच्यता—यत्रार्थे यः शब्दो वक्त्रा आदिमेन सङ्केतितः सोऽर्थस्तस्य शब्दस्य वाच्यः। स च शब्दस्यार्थस्य वाचकः।

यथा घटे घटशब्दो वक्त्रा आदिमेन परमेश्वरेण सङ्केतित इति घटो घट-शब्दस्य वाच्यो घटशब्दश्च घटरूपस्यार्थस्य वाचकः।

सङ्केतश्चायं समासतस्त्रिधा अयमर्थोऽस्माच्छब्दाद्बोधव्यः (प्रथमः) अयं शब्दोऽमुमर्थं बोधयतु (द्वितीयः) अस्यार्थस्य बोधोऽस्माच्छब्दाज्जायताम् (तृतीयः)।

अमीषु प्रथमोऽर्थविशेष्यकशब्दज्ञानजन्यबोधविषयत्वप्रकारकः। द्वितीयः शब्दविशेष्यकार्थविषयकबोधजनकत्वप्रकारकः। चरमश्च अर्थविषयकबोधविशेष्यकशब्द-ज्ञानजन्यत्वप्रकारकः।

विनिगमनाविरहादेषु प्रत्येकमेव शब्दार्थयोः सम्बन्धः। सम्बन्धत्वं तदविना-भावि सप्रतियोग्यनुयोगिकत्वं चैतस्य तयोरनिवार्यसम्बन्धकयोः सम्बन्धान्तरानुप-पत्त्योपपन्नम्।

**आद्यसङ्केतानुकूलं वाच्यत्वम्**

शब्दज्ञानजन्यबोधविषयत्वनिष्ठाश्रयत्वसंसर्गावच्छिन्नप्रकारतावत्त्वसम्बन्धेन सङ्केतः। सङ्केतीयशब्दज्ञानजन्यबोधविषयत्वनिष्ठाश्रयत्वसंसर्गावच्छिन्नप्रकारतावत्त्वं वा आद्यसङ्केतानुगुणं वाच्यत्वम्।

प्रकारतावत्ता च स्वनिरूपितविशेष्यत्व-स्वावच्छिन्नावच्छेदकत्वसंसर्गावच्छिन्न-प्रकारतानिरूपितविशेष्यत्व-स्वावच्छिन्नप्रकारतानिरूपितसंसर्गतावच्छेदकत्वैतदन्यतम-संसर्गेण ।

'घटो घटपदजन्यबोधविषयो भवतु' इत्यर्थके 'घटो घटशब्दाद्बोधव्य इत्याकारके सङ्केते घटशब्दज्ञानजन्यबोधविषयत्वं घटे आश्रयतासंसर्गेण प्रकारः ।

घटत्वे च समवायसंसर्गावच्छिन्नावच्छेदकता—समवायनिष्ठावच्छेदकतानिरूपितावच्छेदकतासंसर्गेण प्रकारः ।

अत उक्तसङ्केतीया शब्दज्ञानजन्यबोधविषयत्वनिष्ठाश्रयत्वसंसर्गावच्छिन्नप्रकारता स्वनिरूपितविशेष्यतावत्त्वसंसर्गेण घटे ।

स्वावच्छिन्नसमवायसंसर्गावच्छिन्नावच्छेदकत्वसंसर्गावच्छिन्नप्रकारतानिरूपित-विशेष्यतासंसर्गेण घटत्वे ।

स्वावच्छिन्नप्रकारतानिरूपितसंसर्गतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतासंसर्गेण समवाये च वर्तत इति घटघटत्वसमवाया घटशब्दस्य वाच्याः ।

**उक्तसङ्केतानुकूलं वाचकत्वम्**

अर्थविशिष्टाश्रयत्वसंसर्गावच्छिन्नप्रकारत्वावच्छिन्नविषयत्वनिष्ठविशेष्यतानिरूपित-प्रकारत्वावच्छिन्नबोधनिष्ठविशेष्यतानिरूपितप्रकारत्वावच्छिन्नजन्यत्वनिष्ठविशेष्यता-निरूपितप्रकारत्वावच्छिन्नज्ञाननिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वसंसर्गेण सङ्केतः ।

सङ्केतीयार्थविशिष्टाश्रयत्वसंसर्गावच्छिन्नप्रकारत्वावच्छिन्नविषयत्वनिष्ठविशेष्य-तानिरूपितप्रकारत्वावच्छिन्नबोधनिष्ठविशेष्यतानिरूपितप्रकारत्वाच्छिन्नजन्यत्वनिष्ठ-विशेष्यतानिरूपितप्रकारत्वावच्छिन्नज्ञाननिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वं वा आद्य-सङ्केतानुगुणं वाचकत्वम् ।

विषयत्वनिष्ठाश्रयत्वसंसर्गावच्छिन्नप्रकारतायामर्थवैशिष्ट्यम्—स्वनिष्ठविशेष्य-तानिरूपितत्व-स्वनिष्ठविशेष्यानिरूपितसमवायसम्बन्धावच्छिन्नावच्छेदकत्वसंसर्गावच्छिन्न-प्रकारत्वावच्छिन्नत्व–स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपित-संसर्गतानिरूपितप्रकारत्वावच्छिन्नत्वैतदन्यतमसंसर्गेण ।

शब्दज्ञानजन्यबोधविषयत्वनिष्ठाश्रयत्वसंसर्गावच्छिन्नप्रकारतायां घटः स्वनिष्ठ-विशेष्यतानिरूपितत्वसंसर्गेण । घटत्वं स्वनिष्ठविशेष्यतानिरूपितप्रकारतावच्छिन्नत्व-संसर्गेण । समवायश्च–स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितसंसर्गतानिरूपित-प्रकारत्वावच्छिन्नत्वसंसर्गेण विद्यत इति घटघटत्वसमवायानामुक्तसम्बन्धानां घटशब्दे सत्त्वेन घटशब्दो घटघटत्वसमवायानां वाचकः ।

## द्वितीयसङ्केतानुसारि वाच्यत्वम्

शब्दनिष्ठविशेष्यतानिरूपितजनकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपित-बोधनिष्ठप्रकारत्वाच्छिन्नविशेष्यतावत्त्वसंसर्गेण सङ्केतः ।

सङ्केतीयशब्दनिष्ठविशेष्यतानिरूपितजनकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यता-निरूपितबोधनिष्ठप्रकारत्वावच्छिन्नविशेष्यतावत्त्वं वा द्वितीयसङ्केतानुकूलं वाच्यत्वम् ।

विशेष्यतावत्त्वञ्च—स्वनिरूपितविषयत्वसंसर्गावच्छिन्नप्रकारत्व—स्वावच्छिन्न-विशेष्यतानिरूपितस्वावच्छिन्नविषयत्वसंसर्गावच्छिन्नप्रकारत्व—स्वावच्छिन्नविशेष्य-तानिरूपितविषयत्वनिष्ठसंसर्गतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदक-त्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वैतदन्यतमसंसर्गेण ।

'घटशब्दो घटविषयकबोधजनको भवतु' इति सङ्केते बोधे घटो विषयता-सम्बन्धेन, घटत्वं च स्वावच्छिन्नविषयता—समवायनिष्ठावच्छेदकताकत्वनिष्ठावच्छेद-कताकविषयतासंसर्गेण प्रकारः ।

अत उक्तसङ्केतीया घटशब्दनिष्ठविशेष्यतानिरूपितबोधनिष्ठप्रकारत्वावच्छिन्न-बोधनिष्ठविशेष्यता स्वनिरूपितविषयत्वसंसर्गावच्छिन्नप्रकारतासंसर्गेण घटे ।

स्वावच्छिन्नविशेष्यतानिरूपितस्वावच्छिन्नविषयत्वसंसर्गावच्छिन्नप्रकारतासंसर्गेण घटत्वे, स्वावच्छिन्नविशेष्यतानिरूपितप्रकारतानिरूपितसंसर्गतानिरूपितावच्छेदकता-निरूपितावच्छेदकतानिरूपितावच्छेदकत्वसंसर्गेण समवाये च .वद्यत इति घटघटत्व-समवायानां घटशब्दवाच्यत्वम् ।

## द्वितीयसङ्केतानुसारि वाचकत्वम्

अर्थविशिष्टबोधनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितजनकत्वनिष्ठविशेष्यत्वा-वच्छिन्नप्रकारतानिरूपितविशेष्यतावत्त्वसंसर्गेण सङ्केतः ।

सङ्केतीयार्थविशिष्टबोधनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितजनकत्वनिष्ठ-विशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावत्त्वं वा द्वितीयसङ्केतानुगुणं वाचकत्वम् ।

बोधनिष्ठविशेष्यतायामर्थवैशिष्ट्यञ्च—स्वनिष्ठविषयत्वसंसर्गावच्छिन्नप्रकारता-निरूपितत्व—स्वावच्छिन्नविषयत्वसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाच्छिन्नत्व-स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितावच्छेदकताकसंसर्गतानिरूपितप्रकार-तानिरूपितविशेष्यत्वावच्छिन्नत्वैतदन्यतमसंसर्गेण ।

बोधनिष्ठविशेष्यतायां घटः स्वनिष्ठविषयत्वसंसर्गावच्छिन्नप्रकारतानिरूपितत्व-संसर्गेण, घटत्वं स्वावच्छिन्नविषयत्वसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाव-च्छिन्नत्वसंसर्गेण, समवायश्च—स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपिता-

वच्छेदकताकसंसर्गतानिरूपितप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वसंसर्गेण विद्यत इति तत्तदर्थविशिष्टबोधनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितजनकत्वनिष्ठविशेष्यत्वावच्छिन्नजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यतावत्त्वसंसर्गेण द्वितीयसङ्केतस्य, द्वितीयसङ्केतीयार्थविशिष्टबोधनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितजनकत्वनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावत्त्वस्य वा घटशब्दे सत्त्वेन घटशब्दस्य घटघटत्वसमवायानां वाचकत्वम् ।

**तृतीयसङ्केतानुकूलं वाच्यत्वम्**

शब्दज्ञानजन्यत्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यतावत्त्वसंसर्गेण सङ्केतः । सङ्केतीयशब्दज्ञानजन्यत्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यतावत्त्वं वा तृतीयसङ्केतानुकूलं वाच्यत्वम् ।

**विशेष्यतावत्ता** च—स्वावच्छिन्नविशेष्यतानिरूपितविषयत्वसंसर्गावच्छिन्नप्रकारतावत्त्व—स्वावच्छिन्नविशेष्यत्वावच्छिन्नविशेष्यतानिरूपितस्वावच्छिन्नविषयत्वसंसर्गावच्छिन्नप्रकारतावत्त्व-स्वावच्छिन्नविशेष्यत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताकविषयत्वनिष्ठसंसर्गतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्त्वैतदन्यतमसंसर्गेण ।

'घटविषयकबोधो घटपदजन्यो भवतु' इत्याकारके तृतीये सङ्केते घटशब्दजन्यत्वविशेष्यीभूते बोधे घटो विषयतासम्बन्धेन प्रकारः, घटत्वं स्वावच्छिन्नविषयतासमवायनिष्ठावच्छेदकतानिरूपितस्वनिष्ठावच्छेदकताकविषयतासंसर्गेण प्रकारः ।

अत उक्तसङ्केतीयघटशब्दज्ञानजन्यत्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यतायाः स्वावच्छिन्नविशेष्यतानिरूपितविषयत्वसंसर्गावच्छिन्नप्रकारतावत्त्वसंसर्गेण घटे । स्वावच्छिन्नविशेष्यत्वावच्छिन्नविशेष्यतानिरूपितस्वावच्छिन्नविषयत्वसंसर्गावच्छिन्नप्रकारतावत्त्वसंसर्गेण घटत्वे, स्वावच्छिन्नविशेष्यत्वावच्छिन्नविशेष्यतानिरूपितप्रकारताकविषयत्वनिष्ठसंसर्गतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्त्वसंसर्गेण समवाये सत्त्वेन उक्तान्यतमसंसर्गावच्छिन्नघटशब्दज्ञानजन्यत्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यतावत्त्वसंसर्गेण तृतीयसङ्केतवत्तया घटघटत्वसमवायानां घटशब्दवाच्यत्वम् ।

**तृतीयसङ्केतानुगुणं वाचकत्वम्**

अर्थविशिष्टबोधत्वावच्छिन्नविशेष्यतानिरूपितजन्यत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितनिरूपित्वसंसर्गावच्छिन्नप्रकारतासम्बन्धेन सङ्केतः ।

सङ्केतीयार्थविशिष्टबोधत्वावच्छिन्नविशेष्यतानिरूपितजन्यत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितनिरूपितत्वसंसर्गावच्छिन्नप्रकारतावत्त्वं वा तृतीयसङ्केतानुकूलं वाचकत्वम् ।

बोधत्वावच्छिन्नविशेष्यतायामर्थवैशिष्ट्यम्—स्वनिष्ठविषयत्वसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्व--स्वनिष्ठस्वावच्छिन्नविषयत्वसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्व–स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेकतानिरूपितविषयत्वनिष्ठसंसर्गताकप्रकारतानिरूपितविशेष्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वैतदन्यतमसंसर्गेण ।

उक्तसङ्केते शब्दजन्यत्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यतायां स्वनिष्ठविषयत्वससंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वसंसर्गेण घटवैशिष्ट्यस्य, स्वनिष्ठस्वावच्छिन्नविषयत्वसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वसंसर्गेण घटत्ववैशिष्ट्यस्य, स्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपितविषयत्वनिष्ठसंसर्गताकप्रकारतानिरूपितविशेष्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वसंसर्गेण समवायवैशिष्ट्यस्य च सत्त्वेन उक्तरीत्या अर्थविशिष्टबोधत्वावच्छिन्नविशेष्यतानिरूपितजन्यत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितनिरूपितत्वसंसर्गावच्छिन्नप्रकारतासंसर्गेण तृतीयसङ्केतस्य घटपदे सत्त्वेन घटपदे घटघटत्वसमवायानां वाचकत्वम् ।

शाब्दबोधोपायभूतः शब्दार्थसंसर्गबोधः—उक्तवाच्यवाचकत्वेषु वाच्यत्वज्ञानमेव शाब्दबोधौपयिकं न तु वाचकत्वज्ञानम् । घटवाचकत्वस्य घटत्ववाचकत्वशरीरे समवायान्यसंसर्गेण उल्लिख्यमानतया घटत्वस्य स्वरूपतः प्रकारत्वसम्भवेन घटत्ववाचकत्वस्य च ज्ञाने निर्बाधेऽपि समवायवाचकत्वशरीरे समवायस्य जात्यखण्डोपाधिभिन्नत्वेन स्वरूपतः प्रकारत्वासम्भवेन समवायत्वानुपस्थितौ समवायवाचकत्वज्ञानस्य दुर्घटतया तद्दशायां घटपदात् समवायेन घटत्वप्रकारको बोधो नोपपद्येत ।

यदि च वाच्यत्वज्ञानस्य शाब्दबोधे हेतुत्वं मन्येत तदा घटं विशेष्यविधया घटपदं प्रकारविधया वाच्यत्वं च संसर्गविधयाऽवगाहमाने तत्र संसर्गकुक्षौ घटत्वसमवाययोः स्वरूपतो भाने बाधकाभावेन नानुपपत्तिः काचनापि ।

शाब्दबोधोपायभूतस्य वाच्यताबोधस्याकारः—उक्ते त्रिविधेऽपि सङ्केते शाब्दबोधौपयिकं वाच्यताज्ञानं घटो घटपदवान् इत्याकारकमेव घटपदवत्ता च तत्तत्सङ्केतस्थले संसर्गभेदेन ।

तथाहि—प्रथमसङ्केतविषयक उक्तज्ञाने घटपदवत्ता स्वज्ञानजन्यबोधविषयत्वनिष्ठाश्रयत्वसंसर्गावच्छिन्नप्रकारतानिरूपितसङ्केतीयविशेष्यता घटे घटपदस्य संसर्गः ।

अत्र च संसर्गं आश्रयत्वसंसर्गावच्छिन्नप्रकारतायां घटत्वनिष्ठविशेष्यतानिरूपित समवायसंसर्गावच्छिन्नावच्छेदकतासंसर्गावच्छिन्नप्रकारत्वावच्छिन्नत्वं विशेषणविधया प्रविष्टम्। अतोऽस्य ज्ञानस्य घटत्वसमवाययोरपि वाच्यत्वावगाहितयाऽस्माद् बोधात् समवायेन घटत्वप्रकारकघटविशेष्यकशाब्दबोधोदये काचिद्बाधा न।

द्वितीयसङ्केते घटपदवत्ता—स्वनिष्ठविशेष्यतानिरूपितजनकत्वनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितबोधनिष्ठप्रकारत्वावच्छिन्नविशेष्यतानिरूपितविषयत्वसंसर्गावच्छिन्नसङ्केतीयप्रकारतासंसर्गेण।

अत्र च सम्बन्धे विषयत्वसंसर्गावच्छिन्नघटनिष्ठप्रकारतानिरूपितबोधनिष्ठविशेष्यतायां समवायसंसर्गावच्छिन्नस्वनिष्ठावच्छेदकताकविषयत्वसंसर्गावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वं विशेषणविधया प्रविष्टम्।

अतोऽस्य ज्ञानस्यापि घटत्वसमवाययोर्वाच्यत्वावगाहितया नास्मादपि ज्ञानात् समवायेन घटत्वप्रकारघटविशेष्यकशाब्दबोधोदये कापि विपत्तिः।

**तृतीयसङ्केते घटपदवत्ता च**

स्वनिष्ठनिरूपितत्वसंसर्गावच्छिन्नप्रकारतानिरूपितजन्यत्वनिष्ठविशेष्यत्वावच्छिन्नस्वरूपसंसर्गावच्छिन्नजन्यत्वनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यत्वावच्छिन्नबोधनिष्ठविशेष्यतानिरूपितविषयत्वसंसर्गावच्छिन्नप्रकारतासंसर्गेण।

अत्र च संसर्गे विषयत्वसंसर्गावच्छिन्नघटनिष्ठप्रकारतानिरूपितबोधत्वावच्छिन्नविशेष्यतायां स्वनिष्ठसमवायसंसर्गावच्छिन्नावच्छेदकताकविषयत्वसंसर्गावच्छिन्नघटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नत्वं विशेषणविधया प्रविष्टम्। अतोऽस्य ज्ञानस्यापि घटत्वसमवाययोर्वाच्यत्वावगाहितयाऽस्मादपि ज्ञानान्न समवायेन घटत्वप्रकारकघटविशेष्यकशाब्दबोधोदये संशीतिसर्पः कश्चन।

दिङ्निर्देशो विधाया नयमतिविदुषां शब्दवृत्तेः सुधायाः
सङ्क्षेपेणैव बोध्यः सुरवरवचसां साधकैः पुण्यभाग्भिः।
कान्तारे रौद्ररूपे प्रवशति कुशलो न्यायराद्धान्तराधो
नाहं विज्ञोऽनभिज्ञः परिषदि भवतां बालचेष्टैकचेष्टः॥

• • •

# सुप्तिङ्वचननिर्णयः

डॉ० रामप्रसादत्रिपाठी
वेद-वेदाङ्गसंकायाध्यक्षचरः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

१. एकविशेष्यवाचकपदविशेषणपदयोः समभिव्याहारे विशेष्यवाचकपदेन समानलिङ्गवचनकं विशेषणपदं साधु, उतासमानलिङ्गवचनकम् ?

२. तथाऽनेकलिङ्गवचनकविशेष्यपदेषु विशेषणपदं किं लिङ्गवचनकं साधु ? इति विमृश्यात्र निर्णयो विहितः ।

३. उद्देश्यविधेयवाचकयोः प्रकृतिविकृतिवाचकयोरारोप्यारोपविशेष्यवाचकयोश्च पदयोर्यत्र वाक्ये समभिव्याहारोऽस्ति, तत्र किम् उद्देश्याद्यनुगुणमाख्यातवचनम्, उत विधेयाद्यनुगुणमित्यपि संशयमपाकृत्य निर्णयो विहितः ।

"घटो नीलः" इत्यादिवाक्यस्य केनचिदपि शिष्टेन साधुत्वानभ्युपगमात् 'असति विशेषानुशासने विशेष्यविशेषणवाचकपदयोः समानवचनकत्वमिति नियमः स्वीकृतोऽस्ति । अतश्च—"विंशत्याद्याः सदैकत्वे" इति कोशानुशासनात् 'शतं ब्राह्मणाः' इत्यस्य साधुत्वेऽपि 'वेदाः प्रमाणम्', 'त्रयः समुदिता हेतुः', 'जात्याकृतिव्यक्तयः पदार्थः', इत्यादीनां कथं साधुत्वमिति जिज्ञासायां यद्युच्यते—विशेष्यविशेषणपदयोर्यत्र समानलिङ्गकत्वमस्ति, तत्रैव समानवचनकत्वनियमः, यथा "घटो नीलः" इत्यादौ । वेदाः प्रमाणमित्यादौ तु समानलिङ्गकत्वाभावेन तन्नियमाप्रसक्त्या न साधुत्वानुपपत्तिरिति तावताऽपि 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि', 'पितरो देवताः' इत्यादौ साधुत्वानुपपत्तिरेव । असमानलिङ्गकस्थले विशेष्यवाचकपदासमानवचनकस्यापि विशेषणपदस्य साधुत्वे तादृशस्थले औत्सर्गिकैकवचनस्यैव सर्वत्र विशेषणपदानन्तरं प्रयोक्तुमुचितत्वात् ।

अत्रोच्यते—यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसङ्ख्याविरुद्धसङ्ख्याया विशेषणवाचकपदोत्तरविभक्त्या अविवक्षा, तत्र विशेष्यविशेषणपदयोः समानवचनकत्वमिति नियमस्वरूपस्वीकारे सर्वमिष्टं संगृहीतमनिष्टं च व्यावृत्तं भविष्यति ।

तथा हि 'घटो नीलः' इत्यत्र विशेष्यवाचकं पदं घट इति पदम्, तदुत्तरविभक्तिस्तत्तात्पर्यविषयसंख्या बहुत्वसंख्या, तद्विरुद्धसंख्या एकत्वादिसंख्या, तस्या विशेषणवाचकनीलपदोत्तरजस्विभक्त्या विवक्षा नास्तीति समानवचनकत्वनियमस्य

तत्रास्ति प्रसक्तिः । एवं प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि, पितरो देवता इत्यादावपि विशेष्यवाचकं शब्दान्तं पदं पितृपदं च, तदुत्तरजस्विभक्तितात्पर्यविषयीभूतबहुत्वसंख्यातो विरुद्धसंख्याया अविवक्षितत्वाद् विशेष्यविशेषणवाचकपदयोः समानवचनकत्वं सङ्घटते । वेदाः प्रमाणमित्यत्र तु विशेष्यवाचकवेदपदोत्तरजस्विभक्तितात्पर्यविषयीभूतबहुत्वसंख्यातो विरुद्धाया एकत्वसंख्याया विशेषणवाचकप्रमाणपदोत्तरसुविभक्त्या विवक्षितत्वेनोक्तनियमस्याप्राप्त्या एकत्वबोधकमेकवचनं साध्वेव ।

ननु प्रमाणपदार्थः प्रमितिकरणम् । एवं च प्रमितिकरणेषु नानावेदेष्वेकत्वरूपस्यैकवचनार्थस्य कथं समन्वयः ? यदि तु प्रकृत्यर्थताऽवच्छेदके प्रमितिकरणत्वे एकत्वान्वय इत्युच्यते, तदाऽपि प्रमितिकरणेषु केषु वेदेषु कथमेकमेव प्रमितिकरणत्वं युज्येत, इति चेत्, समाधीयते—यथाऽनेकेषु घटेष्वेकमेव घटत्वम्, तथाऽनेकेष्वपि प्रमितिकरणेषु वेदेष्वेकमेव प्रमितिकरणत्वं युक्तमिति नायोग्यताप्रसरः ।

एवं च एकत्वविशिष्टं यत्प्रमितिकरणत्वं तद्वदभिन्ना वेदाः । यावच्छब्दनिष्ठशाब्दप्रमाकरणत्वं च शब्दत्वाऽवच्छिन्नमेकमेव, शब्दत्वजातेरवच्छेदिकाया ऐक्याद् अवच्छेद्ये शाब्दप्रमितिकरणत्वेऽपि लाघवादैक्यमेत्र स्वीकर्त्तुमुचितम् । यावच्छब्दनिष्ठमित्यत्र यावच्छब्दपदेनाप्तोक्तः प्रमाणभूतशब्द एव ग्राह्यः, अनाप्तशब्देषु प्रमाणत्वानङ्गीकारात् ।

**'त्रयः समुदिता हेतुः'** इत्यत्र समुदिता इति विशेष्यपदम्, हेतुपदं विशेषणपदम्, तदुत्तरसुविभक्त्या एकत्वं विवक्षितम् । हेतुपदं च लक्षणया कार्योत्पत्तिप्रयोजकताऽवच्छेदकसमुदायत्वावच्छिन्नपरमिति तादृशसमुदायत्वे सुविभक्त्यर्थैकत्वस्यान्वयः । अन्यथा तृणारणिमणीनां वह्निं प्रति यथा पृथक् पृथगेव हेतुत्वं स्यात्, तच्च नेष्यते, मिलितानामेवैषामत्र हेतुत्वाभ्युपगमात् । एवं च एकत्वविशिष्टं यत् काव्योत्पत्तिप्रयोजकताऽवच्छेदकसमुदायत्वम्, तद्वदभिन्नास्त्रयः । 'जात्याकृतिव्यक्तयः पदार्थः' इत्यत्र पदार्थपदं विशेषणपदम्, तदुत्तरसुविभक्तेरेकत्वमर्थो विवक्षितः, तच्चैकत्वं जात्याकृतिव्यक्तिनिष्ठे पदार्थत्वेऽन्वेति, पदार्थत्वं पदवाच्यत्वं पदशक्तिरूपम् । तच्च जात्यादित्रितये एकमेवेति तत्रैकत्वस्यान्वयः सुघटः । एवं चैकत्वविशिष्टं यत्पदार्थत्वम्, तद्वदभिन्ना जात्याकृतिव्यक्तय इति बोध्यम् ।

'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इत्यत्र प्रमितिकरणत्वरूपस्य प्रकृत्यर्थताऽवच्छेदकस्य प्रत्यक्षानुमानादिनिष्ठस्यैकताया बाधितत्वेनाविवक्षितत्वाद् विशेषणवाचकप्रमाणपदस्य बहुवचनान्तत्वोपपत्तिः । प्रत्यक्षादीनामिन्द्रियसंयोगादिलक्षणसामग्रीभेदेन प्रमात्वव्याप्यप्रत्यक्षत्वादिजातिभेदेन च तन्निष्ठप्रमाकरणत्वस्यापि भेदात् ।

**'पितरो देवताः'** इत्यत्रापि पितृपितामहादिष्वेकं देवतात्वं नास्तीति पितृपितामहादिषु यद् देवतात्वम्, तत्रैकत्वं नास्तीत्येकत्वस्याविवक्षितत्वाद् विशेषणवाचकं देवता-

पदे बहुवचनान्तमेव साधु। यतश्च त्यागोदेश्यतात्वमेव देवतात्वम्। त्यागोद्देश्यता च पित्रादौ वर्त्तते, उद्देश्यताऽवच्छेदकं च पितृत्वपितामहत्त्वादिकम्, न च पितृत्व-पितामहत्वादिकमेकमस्ति—इत्युद्देश्यताऽवच्छेदकपितृत्वादिभेदेनोद्देश्यताया अवश्यं भेदात्। तद्भेदे चोद्देश्यतारूपदेवतात्वस्यापि, अर्थाद् भेदे तत्रैकत्वस्य बाधो बोध्यः।

अत एव च **'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः'** इति कारिकाया व्याख्यानावसरे उक्तं भूषणसारकृता—**'धातुरित्यत्र स्मृत इति वचनविपरिणामेनान्वयः'** इति। तत्रत्यदर्पणाख्यटीकाकारेण च तादृश विरुद्धसंख्यायाः प्रकृते विवक्षायां बीजाभावं प्रदर्शयता वचनविपरिणामेनैकवचनान्तेन स्मृत इत्येवं रूपेणाभेदान्वयस्य समर्थनं पर्यपोषि।

उक्तस्यास्य वचननिर्णायकनियमस्य समर्थनं महामुनिना पाणिनिना पतञ्जलिना च बहुशः कृतमस्ति। तथा हि **'तरप्तमपौ घः[१]' 'क्तक्तवतू निष्ठा[२]'** इत्यादिसूत्रेषु विशेषणवाचकघ-निष्ठा इत्यादिपदोत्तरसुविभक्त्या तादृशविरुद्धैकत्वसंख्याया विवक्षाऽस्ति इति कृत्वा समानवचनकत्वाभावः।

अयं भावः—यथा 'जात्याकृतिव्यक्तयः पदार्थः' इत्यत्र पदशक्तिरूपस्य पदार्थत्वस्यैकत्वं विवक्षितमस्ति, तथैवात्रापि घ-निष्ठा इत्यादिपदशक्तिरूपस्य तत्तद्वाच्यत्वस्यैकत्वं विवक्षितमस्ति। तत्र शक्तता (वाचकता) घपदनिष्ठादिपदनिष्ठा च, तदवच्छेदको धर्मः घपदत्वं निष्ठापदत्वादिकं च। शक्यता च तरप्तमब्निष्ठा, क्तक्तवतु इत्यादिनिष्ठा च, शक्यतावच्छेदको धर्मोऽन्यतरत्वादिः। यत्र च तादृशविवक्षा नास्ति, तत्र भवति समानवचनकत्वम्। यथा 'प्रादयः[३]', 'उपसर्गाः क्रियायोगे[४]' इत्यत्र प्रादय इति विशेष्यपदम्, तदनुगुणम् उपसर्गा इति विशेषणपदम्। एवमेव 'स्वतन्त्रः कर्ता[५]', 'साधकतमं करणम्[६]' इत्यादौ बोध्यम्।

महाभाष्येऽपि[७]—'कानि खलु शब्दानुशासनस्य प्रयोजनानि' इति प्रश्नवाक्ये विशेष्यविशेषणपदयोः समानवचनकत्वमादृतम्। अग्रे—'रक्षोहागमलघ्वसन्देहाः' प्रयोजनमित्याकारके समाधानवाक्ये तादृशविवक्षावशात् समानवचनकत्वाभावः समादृतः। तथा हि—विशेषणवाचकप्रयोजनपदोत्तरसुविभक्त्या प्रयोजनशब्दगतमेकत्वं विवक्षितमस्ति।

अयं भावः—प्रयोज्यतेऽनेनेति प्रयोजनः, प्रयोजक-इत्यर्थः, करणे ल्युट् प्रत्ययः[८]। प्रयोज्यन्ते यानि तानि प्रयोजनानि फलानि इत्यर्थः। कर्मणि ल्युट् प्रत्ययः[९]।

---

१. पा० सू० १।१।२२। २. पा० सू० १।१।२६। ३. पा० सू० १।४।५८।
४. पा० सू० १।४।५९। ५. पा० सू० १।४।५९। ६. पा० सू० १।४।४२।
७. म० भा० पस्पशा०—१।१।१। ८. पा० सू० 'करणाधिकरणयोश्च'—३।३।११७।
९. पा० सू० 'कृत्यल्युटो बहुलम्' ३।३।११३।

प्रकृते प्रयोजन आगमः, स च 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्याकारको व्याकरणाध्ययनस्य प्रयोजक एव, न तु फलात्मकप्रयोजनभूतः। इतराणि रक्षादीनि तु फलात्मकप्रयोजनरूपाणि। पुनः प्रयोजनश्च प्रयोजनानि चेति एकशेषे[1] नपुंसकलिङ्गता पाक्षिकैकवचनान्तता चेति। तत्र यद्यपि प्रयोजनत्वं भिन्नं भिन्नमेव, तथाऽपि प्रयोजनशब्द एक एव। स एव चात्र प्रवृत्तिनिमित्तत्वेनाभ्युपेयते।

वैयाकरणनये शब्दस्य शब्देऽर्थे च खण्डशः शक्तिः स्वीक्रियते। 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति सूत्रमत्राऽस्ति[2] प्रमाणम्। एवं च शब्दविशिष्टोऽर्थः, अर्थविशिष्टो वा शब्दो भवति शब्दस्यार्थः। तत्र प्रकृते प्रयोजनशब्दस्य विशेषणता, प्रयोजनपदार्थस्य तु विशेष्यता मन्तव्या स्यात्। एवं च विशेषणीभूते प्रयोजनशब्दे स्फोटरूपे एकत्वस्य विवक्षा कर्तुं शक्यते। यः शिष्यते स लुप्यमानस्याप्यर्थमभिधत्ते, इति नियमेनैकस्मिन्नेव शेषभूते प्रयोजनशब्दे तत्तदर्थबोधनसामर्थ्यमवगन्तव्यम्। अतश्च यथा **'वेदाः प्रमाणम्'** इत्यत्र प्रमितिकरणत्वनिष्ठमेकत्वं विवक्षितमस्ति, तथैवात्राप्यखण्डस्फोटरूपप्रयोजनशब्दनिष्ठमेकत्वं विवक्षितमस्ति।

एतावता—एकविशेष्यवाचकपदविशेषणपदयोः समाहारे विशेष्यवाचकपदसमानवचनकमथवा तदसमानवचनकं विशेषणपदं साध्विति विमृष्टम्। इदानीं विशेष्यवाचकेष्वनेकेषु नानालिङ्गकेषु च सत्सु विशेषणपदं किं लिङ्गकं किं वचनकं च साधु स्यादिति विमर्शे महाभाष्यकारस्य प्रयोगं दृष्टिपथं कृत्वा किञ्चिदुच्यते।

तथा हि—'इह देवदत्त इति उक्ते कर्ता निर्दिष्टः, कर्म क्रियागुणौ चानिर्दिष्टौ, गामित्युक्ते कर्म निर्दिष्टम्, कर्ता क्रियागुणौ चानिर्दिष्टौ। अभ्याजेत्युक्ते क्रिया निर्दिष्टा, कर्तृकर्मणी गुणश्चानिर्दिष्टः। शुक्लामित्युक्ते गुणो निर्दिष्टः, कर्तृकर्मणी क्रिया चानिर्दिष्टा—इत्यर्थवदधातुरिति सूत्रस्थं भाष्यं[3] प्रमाणीकृत्य वक्तुं शक्यते यद् विशेष्यवाचकेषु अनेकेष्वन्तिमं पदं यल्लिङ्गकं यद्वचनकं च भवति, तदनुगुणं लिङ्गं वचनं च विशेषणपदे साधु भवति, वचनविषये तु विशेष्यद्वयादिगतद्वित्वादिविवक्षायां द्विवचनादिकमपि साधु भवति। यथा 'रामः सीता दयावती' इति दयावत्यौ इति वा प्रयोगः साधुः। न तु दयावान् दयावन्तौ इति च। एवमेकं विशेष्यपदम असमस्तम्, अन्यद् विशेषणपदं च समस्तं द्विवचनान्तं च यदि वर्तते, तदा अन्तिमं विशेष्यपदमसमस्तं चेत्, तदा तदनुसारि लिङ्गं वचनं च विशेषणपदे व्यवहरणीयम्। यथा—कृष्णरामौ सीता च दयावती। यदि अन्तिमं विशेष्यपदं समस्तं स्यात्, तत्राप्युत्तरपदं यल्लिङ्गकं तल्लिङ्गकं समस्तपदसमानवचनकं च विशेषणपदं प्रयोक्तव्यम्। यथा सीता रामकृष्णौ च दयावन्तौ, कृष्णो रामसीते च दयावत्यौ इति।

---

१. 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्'—पा० सू० १।२।६९।

२. पा० सू०—१।१।६८।

३. म० भा०—१।१।४५।

क्वचित्तु पूर्वोक्तनियमानां बाधे विशेषणपदे सामान्यतो नपुंसकलिङ्गमेकवचनं च भवति। यथा—दृढं भक्तिः, यस्य स दृढभक्तिरित्यत्र दृढशब्दे सामान्यतो नपुंसकमेकवचनं सम्प्रयोज्य साधुत्वं विधीयते। अन्यथा दृढा भक्तिर्यस्येति विग्रहे 'स्त्रियाः पुंवदिति' पुंवद्भावो न स्यात्, भक्तिशब्दस्य प्रियादिगणे पाठेनापूरणीप्रियादिषु पुंवद्भावनिषेधः स्यात्[1]। अत्र प्रमाणं तु—'शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुमित्ति' महाभाष्यप्रयोग एव। व्याख्यायते च तत्र प्रदीपकृता—शकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः। ततः पदान्तरसम्बन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वादन्तरङ्गं संस्कारं न बाधत इति शक्यं क्षुदित्युक्तम्। यदा तु पूर्वमेव विशेषविवक्षा, तदा शक्या क्षुदिति भवत्येव।

इदानीं यावत् सुब्वचनविषये विमर्शः कृतः, अथ तिङ्वचनविषये किञ्चिद् विमष्टुं प्रयत्यते। तत्र वेदाः प्रमाणमस्ति वा सन्ति वा। एवं वृक्षः पञ्च नौका भवति वा, भवन्ति वा। एवमेव एको द्वौ ज्ञायते वा—ज्ञायेते वा इति किमाख्यातवचनं साधुतां भजते इति संशयमपाकर्तुमुच्यते। अत्र व्युत्पत्तिवादे—'यथा प्रकृतिविकृतिभावस्थले वृक्षः पञ्चनौका भवति—इत्यादौ प्रकृतिभूतवृक्षादेर्विशेष्यतया भावनाऽन्वयित्वात् तद्गतसंख्याबोधकतया प्रकृतिवाचकपदसमानवचनकत्वमाख्यातस्य, तथा एको द्वौ ज्ञायते वा ज्ञायेते इत्याद्युभयार्थभेदारोपस्थलीयवाक्ये एकादिपदार्थस्यारोपविशेष्यतान्वयविशेष्यतया तत्पदसमानवचनत्वमाख्यातस्य' इति।

अयमाशयः—आख्यातार्थः कृतिः कर्मत्वं वा यत्रान्वेति, तत्रैवाख्यातार्थसंख्याया अन्वय इति कृत्वा आख्यातार्थविशेष्यवाचकपदसमानवचनकत्वमाख्यातस्येति नियमः सम्पद्यते। यथा देवदत्तः पचति—इत्यत्राख्यातार्थकृतेर्देवदत्तेऽन्वयाद् आख्यातार्थकृतिविशेष्यवाचकं यद्देवदत्तपदं तत्समानवचनकत्वमाख्यातस्य। कर्मणि प्रत्यये तु कर्मत्वस्याख्यातार्थतया कर्मत्वस्यान्वयः, तदवाचकपदसमानवचनकत्वमाख्यातस्य—यथा देवदत्तेन तण्डुलः पच्यते इत्यादौ कर्मत्वस्य तण्डुलेनान्वयात्तत्समानवचनकत्वमाख्यातस्य। परन्तु प्रकृतिविकृतिभावस्थले प्रकृतेर्विकृतेश्चोभयोरपि कर्तृत्वात् किमाख्यातं प्रकृतिवाचकपदेन समानवचनकं स्यात्, विकृतिवाचकपदेन वा—इति संशयो जायते, तस्यापाकरणायायं व्युत्पत्तिवादग्रन्थः[2]प्रवृत्तः।

तत्र वृक्षः पञ्च नौका भवतीत्यत्र नौकापदार्थस्य स्वकर्तृकत्वसम्बन्धेन भवनक्रियायामन्वयः, भवनान्वितस्याख्यातार्थकर्तृत्वस्य वृक्षेऽन्वयः। एवं च नौकाकर्तृकभवनानुकूलकर्तृत्वाश्रयो वृक्ष इति शाब्दबोधः। अतश्चात्राख्यातार्थकर्तृत्वविशेष्यत्वं प्रकृतिभूतस्य वृक्षस्यैवेति वृक्षपदसमानवचनकत्वमेवाख्यातस्येति वृक्षः पञ्च नौकाः भवति इत्येव प्रयोगः साधुः, न तु भवन्ति इति।

---

१. 'स्त्रियाः पुंवत्' पा० सू० ६।३।३४। २. व्युत्पत्तिवादे द्वितीयाकारकम्।

एवं काष्ठानि भस्म क्रियन्त इत्यादौ विकृतेर्भस्मपदार्थस्य कर्मतासम्बन्धेन धात्वर्थेऽन्वयः। आख्यातार्थस्य प्रकृतौ काष्ठपदार्थेऽन्वयः। तथा च भस्मकर्मककृति-कर्मभूतानि काष्ठानीति बोधः। अत्रापि काष्ठानामाख्यातार्थविशेष्यत्वात् काष्ठवाचक-पदसमानवचनकत्वमाख्यातस्य साधु इति काष्ठानि भस्म क्रियन्ते इत्येव प्रयोगः साधुः, न तु काष्ठानि भस्म क्रियत इति।

एवमभेदारोपस्थले **'एको द्वौ ज्ञायते'** इत्यादौ आरोपविशेष्यवाचकपदसमानवचन-कत्वमाख्यातस्य। एको द्वित्वावच्छिन्नाभेदज्ञानविशेष्य इति तत्राऽन्वयबोधः। अत्राख्या-तार्थो विशेष्यत्वम्, तस्यैकशब्दार्थेऽन्वय इति कृत्वाऽऽख्यातार्थान्वयिसमानवचनकत्व-माख्यातस्यात्राऽपि सम्पन्नम्। **'गृह्णाति वाचकः संख्यां प्रकृतेर्विकृते र्न हि'** इति वचनमाधृत्येदृशः सिद्धान्तो व्यवस्थापितः श्रीमद्भिर्भट्टाचार्यैः।

इदमत्रावधेयम्—ईदृशः सिद्धान्तस्तदैव स्यात्, यदा प्रथमान्तार्थमुख्यविशेष्यक एव बोधः, आख्यातार्थविशेष्ये एव संख्यान्वय इति च सर्वसम्मतः स्यात्। परन्तु शाब्दिकानां मीमांसकानां च मते सर्वकारकाणां धात्वर्थव्यापारे आख्यातार्थभावानायां वाऽन्वयाङ्गीकारे वृक्षः पञ्च नौका भवति इत्यत्र वृक्षकर्तृकं नौकाकर्तृकं च भवनम्, भवनाश्रयत्वमिति वा बोधाभ्युपगमात्पुनरपि पूर्वसंशयस्तदवस्थ एव वर्तते। अतश्चात्र कश्चन सर्वसम्मतः सिद्धान्तोऽन्वेषणीयः।

अत्र महाभाष्यकाराः—**'पुनरावृत्तः सुवर्णपिण्डः पुनरपरया आकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः'**[1] इति प्रयुञ्जानाः प्रकृतिविकृतिभावस्थले विकृतिसमानवचनकत्वमाख्यातस्येति सम्मन्वते।

इमं भाष्यप्रयोगमेवाश्रित्य 'आन्महतः समानाधिकरणजातीययोरिति' सूत्रे प्रदीपकृता कैयटेनोच्यते—**'यथा च प्रकृतेः कर्तृत्वं दृश्यते 'तथा विकृतेरपि। सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवतः'** इति विकारसंख्याश्रयद्विवचनदर्शनात्; तथा असङ्घो ब्राह्मणः सङ्घः सम्पद्यते। अपटस्तन्तवः पटः सम्पद्यत इति विकार-संख्याश्रयं वचनं दृश्यते।

च्विविषये हि प्रकृतिः कर्त्री, न विकृतिः तथा हि सङ्घीभवन्ति ब्राह्मणाः, पटीभवन्ति तन्तव इति प्रकृतिसंख्याश्रयं वचनं दृश्यते, न विकृतिसंख्याश्रयमिति।

वाक्यपदीयकारिकयाऽप्ययं विषयः समर्थितो भवति। तथा हि—

**वाक्ये सम्पद्यतेः कर्ता संघश्चव्यन्तस्य कथ्यते।**
**वृत्तौ संघीभवन्तीति ब्राह्मणानां स्वतन्त्रता**[3] ॥ इति।

---

१. म० भा० १।१।१ पस्पशा०। २. म० भा० प्र०-६।३।४६।
३. वा० प०—को० अ० सुब्रह्मण्यम् अय्यरसंस्करणं पूना पृ० सं० ३१९।

उद्द्योतकृता श्रीनागेशेनाऽपि[1] अस्य विषयस्य पूर्णं समर्थनं विधीयते—तथा हि भाष्ये—'खदिराङ्गारसवर्णे कुण्डले भवतः, इति प्रयोगाद् अच्यन्ते विकृतेः कर्तृत्वं बोध्यमिति तदीयं हार्दम् ।

पुनश्च श्रीहरिणा—**'सुवर्णपिण्डे प्रकृतौ वचनं कुण्डलाश्रयम्'** इत्युक्त्याख्यातस्य विकृतिवचनानुसारित्वं सुष्ठु अनुमोदितम् । हेलाराजेनाऽपि अत्रैतदेव समर्थितम् । श्रीमद्भगवच्छङ्करपादैरपि उक्तमेवाभ्युपेत्य ईशावास्योपनिषदि[2] प्रयोगः कृतः—**'यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः'** इत्यत्र यस्मिन् काले यथोक्तात्मनि वा तान्येव भूतानि सर्वाणि परमार्थात्मदर्शनाद् आत्मैवाभूत्, आत्मैव संवृत्तः, इत्येवं व्याख्यानं व्यधायि ।

तत्र प्रकृतिमनुरुद्ध्य 'आत्मैव संवृतानि' इति नोक्तम् । अनेन विधेयवाचकात्मशब्दानुरोधेनाख्यातपदस्यैकवचनान्तता स्पष्टमुक्ताऽस्ति ।

यत्तु वैयाकरणभूषणसारस्य दर्पणव्याख्याकृता[3]—खदिराङ्गारसवर्णे इति विशेषणेन कुण्डलयोः प्रकृतित्वं गम्यते, सिद्धाया विकृतेः पाकानपेक्षणात् । पुनरपरया आकृत्या युक्त इति विशेषणेन तु सुवर्णपिण्डस्य विकृतित्वम् । आकृत्यन्तरयोगस्य प्रकृतित्वाप्रयोजकत्वात् । पुनरावृत्तः इति विशेषणेनापि सुवर्णपिण्डस्य विकृतित्वं गम्यते, इत्यादिरीत्या भाष्यं विवृण्वता आख्यातस्य प्रकृतिसमानवचनकत्वमेव प्रसाधितम् ।

तत्तु पूर्वोक्तकैयटादिग्रन्थविरोधाद् युक्तिविरोधाच्च समीचीनतां नार्हति । तथा हि खदिराङ्गारसवर्णे इति विशेषणेन कुण्डलात्मिकाया विकृतेः खदिराङ्गारवद् रक्तवर्णत्वे सति जाज्वल्यमानत्वं द्योत्यते, न तु पाकक्रियाऽपेक्ष्यते, तथा सति अङ्गारसवर्णे इत्येव विशेषणं पर्याप्तं स्यात् । लोके हि खदिराङ्गारस्य रक्तवर्णतया जाज्वल्यमानतया च प्रसिद्धिरस्ति, अतश्च न हि तेन विशेषणेन सुवर्णपिण्डस्य विकृतित्वम्, कुण्डलयोः प्रकृतित्वं वक्तुं शक्यते । अनेकावस्थाभाजोऽपि सुवर्णात् जायमानोऽलंकारो जाज्वल्यमान एव भवति—इति तस्य विशेषणस्य तात्पर्यं मन्तव्यम् ।

यच्च पुनरपि **'पुनरपरयाऽऽकृत्या युक्तः'** इति तदपि न युक्तिसहम् । तथाहि—'मृत्कयाचिदाकृत्या युक्ता पिण्डो भवति । पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते । घटिका-

---

१. म० भा०—६।३।४९ । २. गोरखपुर गीताप्रेस संस्करण—पृष्ठ २७ ।

३. वैया० भू० सा० सुबर्थनिर्णयः, द्वितीया विभक्तिनिरूपणे ।

कृतिमुपमृद्य कुण्डिकाः क्रियन्ते' इति भाष्यग्रन्थोऽस्ति[1]। तत्र कयाचिदाकृत्या युक्ता इति विशेषणेन तथा मृदो विकृतित्वं वक्तुं नाभिप्रेयते; अपि तु काञ्चिदपूर्वामाकृतिमादाय मृत्तिका पिण्डो भवति। तथा सुवर्णमपि कञ्चिदपूर्वमाकारविशेषं प्राप्तं सत् कुण्डलात्मकं कार्यं भवति। एवं चोपादानकारणभूतं वस्तु आकारविशेषं प्राप्य कार्यं भवतीति भाष्याभिप्रायं मत्वा आकारविशेषं प्राप्तमिति विशेषणस्य प्रकृतित्वगमकत्वमेवेति विचार्यताम्।

यदपि पुनरावृत्तः इति विशेषणेनापि सुवर्णपिण्डस्य विकृतित्वं गम्यते इत्युक्तम्, तदपि न विचारसहम्। तथाहि—एतद्विषये महाभाष्यमस्ति 'कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते' इति। तदुत्तरमिदं वाक्यम्—'पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः कुण्डले भवतः' इति। अत्र पुनरावृत्त इत्यस्य स्वस्तिकाकृतिमुपमृद्य पुनः वर्तुलसुवर्णपिण्डरूपतां प्राप्त इत्यर्थः। पुनरपरयाऽऽकृत्या युक्त इत्यस्य स्वस्तिकादिपूर्वनिर्दिष्टाकृतिभिन्नां कुण्डलाकृतिं प्राप्त इत्यर्थः। एवं च सुवर्णस्य सदास्थितिः 'आकृतिरन्या चान्या च' इति तात्पर्यमत्रालोच्यते। एवं चानेकभूषणात्मना क्रमेण परिणतस्य सुवर्णपिण्डस्य पुनः सुवर्णपिण्डत्वावाप्तिः, ततः पुनराकृतिविशेषेण परिणाम इत्युक्तावपि तस्य प्रकृतित्वं न हीयते। मृद्दृष्टान्ते तु पुनर्मृदवस्थायां पर्यवसानं न भवति। सुवर्णे तु भूषणात्मना परिणामे सत्यपि पुनः सुवर्णस्य पूर्वावस्था आगच्छति।

यदि तु पूर्वपरिणतिपरम्परायाः सुवर्णे पर्यवसानं भाष्यकृत्तात्पर्यविषयः स्यात्, तदा पूर्वस्मिन् भाष्यग्रन्थे 'स्वस्तिकाः क्रियन्ते' इति स्वस्तिकानामेव प्रस्तुतत्वात् 'स्वस्तिकाः पुनः सुवर्णं भवन्ति' इत्येव वक्तव्यं स्यात्, न तु कुण्डले सुवर्णं भवत इति, कुण्डलाख्यपरिणामस्य पूर्वमप्रस्तुतत्वात्।

अतश्चात्र भाष्यग्रन्थे सुवर्णस्य प्रकृतित्वम्, कुण्डलयोर्विकृतित्वमित्येव विवक्षितमिति निश्चयः कर्तुं शक्यः। तथा च तद्भाष्यतो विकृतिसमानवचनकत्वमाख्यातस्येत्येवावगम्यते। किं बहुना नैषधीये महाकाव्ये श्रीहर्षेणापि प्रयुक्तमस्ति—

> **विभज्य मेरुर्न यदर्थिसात्कृतः**
> **न सिन्धुरुत्सर्गजलैर्मरुः कृतः।**
> **अमानि तत्तेन निजायशोयुगं**
> **द्विफालबद्धाश्चिकुराः शिरः स्थितम्[2]॥ इति।**

अत्र 'तेन द्विफालबद्धाश्चिकुराः शिरः स्थितं निजायशो युगम् अमानि' इत्यन्वयः। अत्र चिकुरभागद्वये निजायशोयुगत्वमारोपितमस्ति।

---

१. म० भा०—पस्पशा०–१।१।१।

२. नैषधे महाकाव्ये—१।१६।

यत्तु व्युत्पत्तिवादे अयशोद्वयस्य वास्तवतया चिकुरभागद्वयस्यैवारोप्यत्वमुक्तम्, तत्तु चिन्त्यमेव प्रतिभाति उभयोरपि वास्तवत्वेन कस्य कुत्रारोप इत्यंशे विचारे क्रियमाणे शिरःस्थितमिति विशेषणाऽन्वयस्वारस्येन शिरःस्थितायशोयुगत्वस्यैवारोप्यतया कवेरभिप्रेतत्वात् । पूर्वार्द्धे अतिशयोक्तिरूपेणासम्भावितवर्णनयाऽर्थस्यातात्त्विकतया अयशोयुगस्यापि तज्जन्यतयाऽभ्युपेतस्यावास्तवत्वेन तस्यैवारोपार्हत्वाच्च । अतश्चोक्तकाव्यप्रयोगमहिम्ना आख्यातस्यारोप्यवाचकपदसमानवचनकत्वं सिद्ध्यतीति प्रतीयते । तथा च 'एकोऽपि त्रय इव भाति कन्दुकोऽयम्' इत्यादावारोपविशेष्यवाचकपदसमानवचनकत्वमपि आख्यातस्य लभ्यते । अत्र हि एकत्वावच्छिन्ने कन्दुके त्रित्वस्यारोप इति आरोपविशेष्यवाचकमेकपदम्, तदनुसारेण 'भवति' इति एकवचनान्तस्य प्रयोगः । एवं चोभयत्र कामचारः ।

न्यायपरिशुद्धौ[1] वेदान्तदेशिकस्यापि सम्मतिरुद्देश्यविधेयभावस्थले कामचारविषयैव । तथा हि—न चोद्देश्यानुगुणा तिङ्विभक्तिरस्तीति नियमः । उपादेयानुगुणलिङ्गवचनादिनिर्देशवदत्रापि विरोधाभावात् । प्रयुञ्जते च पतञ्जलिप्रभृतयो विधेयानुगुणामपि तिङ्विभक्तिम् । 'स पुनरावृत्तः सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवतः' इत्यादिषु ।

अत्रायं निष्कर्षः—प्रकृतिविकृतिभावस्थले आरोपस्थले चाख्यातस्यैकवचनादिकामचारतः प्रयोक्तुं शक्यते । च्व्यन्तस्थले तु प्रकृत्यनुसारेणैव वचनं प्रयोक्तव्यम् । **'चैत्रो मैत्रश्च गच्छतः'** इत्यादौ प्रत्येकमेकत्वविवक्षयाख्यातस्यैकवचनान्तता, उभयगतद्वित्वविवक्षया तु द्विवचनान्तताख्यातस्य साध्वी ।

एवं च **'वेदाः प्रमाणम्'** इत्यादौ सन्तीत्येव साधुः, तथा **'मैथिली तस्य दारा अस्ति', 'रुक्मिणी सत्यभामे कृष्णस्य दाराः स्तः'** इत्याद्येव च साधु ।

प्रधानं सर्वतो बलवदिति न्यायात् 'अभेदस्थलीयविभिन्नवचनकविशुद्धविशेष्यविशेषणवाचकपदसमभिव्याहारे विशेष्यवाचकपदानुसारेणाख्यातवचनं प्रयोक्तव्यमिति सिद्धान्तात्' एवं च व्युत्पत्तिवादे यः सिद्धातो व्यवस्थापितः[1], स तु 'प्रथमान्तार्थमुख्यविशेष्यको बोधः' 'आख्यातार्थविशेषान्वये एव संख्यान्वयः' इति च नियमद्वयाभ्युपगमे एव सम्भवति, न तु 'क्रियामुख्यविशेष्यकबोधवादिनां शाब्दिकादीनां मते' इति सर्वमनवद्यम् ।

॥ शुभम्भूयात् ॥

● ● ●

---

१. अनाङ्गराचार्यस्य संस्करणम्—पृ० १५४ ।

# वैदिकच्छन्दसि पिङ्गलाचार्यस्वातन्त्र्यसमीक्षणम्

डॉ० अशोकशास्त्री
आचार्यः,
कलकत्ताविश्वविद्यालयस्य

❀ ❀ ❀

महामुनेः पाणिनेः प्रभावः पिङ्गलाचार्यस्य छन्दोग्रन्थे लक्ष्यते। आचार्यपिङ्गलः प्रायशः प्राणिनेः सूत्ररचनायाः कौशलमनुसरति। पाणिनिव्याकरणे सूत्रसंक्षेपाय प्रत्याहाराः आश्रिताः। पिङ्गलग्रन्थेऽपि संक्षेपाय अष्टगणाः स्वीकृताः। अत्र संज्ञा, लिङ्गम्, परिभाषा, विधिः, नियमः, अतिदेशः, अधिकारश्च—इति सूत्रलक्षणं प्रतिभातम्। गङ्गास्रोत इव मण्डूकप्लुतिवत् सिंहावलोकितवच्च त्रिविधा अनुवृत्तिः परिलक्ष्यते पाणिनेः पिङ्गलस्य च ग्रन्थे। पाणिनिव्याकरणवत् पिङ्गलविरचितच्छन्दोग्रन्थोऽप्यष्टाध्यायी। पाणिनिव्याकरणे केवलं सूत्रमस्ति, उदाहरणं तु नास्ति। आचार्यस्य पिङ्गलस्य ग्रन्थेऽपि तथैव। ऋक्प्रातिशाख्यं प्रति चेत् दृष्टिं प्रक्षिपामस्तर्हि तत्र चोदाहरणानि छन्दोलक्षणान्युपलभामहे। पिङ्गलेन तु पूर्वसूरिणा भगवता पाणिनिना या रीतिः प्रदर्शिता, सैवानुसृता।

पिङ्गलच्छन्दसूत्रे यथा पाणिनेः प्रभावो न तु तथा ऋग्वेदप्रातिशाख्ये। विशेषतस्तु वैदिकच्छन्दसां ज्ञाने मूल्यस्य वा क्रमविवर्तने च पाणिनेर्दानं त्ववश्यं स्वीकरणीयम्।

ऋग्वेदप्रातिशाख्यस्य तु भाषा प्राधान्येन सरला, सुभगा, सौन्दर्यमयी च। सूत्रात्मकेषु ग्रन्थेष्वध्याहारादिनिमित्ताद् यन्नाम दुर्बोधत्वं प्रायेणानुभूयते, तत्तु नात्र प्रतीयते। अयं प्रातिशाख्यग्रन्थस्तु काठिन्यमुक्तः। अत्र हेतुरप्यस्ति। प्रत्याहारादीनां कौशला न तेन व्यवहृताः। अपि च विषयवैशद्यायाधिकाक्षराणि च प्रयुक्तानि। छन्दोविषयकाणि सूत्राण्यत्र अनुष्टुप्-त्रिष्टुप्-जगतीछन्दसां मिश्रीकरणेन विरचितानि। इदञ्चात्र वैशिष्ट्यं यद् ग्रन्थकारः स्वयमेव सर्वेषां छन्दसामुदाहरणानि ऋग्वेदस्य सूक्तेभ्यः संगृह्य प्रदत्तवान्। क्वचित् सामवेदात्, क्वचिच्च यजुर्वेदादपि मन्त्रा उदाहरणत्वेन प्रदर्शिताः।

पिङ्गलस्य छन्दसूत्रं गद्यात्मकमेव। अस्य ग्रन्थस्य भाषा क्वचित् कठिनापि प्रायेण सरला। पाणिनिसूत्राणि यादृशानि जटिलानि दुरूहाणि च, न तथा पैङ्गलं छन्दसूत्रम्। शास्त्रसंक्षेपाय प्रत्याहाररीतिः छन्दसूत्रकारेणाश्रिता। अस्मिन् छन्दश्शास्त्रे वैदिकच्छन्दसां यानि लक्षणानि विहितानि, तेषूदाहरणानि तु ग्रन्थकृता न प्रदर्शितानि। संहिताग्रन्थाद् ब्राह्मणाच्च मन्त्रानाकलय्य वृत्तिकार एवोदाहरणसंगतिं

कृतवान्, न तु सूत्रकारः। इदञ्चात्रावधेयं यद् वैदिकानां लौकिकानां च छन्दसां कृते पिङ्गलग्रन्थः प्रवृत्तः। प्रातिशाख्यं तु न तथा, तत्र वैदिकच्छन्दसामेव विशेषतस्तु ऋग्वेदीयच्छन्दसामेव लक्षणान्युदाहरणानि च प्रातिशाख्ये प्रदर्शितानि। पिङ्गलग्रन्थे आदौ संज्ञा, परिभाषा च वर्त्तते। लौकिकच्छन्दस्सूत्रवन्मकारादयोऽष्टगणास्तत्र प्रदर्शिताः। अपरत ऋग्वेदप्रातिशाख्यं न केवलं छन्दसः कृते विरचितम्। अस्य मुख्यमुद्देश्यं शिक्षाविषियका वर्णस्वरादयः। प्रसङ्गतस्तु वैदिकच्छन्दोऽन्ये च केचन विषया उपस्थापिताः। छन्दस्तु ग्रन्थस्यान्तिमपटलत्रये आलोचितम्। अतो मिथोविचारे पिङ्गलग्रन्थ ऋक्प्रातिशाख्यात् स्वातन्त्र्यमवगाहत इति सुस्पष्टमेव।

पिङ्गलछन्दस्सूत्रस्य द्वितीयेऽध्याये यद् विशेषतयाऽऽलोचितम्, ऋक्प्रातिशाख्य-ग्रन्थस्य छन्दःप्रकरणे प्रारम्भे, स एव विषय उपन्यस्तः। आदौ तत्र प्रजापतेः छन्दांसि सप्तविधानीत्येव पर्यालोचितानि। तानि च गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती च, अष्टाक्षरात् प्रभृत्येषां प्रारम्भः। अत एव शौनक आह—

**"गायत्र्युष्णिगनुष्टुप् च बृहती च प्रजापतेः।**
**पङ्क्तिस्त्रिष्टुब् जगती सप्तच्छन्दांसि तानि ह ॥"** इति।

प्रातिशाख्ये प्रथमतश्चतुर्दशसूत्रं यावत् प्रजापतिरसुर ऋषिर्यजुर्ऋक्साम-ब्रह्मेत्येषां सप्तविधानां छन्दसामक्षरसंख्या कथिता। नास्मिन् विषये पिङ्गलेन सहास्य किञ्चन पार्थक्यम्।

ऋग्वेदप्रातिशाख्यस्य गायत्रीछन्दस्स्वरूपनिर्णय इदमुक्तम्—

**"गायत्री सा चतुर्विंशत्यक्षरा।**
**अष्टाक्षरास्त्रयः पादाश्चत्वारो वा षडक्षराः ॥"** इति।

अस्यायमर्थः–आर्षी गायत्री चतुर्विंशत्यक्षरा स्यात्, तस्याऽष्टाक्षरास्त्रयः पादा भवन्ति। षडक्षरा वा चत्वारः पादा भवन्ति। अष्टाक्षरपादत्रयस्योदाहरणम्—

**"अग्निमीळे पुरोहितं**
**यज्ञस्य देवमृत्विजम्।**
**होतारं रत्नधातमम् ॥"**

तथा च षडक्षरपातचतुष्टयानामुदाहरणम्—

**"इन्द्रः शचीपतिर्बलेन विडितः।**
**दुश्च्यवनो वृषा समत्सु सासहिः ॥"**

गायत्रीछन्दसः प्रकारभेदविषये पिङ्गलेन सह शौनकस्य यथा स्थाने स्थाने मतसाम्यं दृश्यते, तथा क्वचिदुभयोर्मतयोः पार्थक्यमप्युपलभ्यते। पादनिचृत्,

वर्धमाना भुरिक्, यवमध्या पदपङ्क्तिः, इत्येषां संज्ञा स्वरूपमुदाहरणं च प्रायशः पिङ्गल-शौनकयोरेकरूपमेव।

पादनिचृत् सप्ताक्षरविशिष्टैस्त्रिभिः पादनिचृद्रूपेणाभिधीयते। अस्योदाहरणं तावत्—

"यवाकु हि शचीनां
यवाकु सुमतीनान्।
भूयाम वाजदाव्नाम्॥" इति।

उक्तञ्च—"सैषा पादनिचृन्नाम गायत्र्येवैकविंशिका" इति।

वर्धमानेत्याख्या या गायत्री तत्रोत्तरोत्तरिणस्त्रयः पादा एकाक्षराधिक्येन षट्सप्ताष्टाक्षरा भवन्ति। तस्योदाहरणम्—

"तमग्ने यज्ञानां
होता विश्वेषां हितः।
देवेभिर्मानुषे जने॥"

यस्याः प्रथमः पादोऽष्टाक्षरः, द्वितीयः पादो दशाक्षरस्तृतीयश्च सप्ताक्षरः, तस्या भूरिगिति संज्ञा। 'विद्वांसाविद् दुरः पृच्छेत्' इति तस्या उदाहरणम्।

एवञ्च—

"आद्यन्त्यौ सप्तकौ यस्या मध्यमो दशको भवेत्।
यवमध्या तु गायत्री ससुन्व इति दृश्यते॥" इति।

यस्यामाद्यन्तौ पादौ सप्तकौ मध्ये च एको दशको भवेत्, तस्या यवमध्येति संज्ञा। यवमध्याया उदाहरणम्—

"ससुन्वे यो वसूनाम्
यो रायामनिता य इलानाम्।
सोमे यः सुक्षितीनाम्॥"

पञ्चाक्षरैः पञ्चपादैः पदपङ्क्तिर्भवति।

यथा—

"अध्याह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः।
रथीर्ऋतस्य बृहतो बभूथ॥"

एतेषां पञ्चानां छन्दसामालोचनं यथा शौनकेन कृतम्, पिङ्गलेनापि सैव दिशा समाश्रिता। प्रातिशाख्ये तु एतद्व्यतिरिक्ततया गायत्रीछन्दसां बहवोऽन्ये भेदाः प्रदर्शिताः। तेषां नामानि तु पिङ्गलग्रन्थे नोपलभ्यन्ते। यथा भूरिक् पदपङ्क्तिः, अतिनिचृत्, द्विपदा, उष्णिग्गर्भा इत्यादीनि। एतेषां मध्ये तत्र भूरिक् पदपङ्क्ता-

वाद्येषु चतुर्षु पादेषु पञ्च पञ्चाक्षराणि, अन्तिमे च पादे षडक्षराणि विद्यन्ते। यत्र त्रिषु पादेषु क्रमेण सप्त, षड्, पुनश्च सप्ताक्षराणि, तत्र सा अतिनिचृद्गायत्री। यत्र तु पादद्वयमेव प्रतिपादञ्च द्वादशाक्षरोपेतम्, तस्य द्विपदा गायत्रीसंज्ञा। तस्योदाहरणम्—'स नो वाजेष्वि'ति। उष्णिग्गर्भा या गायत्री, तस्या लक्षणमेवम्—

"षडक्षरः सप्ताक्षरस्तत एकादशाक्षरः।
एषोष्णिग्गर्भा गायत्री ता मे अश्वयानमिति ॥"

किन्तु; यद्यपि गायत्रीछन्दस इमे भागाः पिङ्गले नोपलभ्यन्ते, तथापि पिङ्गले गायत्रीछन्दसोऽपरे विभागा सन्ति। ते च—नागी वाराही, प्रतिष्ठा, द्विपाद् विराट्, त्रिपाद् विराट्, पिपीलिकमध्या, अतिपादनिचृत्, शङ्कुमती, ककुम्मतीत्यादयः। एतेषां नामानि तु ऋक्प्रातिशाख्ये नोपलभ्यन्ते। तत्र—

**'द्वौ नवकौ षट्कश्च नागी'** इति।

नागीगायत्र्या लक्षणम्। अस्यायमर्थः—यत्र आद्यौ द्वौ नवाक्षरौ पादौ षडक्षरस्तृतीयः, तत्र त्रिभिः पादैः 'नागी' गायत्री भवति।

**"विपरीता वाराही"।**

पूर्वोक्तैव नागी गायत्री विपरीता यदा भवति, तदा 'वाराही' संज्ञा भवति। तस्मादत्र प्रथमः पादः षडक्षरो द्वितीयतृतीयौ च नवाक्षरौ।

**'विपरीता प्रतिष्ठा'** इति प्रतिष्ठाया लक्षणम्। सैव वर्धमाना गायत्री विपरीता यदा भवति, तदा 'प्रतिष्ठा' नाम गायत्री भवति। अष्टाक्षरः प्रथमः पादः, द्वितीयः सप्ताक्षरः, षडक्षरस्तृतीयः।

द्विपाद्गायत्र्या लक्षणम् **'तृतीयं द्विपाज्जागतगायत्राभ्याम्'** इति।

तृतीयशब्दे द्वितीयाध्यायस्थसूत्रपाठक्रमापेक्षया विराजमाह। उक्तञ्च पूर्वम्—'विराजो दिशः' इति। यदा द्वादशाक्षरोऽष्टाक्षरश्च पादस्स्यात्, ततस्ताभ्यां 'द्विपाद् विराट्' नाम गायत्री भवति।

**"त्रिपात् त्रैष्टुभैः"** इति लक्षणेन त्रिपाद् विराडपि पिङ्गलेन विहिता। तेनैकादशाक्षरैस्त्रिभिः पादैः 'त्रिपाद् विराट्' नाम गायत्री भवति।

अपि चायमपरो भेदो गायत्र्याः पिङ्गलेन सामान्यः स्वीकृतस्त्रिपादनिष्ठ-मध्या पिपीलिकमध्या इति।

यदाद्यन्तौ पादौ बह्वक्षरौ, मध्यमश्चाल्पतराक्षरः, स्तदनिष्ठमध्या सती 'पिपीलिकमध्या' नाम भवति। यत्किञ्चित् त्रिपाच्छन्दो लघुमध्यमपादम्, तत् सर्वं पिपीलिकमध्यमुच्यते।

यद्यपि शौनकेनातिपादनिचृत् स्वीकृता, तथापि पिङ्गलमते तत्राक्षरक्रमे भेदो वर्तते। तन्मते **'षट्कसप्तकयोर्मध्येऽष्टात्वतिपादनिचृत्'** इति। प्रथमः षडक्षरो द्वितीयोऽष्टाक्षरस्तृतीयश्च यत्र सप्ताक्षरस्तत्र सा **'अतिपादनिचृत्'** इति संज्ञां लभते।

यदैकः पञ्चाक्षरः पादो भवति, त्रयश्च षडक्षरस्तदा 'शङ्कुमती' नाम गायत्री भवति। उक्तं हि पिङ्गलेन—"एकस्मिन् पञ्चके छन्दश्शङ्कुमती'।

ककुद्मतीति गायत्र्या अपरो भेदः पिङ्गलेनाङ्गीकृतः। तस्याः "षट्के ककुद्मती" इति लक्षणम्।

एकस्मिन् षडक्षरे पादेऽन्येषु यथालक्षणमुपात्तेषु छन्दोमात्रं 'ककुद्मती' भवति।

अस्मादिदं प्रतीयते यत् पिङ्गलछन्दस्सूत्रे गायत्रीछन्दसः भेदसंख्या ऋक्प्रातिशाख्यान्न न्यूना, परन्त्वधिकैव। गायत्रीविषय एव ऋग्वेदप्रातिशाख्यस्य न्यूनताऽस्ति, नान्यत्र। उष्णिक्छन्दसो विषये प्रातिशाख्यग्रन्थ उष्णिक्, पुर उष्णिक्, ककुप् उष्णिक्, ककुभ् न्यङ्कुशिरा उष्णिक्, पिपीलिकमध्या उष्णिक्, तनुशिरा उष्णिक्, अनुष्टुब्गर्भा उष्णिगित्यादयो विभागा उपलभ्यन्ते। पिङ्गलाचार्यस्तु उष्णिक्छन्दसो भेदचतुष्टयमात्रं स्वीकृतवान्। ते च भेदाः आर्षी उष्णिक्, ककुभ् उष्णिक्, पुर उष्णिक्, परोष्णिक् च। पिङ्गलस्तु स्वग्रन्थ इदं स्वीचकार यत् सर्वेष्वेव छन्दस्सु शङ्कुमती, ककुद्मती च भेदद्वयं भवेत्। शङ्कुमत्या ककुद्मत्या उदाहरणानि तु नास्माकं सुलभा। ककुद्मतो उष्णिगित्यस्य छन्दस उदाहरणं वृत्तिकृता हलायुधेनापि न प्रदत्तम्।

अनुष्टुप्छन्दसः क्षेत्रेऽपि प्रातिशाख्यकारस्य वैशिष्ट्यं द्रष्टव्यम्। तन्मते आर्षी, कृतिः, पिपीलिकमध्यमा, काविराट्, नष्टरूपा, द्विविधा विराट्, महापदपङ्क्तिः, इति अष्टविधा उष्णिक्। किन्तु पिङ्गलानुसारेणास्य भेदास्त्रिविधः। ऋक्प्रातिशाख्ये अनुष्टुप्छन्दसो भिन्नं भिन्नं नामैव वर्त्तते। पिङ्गलग्रन्थे त्वेतादृशानि विशेषनामानि नोपलभ्यन्ते।

अत एव छन्दसामालोचनाप्रसङ्गे पिङ्गलशौनकयोर्मध्ये यथा सादृश्यं तथा वैसादृश्यमपि स्फुटं भवति। नानाविधानां छन्दसां विभागा बह्वयश्च संज्ञाः प्रातिशाख्ये विस्तरतः प्रदत्ताः। पिङ्गले तु न तथा।

शौनकसमये छन्दसां ये भेदा दृष्टास्ते पिङ्गलकाले परिवृत्ति प्रापुः। पिङ्गलापेक्षया शौनकस्य प्राचीनत्वमकामेन स्वीकर्त्तव्यम्, किन्तूत्तरस्मिन् युगे पिङ्गलसमये लौकिकच्छन्दसां समुद्भवात् छान्दसिकानां दृष्टिर्वैदिकच्छन्दसां भेदबाहुलादपसरन्ती लौकिकच्छन्दःप्रत्युपनिबद्धाऽऽसीत्। समाजे विदग्धगोष्ठीषु वैदिकं छन्दो लौकिकं च छन्दस्तुल्यरूपेण यदा बलवदासीत्, मन्ये तस्मिन्नेव सन्धिक्षणे आविरासीत् पिङ्गलाचार्यः।

वैदिकच्छन्दसां पादनिर्णयकार्यमपि दुष्करमेव। एतद्विषये भाष्यकाराणामस्ति विमतिः। ऋषीणामार्षाणां भिन्नभिन्नानां व्याख्यानभेदाच्छन्दःशास्त्रकारा अपि विभिन्नप्रकारेण छन्दसां संज्ञां निर्मितवन्तः। छन्दसां पादसंख्यामक्षरसंख्याञ्चा-

वलम्ब्य शास्त्रकृतां विप्रतिपत्तिः । तत्रैतत् कारणं तु वर्त्तते । मन्त्रस्य पादव्यवस्था नैकरूपा । अत एव वेदानां प्रकाशितेषु संस्करणेषु विभिन्नस्थानात् पादवैषम्यं दृश्यते ।

छन्दसामतिरिक्ततया निचृत्, भुरिक्, विराट्, सुराडिति भेदचतुष्टयं यथा शौनकग्रन्थे, तथा पिङ्गलेऽपि सुलभम् । यथाविहिताक्षरसमन्नानां छन्दसामेकाक्षरन्यूनतया निचृत् संज्ञा तथैव एकाक्षराधिक्येन भुरिक्संज्ञा प्रसिद्धैव । त्रयोविंशत्यक्षराणां समाहारेण या गायत्री, तस्या नित्रृत्गायत्रीसंज्ञा प्रसिद्धा । अथ च पञ्चविंशत्यक्षरसमन्वितं गायत्रीछन्दो भुरिक्-गायत्री इति संज्ञां लभते । कात्यायनोऽप्याह— **'त्रयः सप्तका पादनिचृत्'** । चर्तयति सन्दीपयति ऋग्गतभावानिति चृत् छन्दः, विकृष्टमेकाक्षरेण हीनं निचृदिति । तथा च पिङ्गल आह—**"सा पादनिचृत्"** ।

तत्र इदं ध्येयम्—अनादित्वान्नित्यत्वान् महत्त्वेऽपि बह्व्यक्षरत्वेनास्य छन्दसो दीर्घनामत्वेऽपि न दुष्यति । भुरिक्पदस्यापि निर्वचनं दैवतब्राह्मणे दृश्यते "भरणात् भूर्य उच्यते ।" एकाक्षरेण भरणाच्चतुर्विंशात्मगायत्र्यादाविति शेषः । अत एव साध्वाह उव्वटः—**"एकेनोना निचृत् भवति एकेन वाधिका सा भुरिग् भवति ।"**

निचृत् गायत्र्या उदाहरणं यथा—

**"यः शुक्र इव सूर्यो**
**हिरण्यमिव रोचते ।**
**श्रेष्ठो देवानां वसुः ॥"**

भुरिग्गायत्री तावत्—

**"परिधामानि याति ते**
**तं सोमासि विश्वतः**
**पवमान ऋतुभिः कवेः ॥"**

यथैकाक्षरवृद्धया एकाक्षरन्यूनतया वा निचृत् भुरिगिति संज्ञा, तथैव अक्षरद्वयन्यूनतया विराड्गायत्री अक्षरद्वयाधिक्येन स्वराड्गायत्री वा भवति । अग्निपुराणे तु "द्विहीना च विराड् भवेत् स्वराट् स्याद् द्वाभ्यामधिकम्" इति यदुच्यते, तत्त्विदमेव प्रमाणयति । स्वस्वलक्षणलक्षितगायत्र्यादिसर्वच्छन्दःसु पदाक्षराणां द्वयक्षरन्यूनत्वे विराट्संज्ञा, तथा द्वयक्षराधिक्ये च स्वराट्संज्ञा भवेत् । चतुर्विंशत्यक्षरा गायत्री चेद् द्वात्रिंशत्यक्षरा तदा विराड्गायत्री, यदा च षड्विंशत्यक्षरा तदा स्वराड्गायत्री ।

विराड्गायत्र्युदाहरणम्—

**"प्रवता हि क्रतुना-**
**मा हा पदेव गच्छसि ।**
**अभक्षि सूर्ये स्वचा ॥"**

स्वराड्गायत्री यथा—

"जोषा सवितर्यस्य ते
हरः शतम् स्ववाँ अर्हति ।
पाहि नो दिद्युतः पतन्त्या ॥"

पिङ्गलाचार्यस्तथा प्रातिशाख्यकार इति अनयोरुभयोर्मतयोरन्यतोऽपि सादृश्यमस्ति। तत्तु उष्णिगादीनां छन्दसां न्यूनाधिकप्रसङ्गक्रमेण। यथा न्यूनाधिकाभ्यां गायत्री यथाक्रमं स्वराट्-विराट्संज्ञिका भवति, तथोष्णिगादीनामन्येषामपि ग्रहणम्। एवं क्रमेण विराड् उष्णिक्, स्वराड् उष्णिक्, विराड् जगती इत्यादयो भेदा उभयत्रोपलभ्यन्ते। शौनकेन मा, प्रमा, प्रतिमोपमा समा इति छन्दोभेदं यद् निर्णीतवान्, तत्र तु पिङ्गलो जोषमास्ते। चतुरक्षरं छन्दः मा इति विज्ञेयम्। ततश्चतुरक्षरवृद्धया अष्टाक्षरतया अष्टाक्षरं प्रमा नाम छन्दः। ततोऽपि चतुरक्षरवृद्धया द्वादशाक्षरं प्रतिमेति छन्दः। अनयैव रीत्या षोडशाक्षरं छन्द उपमा, विंशत्यक्षरं च समा। तैत्तिरीये मा प्रमा प्रतिमेत्यादिच्छन्दसामुल्लेखो वर्तते। मा-प्रमादीनां द्वयक्षरन्यूनत्वे विराड् मा हर्षिका नाम द्वयक्षरं छन्दः, तथा सर्षिका विराड्प्रमा षडक्षरं छन्दः, मर्षिका विराट् प्रतिमा दशाक्षरं छन्दः, सर्वमात्रा विराडुपमा चतुर्दशाक्षरं छन्दः, विराट्कामा विराट्समा अष्टदशाक्षरं छन्द इत्यायाति।

छन्दसां दैवतं वर्णं च उभयोर्ग्रन्थयोर्वैशिष्ट्यम्। सप्तच्छन्दसां सप्तदेवा ऋग्वेदस्य दशममण्डलीये त्रिंशदुत्तरशतके सूक्ते चतुर्थमन्त्रे तथा पञ्चममन्त्रे चोल्लिखिता वर्त्तन्ते। तत्र विराट् छन्दसः प्रसिद्धिस्तथा च तद्दैवतरूपेण मित्रावरुणयोरुल्लेखः। नात्र पङ्क्ति-च्छन्दसः स्पष्टतया उल्लेखः। यतो हि पङ्क्तिच्छन्दः सप्तछन्दसामन्तर्गतम्, अत एवाह ऋक्प्रातिशाख्यकारः—'सा तु वासवी' इति, अर्थादस्य मन्त्रस्य देवता वसुदेव इति।

पिङ्गले नास्योल्लेखः स्वातन्त्र्येणोपलभ्यते। विराट् तथा पङ्क्तिरित्युभयो-रेकत्वमेव प्रतिपादितम्। अत एवाक्षरपादनिर्णयकाले पिङ्गल आह—'विराजो दिशः'। अग्निपुराणेऽपि 'विराजो दिश ईरिता' इत्युच्यते। विराट्पङ्क्तिरिति नामा-न्तराया आर्षीपङ्क्तेश्चत्वारिंशदक्षरत्वेन चतुष्पादरूपायास्तस्याः प्रतिपादे दशाक्षर-त्वलाभः। तस्मादिदं प्रतीयते प्राक्तने काले विराट्पङ्क्तिः इत्यनयोर्मध्ये महान् भेद आसीत्। पिङ्गलोत्तरयुगे तु स भेदो लुप्तप्रायोऽवर्तत। उभयोश्छन्दसोर्दशाक्षरयुक्तेरेको अपरनाम्नैव परिचीयते। अत एवोभयोश्च्छन्दसोरेक एव देवो निर्दिश्यते पिङ्गलेन।

पिङ्गलेऽतिच्छन्दसां देवा नोल्लिखिताः; शौनकेन तु तत्र प्रजापतिदेवताकत्वं स्वीकृतम्। विच्छन्दस्सु देवता वायुः। एकपदा ऋक्, द्विपदा ऋक्, यथाक्रमं ब्रह्म-देवताका पुरुषदेवताका च।

अनया रीत्या छन्दस्समूहानां वर्णश्च यथा प्रातिशाख्ये तथा पिङ्गलेऽपि स्थानं लभते; किन्तु देवतानिर्णयवद् वर्णनिर्णयवेलायामपि प्रातिशाख्यकारः पङ्क्तिच्छन्दसः पार्थक्येन वर्णं विचारयामास। स तु अरुणवर्णात्मकः। सप्तच्छन्दसां मध्ये प्रथमषण्णां वर्णस्तु पिङ्गले प्रातिशाख्ये चैक एव। स तु क्रमेण सितः, सारङ्ग, पिशङ्गः, कृष्णः, नीलः, लोहितात्मकश्च। किन्तु सप्तमस्य छन्दसो वर्णः पिङ्गलमते गौरः, शौनकमते तु सुवर्णरूपं तत्। पिङ्गलस्त्वत्राग्नेयमेवानुवर्तते। तत्रास्ति—

"वर्णाः श्वेतश्च सारङ्गश्च पिशङ्गकः।
कृष्णो नीलो लोहितश्च गौरी गायत्रीमुख्यके" ॥ इति।

किन्तु प्रातिशाख्ये दैवतब्राह्मणे च पिङ्गलोक्तवर्णाद् वैपरीत्यं दृश्यते। आह च प्रातिशाख्यकारः—

"सितं च सारङ्गमतः पिशङ्गं कृष्णमेव च।
नीलं च लोहितञ्चैव सुवर्णमिव सप्तमम्
अरुणं श्यामगौरे च बभ्रु वै नकुलं तथा॥"

दैवतब्राह्मणेऽपि दृश्यते—

"शुक्ला गायत्र्यो रूपेण सारङ्गं रूपमुष्णिहाम्।
पिशङ्गं ककुभां रूपं कृष्णमानुष्टुभं ततः॥
रोहितं बृहतीनां तु नीलं पाङ्क्तं ततः पुनः।
सुवर्णं त्रिष्टुभां रूपं गौरं जागतमुच्यते॥"

पिङ्गलेऽतिच्छन्दसां कश्चन वर्णो नोपदिष्टः। प्रातिशाख्ये तु श्यामवर्णः, अतिच्छन्दः, गौरवर्णः, सिद्धार्थवर्णो वा विच्छन्दो बभ्रुवर्णो द्विपच्छन्दः, नकुलवर्ण एकपच्छन्दः। इत्येवं मुख्यसप्तकभिन्नानामपि छन्दसां वर्णः समुपदिष्टः। अनया रीत्या प्रातिशाख्ये केषाञ्चिद् अतिरिक्तानां छन्दसां वर्णा विशिष्योक्ताः। यथा निचृत्-भुरिजोः यथाक्रमं कृमिदूषितपत्रवर्णबिन्दुमद्वर्णत्वञ्च। ब्राह्मसामार्चयाजुषच्छन्दसां वर्णस्तु कपिलः।

पिङ्गलच्छन्दस्सूत्रे छन्दसां स्वरा गोत्राश्चोपदिष्टाः। तत्र एतच्छन्दोग्रन्थस्य स्वातन्त्र्यमेव संलक्ष्यतेऽस्माभिः। ऋक्प्रातिशाख्ये तु नास्य विषयस्योल्लेखो दृश्यते। षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादा गायत्र्यादिषु क्रमेण द्रष्टव्याः। नारद-शिक्षायामेतेषां लक्षणानि यथा—

"षड्जं रौति मयूरोऽपि वृषो नदति चर्षभम्।
अजा विरौति गान्धारं क्रौञ्चो नदति मध्यमम्॥
पुष्पसाधारणे काले कोकिला रौति पञ्चमम्।
अश्वश्च धैवतं रौति निषादं रौति कुञ्जरः॥ इति।

एषां च प्रत्येकमुदात्तानुदात्तस्वरितभेदेन त्रिविधम्। सामवेदप्रभावात् पिङ्गल-ग्रन्थे छन्दसां स्वरादिसंज्ञाभिरुल्लेख इत्यनुमातुं शक्यते। महर्षिणा भरतेन स्वराणां सप्तविधत्वं स्वीकृत्योक्तम्—

**"सः स्वरो यः श्रुतिस्थाने स्वरन् हृदयरञ्जकः।**
**षड्जऋषभगान्धारा मध्यमं पञ्चमस्तथा।**
**धैवतश्च निषादश्च स्वराः सप्त प्रकीर्तिताः॥"**

गायत्र्यादिजगत्यन्तानां सप्तच्छन्दसां गोत्रनिर्णयोऽपि पिङ्गलेन विशिष्योच्यते। तद्यथा—'आग्निवेश्यकाश्यपगौतमाङ्गिरसभार्गवकौशिकवाशिष्ठानि गोत्राणि' इति। तथा सति गायत्र्या ऋषिरग्निवेश्यः, उष्णिहः काश्यपः, अनुष्टुभः गौतमः ,बृहत्याः अङ्गिरसः, पङ्क्तेः भृगुः, त्रिष्टुभः कुशिकः, जगत्याश्च वशिष्ठः। एभिः सप्तभिर्ऋषिभिः क्रमेणै-तानि छन्दांसि लोकहितार्थं प्रकाश्य दर्शितानीति तेषामृषित्वमिति निश्चयः।

अग्निपुराणे दृश्यते—

**"अग्निवेश्यः काश्यपश्च गौतमाङ्गिरसौ क्रमात्।**
**भार्गवः कौशिकश्चैव वशिष्ठो गोत्रमीरितम्॥"** इति।

यत्र छन्दोनिर्णये सन्देहः, तत्र पूर्वोक्तदेवतावर्णस्वरगोत्रद्वारा तस्य निरसनं विधेयम्। अत एव छन्दोग्रन्थमध्ये एतेषामुल्लेखेन प्रयोजनम्। यत्र संशयो नास्ति, तत्रापि देवतादिज्ञानद्वारा धर्मलाभः। अत्र पिङ्गल-शौनकयोरैकमत्यम्। उक्तञ्च हलायुधेन **'ऋषिदेवतास्वरवर्णानां ज्ञानान्निःश्रेयसमिच्छन्ति छान्दसाः'।**

पादपूरणव्यापारेऽप्युभयोर्मतसादृश्यमस्ति। यत्राक्षरसंख्या न्यूना, तत्र प्रश्लिष्य सन्धि विधाय पाठः करणीयः, तेन त्वक्षरसम्पूर्त्तिः स्यात्। अत एवाचार्यः शौनक आह—

**"व्यूहेदेकाक्षरीभावान् पादेषूनेषु सम्पदे।**
**क्षैप्रवर्णांश्च संयोगान् व्यवेयात् सदृशैः स्वरैः॥"**

पिङ्गलेनाप्युक्तम्—'इयादिपूरणः' इति। अत्रादिशब्देन उव्यन्संयोगः सवर्ण-दीर्घो गुणवृद्धिव्यूहा गृह्यन्ते। कात्यायनमतेन तु 'पादपूरणार्थं क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत" इति।

किन्तु व्यूहादिकं तु प्रातिशाख्यकृता बहुभिः सूत्रादिभिः व्याख्यातम्, न तु पिङ्गलरीत्या एकेन। प्रातिशाख्ये नाम आपातविशेषनियमाः केचन प्रसंगेऽस्मिन् परिलक्ष्यन्ते। प्रातिशाख्यवृत्तिः (८।४०) इत्येतेन सह (७।२२।२३) इत्यनयोर्विरोधो दर्शनीयः, किन्तु पिङ्गले एकसूत्रकारणाद् विरोधावकाशो नास्ति। अनया रीत्या पिङ्गलेन 'प्रगाथा' इत्यवलम्ब्य नालोचिता यद्यपि प्रातिशाख्ये एतत्सम्बन्ध्यालोचन-मुपलभ्यते।

भगवतः पाणिनेः प्रभावो यथा पिङ्गलग्रन्थे, न तथा शौनकीये ऋग्वेद-प्रातिशाख्ये। उक्तञ्च—

"अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥" इति।

यत् सूत्रलक्षणं तत्तु पाणिनीये पैङ्गले यथा सार्थक्यमेति, न तथा प्रातिशाख्ये।

वस्तुतस्तु प्रातिशाख्यग्रन्थो न हि सूत्रात्मकः। पिङ्गलछन्दःसूत्रे पाणिनिवदधिकारस्य प्रयोगः। सिंहावलोकिता अनुवृत्तिः पिङ्गले "द्वावप्यल्पशः" (३।४५) इत्यस्मात् सूत्रात् "अक्षरपङ्क्तिः पञ्चकाश्चत्वारः" (३।४०) इति सूत्रं यावत् प्रचलति। "द्वावप्यल्पशः" इत्यस्मात् सिंहावलोकितन्यायेनाल्पग्रहणमस्मिन् चतुश्चत्वारिंशे सूत्रे अनुवर्तते, तेन पङ्क्तेरल्पत्वं विशेषात् प्रतिपादितं भवति। तथा च "पादस्यानुष्टुव् वक्तुम्" इति सूत्रात् (५-१०) सिंहावलोकितन्यायेनानुष्टुव्ग्रहणं 'ग्लिति समानी' (५-७) इत्यस्मिन् सूत्रेऽनुवर्तते। तेनाष्टाक्षरः पादो यावद्भिर्गकारलकारैः पूर्यते, तावतामेव ग्रहणम्। तथा च 'उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ स्नौ ज्रौ ग्णौ स्णौ न जयौ' (५।२६) इति सूत्राद् आद्यपदं सिंहावलोकितन्यायेनान्यत्र वर्त्तते। तथा च हलायुधवृत्तिः—"उपस्थितप्रचुपितं पृथगाद्यमित्यतः सिंहावलोकितन्यायेनाद्यग्रहणमनुवर्तनीयम्।" मण्डूको यथैकस्मात् स्थानादन्यत्रोत्क्रम्य मध्यवर्तिस्थानमस्पृश्यैव गच्छति, तथास्मात् सूत्रादेकपदमध्यवर्तिषु सूत्रेषु पदं न लब्ध्वा परवर्त्तिनि कस्मिश्चित् सूत्रे उत्प्लुत्य गच्छति। सा अनुवृत्तिः नाम मण्डूकप्लुतिः।

वृत्तिकारो हलायुधस्तु वातोर्मी म्गौ त्गौ ग् इत्यस्य वृत्त्या एवञ्चात्र मण्डूकप्लुतिन्यायेन समुद्रऋषय इत्यनुवर्त्तते इत्याह। तेन चतुर्भिः सप्तभिश्च यति इत्यर्थं आयातीत्याह। तथा 'शालिनी म्तौ त्गौ ग् समुद्रऋषयः' (६।१५) इति सूत्रात् 'वृन्ता नौ स्गौ ग्' (६।२३) इत्यस्मिन् सूत्रे मण्डूकप्लुतिन्यायानुसारेण समुद्रपदस्य ऋषिपदस्य चानुवृत्तिर्विज्ञेया। तथा च गंगास्रोतानुवृत्तिः पिङ्गले बहुत्रोपलभ्यते। अत्रेदमपि ज्ञेयं पाणिनिव्याकरणमप्यष्टाध्यायात्मकम्, पिङ्गलच्छन्दोग्रन्थस्य अष्ट अध्यायाः। यथा पाणिनिव्याकरणे सूत्राण्येवोपलभ्यन्ते, नोदाहरणानि, तथा पिङ्गलग्रन्थे सूत्राण्येव सन्ति, तत्रोदाहरणानि नोपलभ्यन्ते। यथा पाणिनिग्रन्थस्य वृत्तिकार उदाहरणद्वारा सूत्रं पुष्टं कृतवान्, पिङ्गलस्यापि शास्त्रस्य वृत्तिकार उदाहरणप्रत्युदाहरणद्वारा विषयमुपस्थापितवान्।

अत एवास्माकमयमाशयः पिङ्गल-शौनकौ द्वावेव वेदस्य छन्दश्शास्त्रकर्त्तारावतिमहान्तौ। तयोस्सादृश्यं वैसादृश्यं च तुलनात्मकालोचनेन प्रणिधेयम्; किन्तु अनयोर्मध्ये पाणिनेः प्रभावो यथा पिङ्गले स्फुटतः परिदृश्यते, न तथा शौनकीये ग्रन्थ इति शम्।



# ऋग्वेदसंहिताभाषाया भाषातत्त्वस्य च स्वरूपम्

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणस्याम्

❀ ❀ ❀

सर्वज्ञानमयो हि वेद इत्याप्ताः समामनन्ति। तस्य सकलविद्यानामाकरत्वादेव तत्तद्विद्याऽवबोधादृते दुर्व्याख्येयत्वं साम्प्रतम्। अष्टादशविद्याऽभिव्यक्तिसाधनं नाम भाषा। तस्या द्वाररूपाया ज्ञानमन्तरा वेददुर्गप्रवेश एव दुश्शकः। अतः संहिताकाल एव भाषाविवरणविषयकं गभीरं चिन्तनं समधिगम्यते। ऋग्वेदसंहितायाः प्रथमे मण्डले लौकिक्या वाचश्चातुर्विध्यमभिहितम्। तत्त्वज्ञैर्मनीषिभिरेव वाचो याथार्थ्यमवगन्तुं पार्यत इत्याख्यातम्[1]। तत्रैव चतुर्थे मण्डले 'चत्वारि शृङ्गा'[2] इत्याख्यो मन्त्रो यद्यपि तत्तच्छास्त्रपरतया व्याख्यायते, तथापि पतञ्जलिना महाभाष्ये भाषाविश्लेषणतया व्याकृतः। चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्चेत्यस्य शब्दब्रह्मणः शृङ्गाणि, त्रयः काला भूतभविष्यद्वर्तमाना इति त्रयोऽस्य शब्दब्रह्मणः पादाः, द्वौ शब्दात्मानौ नित्यः कार्यश्चेति द्वे शीर्षे शब्दब्रह्मणः, प्रथमेत्यादयः सप्त विभक्तयोऽस्य शब्दब्रह्मणः सप्तसंख्याका हस्ता विज्ञेयाः। सोऽयं शब्दब्रह्मरूपो वृषभ उरसि कण्ठे शिरसीति त्रिषु स्थानेषु बद्धः शब्दं करोतीति भाषाविश्लेषणस्य चित्रमिदमृग्वेदसंहितायां दृश्यते। 'सुदेवो असि वरुण यस्य सप्त सिन्धवः'[3], इत्यस्मिन्नृग्वेदसंहिताया मन्त्रे भाषाविश्लेषणं पूर्वमन्त्रवदेव विद्यते महाभाष्यकारमतेन। सायणस्तु—काकुदं तालुं समुद्राख्यं सप्तसिन्धवः = गङ्गाद्याः सप्त नद्यः, अनुक्षरन्ति = जिह्वायां सर्वदा स्रवन्तीति व्याचख्यौ। 'सक्तुमिव तितउना पुनन्तः' इत्यत्र मन्त्रमृग्वेदसंहिताया[4] निरुक्तकारो व्याकुर्वन्नाह—धीराः = प्रज्ञानवन्तो ध्यानवन्त इति। यथा

---

१. चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥ ऋ० १।१६४।४५

२. चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश॥ ऋ० ४।५८।३

३. सुदेवो असि वरुण यस्य ते सप्त सिन्धवः।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव॥ ऋ० ८।६९।१२

४. सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रासखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि॥ ऋ० १०।७१।२

सक्तुरिवततउपूतो भवति तथा वाक् प्रज्ञानेन = भाषातत्त्वध्यानेन पूता क्रियते। यथा सक्तुपवने तुषाद्यपनीयते तथा भाषापवनेऽपशब्दादयोऽप्यपनीयन्त इति नूनं भाषातत्त्वविमर्श ऋग्वेदसंहिताकाले परिपाकमभजत्। एवं तावद् ऋग्वेदसंहितादर्शनात् प्रागेव भाषातत्त्वग्रन्थरचना समजीजनदिति शक्यते वक्तुं निश्चप्रचम्। 'वाणी = भाषा खलु भाषातत्त्वविदोऽग्र आत्मानं तथैव निरावरणं विदधाति, यथा जाया पत्ये कामयमानाऽऽत्मानं विवृणुते' इत्यर्थकेन 'उत त्वः पश्यन्न ददर्श वाचम्'[1] इत्यृग्वेद-संहिताया मन्त्रेण ज्ञायते यच्छब्दव्युत्पत्तिज्ञानवतो भाषातत्त्वविदोऽग्रे शब्दः स्वकीयं गोपनीयमैतिह्यं निगूहितुं न पारयते स्म, सर्वं गोप्यं तदग्रे तावत् प्रकाशयत्येव। एवं खलु शब्दव्युत्पत्तिशास्त्रमृग्वेदसंहितातश्चिरकालात् पूर्वं स्वसत्तां समसाधयदित्यनेन मन्त्रेण प्रतीयते।

वैदिकी भाषा खलु संस्कृताभिधानाया लौकिकभाषायास्तथैव गरीयसी, यथाऽसौ लौकिकी भाषा प्राकृतभाषातो ज्यायसी समास्थीयतेऽधुना। वैदिकस्तूपरशब्दो निर्विषाणपश्वर्थकः[2] संस्कृताभिधानलौकिकभाषायां तु स एव परतः पकारस्य वकारतया परिवर्तमानस्तूवरत्वमुपगतः पुनः प्रकृतिप्रत्यययोगेन निष्पाद्यते वैयाकरणैः[3]। केषुचन शब्दकोशेषु त्वेष पवर्गमध्यस्तूबर इत्यपि पठितो विलोक्यते। ऋग्वेदादि-वाङ्मये सुरादिनिष्पावकचालन्यर्थकः[4] कारोतरशब्दो विलोक्यते। विश्वबन्धुशास्त्रिणा शब्दस्यास्य व्युत्पत्तिर्विचिकित्सिता मता। निघण्टौ (३।२३) कूपार्थक एष शब्दः। दशापवित्र–इति कृत्वा कारो-(रा-उ)-त्तर इति पीटर्सबर्गकोशादिषु प्रदर्श्यते। वृषाश्व-शफमयसुरापात्राभिधानमिति कृत्वा कारा-पात्र–इति नैरुक्तप्रक्रिया, पूर्वपदस्य 'कारा' इत्यस्य सुरार्थो मदार्थकात् √कड् धातोर्व्युत्पन्नस्य। 'करोत्तर' इत्यपि पाठभेदः।

---

१. उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः॥ ऋ० १०।७१।४

२. अथर्ववेदे ११।९।२२, तैत्तिरीयसंहितायाम् २।१।१।४, वाजसनेयिसंहितायाम् २४।१; १५; २९।५९ शतपथब्राह्मणे ५।१।३।७।

३. तौति, √तु सौत्रो गत्यादौ। बाहुलकाद् वरः, दीर्घश्च। यद्वा तनोति बाहुलकाड्डुः। तूश्चासौ वरश्चाच्छादकः (व्याख्यासुधायां नामलिङ्गानुशासनटीकायां ३,३,१६५)।

४. (क) कारोतराच्छफादश्वस्य वृष्णः शतं कुम्भाँ असिञ्चतं सुरायाः—ऋ० १,११६,७ = कारोतरो नाम वैदलश्चर्मवेष्टितो भाजनविशेषो यस्मिन् सुरायाः स्रावणं क्रियते (सायणः)।

(ख) अन्तर उत्तरवेद्या रूपं कारोतरो भिषक्-यजु० १९,१६ = सुरापावनम् (उवटः); सुरापावनचालनी (महीधरः)।
अस्थि मज्जानं मासरैः कारोतरेण दधतो गवां त्वचि—यजु० १९,८२ = गलन-वाससा (महीधरः); कौषीतकिब्राह्मणे २,७।

निघण्टौ पठितः कूपार्थकः 'कारोत्तर'-शब्दः खलु निरुक्तव्याख्याकारेण देवराजयज्व-नेत्थं व्युत्पाद्यते—'करणं कारः, करोतेर्घञ्, कारेण = खननक्रियया, उत्तरः = अधिकः प्रदेशान्तरादुत्कृष्टो वा। यद्वा—'उत्खातमुदकं यस्य स करोतरः कृतोदको वा, पृषोदरादित्वात् कारोतरः' इति। प्रथमव्युत्पत्तावरुचौ सत्यां द्वितीया निर्दिश्यते निरुक्तिः।

लौकिके संस्कृतवाङ्मये 'कारोत्तरः' इति समधिगम्यते सुरामण्डार्थकः शब्दः। 'कारेण = क्रियया उत्तरः' इति नामलिङ्गानुशासनव्याख्याकारो भानुजिदीक्षितः सुधाख्यव्याख्यायां व्याकरोति। नूनमसौ भट्टोजिदीक्षितपुत्रो देवराजयज्वतः (१३१३ खी० जातात्) परवर्ती तत्कृतव्युत्पत्तिमन्वसार्षीदुभयोः प्रवृत्तिनिमित्तमविविञ्चानः।

वैदिके वाङ्मये गीर्भिः = स्तुतिभिः सम्भजनीया देवविशेषा इन्द्राग्निसोमाः खलु गिर्वणश्शब्देन संस्मृताः, न तु सामान्यतो देवः। निरुक्तकारेण यास्केन तु यद्यपि 'गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति' (६, १४) इत्यभिधाय देवः समाख्यातः, तथापि तस्य देवविशेष एवाभिप्रायो वेदितव्यः। परतः संस्कृताभिधाने लौकिके वाङ्मये मनाक् परिवर्तनेन गृहीतोऽयं शब्दो देववाचको जातः। उभयोर्व्युत्पत्तिप्रवृत्तिनिमित्तं सर्वथा पार्थक्यं भेजे।

'गिर्वणस्' इति सकारान्तः शब्द ऋग्वेदे प्रथमायां विभक्तौ क्वचित् प्रयुक्तो नास्ति, सर्वत्र संबोधन एव दृश्यतेऽसौ[1]। क्वचित् सायणेनास्येन्द्रवाचकस्याका-रान्तत्वेऽपि तत्र विचिकित्सितम्, यत्रेन्द्रशब्दो यौगपद्येन प्रथमान्तो दृश्यते प्रयुक्तः[2]। क्वचिदिन्द्रशब्दसहकारमन्तरापि शब्दोऽयमकारान्तो मतः सायणेन स्वकीयाया-मृग्वेदसंहिताव्याख्यायाम्[3]। पुनर्विचिकित्सायां सत्यां सकारान्त आस्थितस्तत्रैव। द्वितीयान्तस्य चतुर्थ्यन्तस्य चास्य प्रयोगे सकारान्तता निर्विवादा[4]। तमप्प्रत्ययान्तेन 'गिर्वणस्तम'-शब्देनाप्यस्य सकारान्तता निश्चीयते[5]। एकत्र त्विन्द्राग्नी गिर्वणस्तमतया समाख्यातौ।

---

१. सोमास इन्द्र गिर्वणः—ऋ० १।५।७=इन्द्र देवादिविशेष। इन्द्र गिर्वणः-ऋ० १।५।१०—इन्द्रः, परित्वा गिर्वणो गिरः—ऋ० १।१०।१२; उपातिष्ठन्त गिर्वणः ऋ० १।११।६; नहि त्वदन्यो गिर्वणो गिरः-ऋ० १।५७।४ = गीर्भिर्वननीयेन्द्र; गिर्वणः पाहि नः सुतम्—ऋ०३।४०।६। उक्थेष्विन्द्र गिर्वणः ऋ० ३।४१।४। पिबा त्वस्य गिर्वणः-ऋ० ३।५१।१०; ८।१।२६। एवमेव ऋ० ८।१३।४; ८।२४।१२; ८।४३।३; ८।६१।१४; ८।९३।१०;८।९५।१;८।९८।७।

२. इन्द्र गिर्वणस्तनूपा—ऋ० ६।४६।१०। गिर्वणः=गिरां संभक्तः, हे इन्द्र (सायणः)। कदा त इन्द्र गिर्वणः—ऋ० ८।१३।२२। गिर्वणः=गिरां स्तुतीनां संभक्तः (सायणः)।

३. इमं जुषस्व गिर्वणः समुद्र इव पिन्वते-ऋ० ८।१२।५—हे गिर्वणः=गिरां स्तुतीनां संभक्तः यद्वा स्तुतिभिः संभजनीयेन्द्र (सायणः)।

४. तं त्वा गिर्भिर्गिर्वणसं द्रवणस्युं द्रविणोदः -ऋ० २।६।३=अग्निम्। गृणवन्ति गिर्वणसं शं तदस्मै-ऋ० ६।३४।३। गिर्वणसम्—ऋ० ६।५०।६;८।२।२७। जुष्टं गिर्वणसे बृहत्—ऋ० ८।८९।७।

५. ईमहे तं गिर्भिर्गिर्वणस्तम—ऋ० ८।६८।१०। गिर्वणस्तमो अधिगुः—ऋ० ६।४५।२०।

यथा गिर्वणस्-शब्दो गीर्भिः = स्तुतिभिर्वननीयत्वे दृश्यते देवविशेषाणां तथैव गिर्वाहस्-शब्दोपि देवविशेषवाचक ऋग्वेदसंहितायामवाप्यते, न तु लौकिकसंस्कृत-वाङ्मये। अयं शब्दः सर्वत्र देवविशेषमिन्द्रमेवाभिप्रैति। सायणवदत्र सेण्टपीटर्सबर्ग-कोशकारौ बाथलिङ्क-राथमहाशयौ विचिकित्सामापन्नौ, 'आजिं न जग्मुर्गिर्वाहो अश्वा' (ऋ.६,२४,६) इत्यत्र। इह 'गिर्वाहः'-संबोधनैकवचनस्यताभ्यां भ्रान्त्याऽकारान्तप्रथमैक-वचनत्वमूरीकृतम्। सायणेन तत्र सूल्वणं व्याख्यायाम्—गीर्भिः=स्तुतिरूपाभिर्वाग्भिर्वह-नीयेन्द्र इति प्रतिपादयता संबोधनैकवचनत्वं समाश्रुतम्। द्वितीयाचतुर्थ्योर्विभक्त्योरस्य सकारान्तत्वं निर्विचिकित्सम्। 'गिर्वणस्यु' इति शब्दोऽपि स्तोतॄन् कामयमानेऽर्थे देवविशेषे प्राप्यते। नान्तो गिर्वन्-शब्दः शतपथब्राह्मणं (३, ६, १, २५) इन्द्रार्थकः समासादितः—इन्द्रो वै गिर्वा इति।

परतो लौकिकसंस्कृतवाङ्मये "गिर्वणाः" इत्ययं प्रथमान्तो वैदिकवाङ्मय-शब्दो 'गीर्वाणाः' इति स्वरूपमाललम्बे देवमात्रवाचकः। गीरेव निग्रहानुग्रहसमर्था बाणोऽस्त्रं येषामिति व्युत्पत्तिरपि तादृशी प्रकल्पिता वैयाकरणैः। दन्तोष्ठपाठे तु गिरं वन्वते = याचन्ते स्तुतिप्रियत्वादितीयं भिन्ना व्युत्पत्तिरन्विष्टा तैरेव[1]। गीरेव बाणोऽस्त्रं येषामित्यभिधेयं मनुस्मृतावङ्गीकृतं[2] भूदेवाभिप्रायकम्। एतादृशोऽयमर्थः क्रमशो वैदिकशब्दसादृश्यमवलम्बमानो लौकिकसाहित्ये निर्विरोधमभ्युपेतः।

ऋग्वेदसंहितायां प्रयुक्तः 'अवत'-शब्दो वाजसनेयिसंहितायां लौकिके संस्कृताभिधाने च वाङ्मये 'अवट' इति विलोक्यते[3]। 'अवत'-व्याख्यायाम्—'अवतम्' = नाहावलक्षणम् 'अवटम्' इवेति सुस्पष्टमभिहितं सायणेन[4]। निघण्टु-

---

१. बर्हिमुखाः क्रतुभुजो गीर्वाणा दानवारयः'—नामलिङ्गानुशासने १।१।९–गीर्वाणाः = गीरेव निग्रहानुग्रहसमर्था बाणोऽस्त्रं येषाम्। दन्तोष्ठपाठे–गिरं वन्वते, स्तुतिप्रियत्वात्। वनु याचने (त० आ० से०) कर्मण्यण्' (३।२।१); 'पूर्वपदात्'–(८।४।३) इति णत्वम् (भानुजि०)।

२. श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन्।
वाक्शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः॥ मनु० ११।३३।

३. खनत्ववट—वाजसनेयिसंहिता ११।६१; ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः-वा० सं० १३।७ अवटे चापि मे राम प्रक्षिपेमं कलेवरम् – वा० रा० ३।८। १९। पाणिनीये पात्रेसमिता-गणे—'अवटकच्छपः' इति।

४. अवतं न वंसगस्तातृषाणः—ऋ० १।१३०।२=नाहावलक्षणमवटमिव (सायणः)। आ च्या-वयामोऽवते न कोशम्—ऋ० ४।१७।१६ – अवते = कूपे 'अवत' इति कूपनाम, आवतोऽवटः क्रिविरिति कूपनामसु पाठात्।
तुभ्यं खाता अवताः—ऋ० ४।५०।३।
सिञ्चामहा अवतमुद्रिणम्—ऋ० १०।१०१।५—अवतम् = अवटं सिञ्चामहै (सा०)।
द्रोणाहावमवतम्—ऋ. १०।१०१।७ अवतम् = अवटवन्निम्नभूतम् (सा०)।

(३,२३)-व्याख्यायाम् "अवपूर्वादततेः पचाद्यचि (३, १,१३४), शकन्ध्वादित्वात् पररूपम् (६, १,९४ वा०), अवातति = खन्यमानोऽश्वो गच्छति" इति व्याख्यातं देवराजयज्वना। नामलिङ्गानुशासने भानुजिदीक्षितः 'शकादिभ्योऽटन्' इत्यवधातोरटन् प्रत्ययमाख्याति।

इत्थं खल्वनेकत्र वैदिक्या भाषायाः शब्दा मनाक् परिवर्तनेन संस्कृताभिधायां लौकिक्यां भाषायां गृह्यन्ते। भूयांसो वैदिकाः शब्दा लौकिक्यां भाषायां नैव प्रयुज्यन्ते। पाणिनिनोभयोर्भाषयोर्भेददर्शनाय 'छन्दसि' 'भाषायाम्' चेति भूयो भूयो व्याहृतम्। छन्दःपदेन वैदिकी भाषा समाम्नायते, भाषापदेन तु लौकिकी संस्कृताभिधाना शालातुरीयेण। 'संस्कृतम्' इति नामधेयं भाषायाः पाणिनीये कात्यायनीये पातञ्जले च काले नैव संवृत्तमासीत्। वाल्मीकीये रामायणे भाषायाः कृते संस्कारक्रमसम्पन्ना[1] ( = संस्कृता) इति नामकरणस्य संस्मृतत्वाद् वाल्मीकीयरामायणस्य रचना भूयोभिर्विपश्चिदपश्चिमैर्मुनित्रयादर्वाचीनाऽवसीयते। संस्कृतनामकरणानन्तरं तदीयं 'भाषा' इति व्याहरणं विलुप्तम्[2]।

एवं तावत् खीस्ताब्दीतः पूर्वं स्थूलतः पञ्च सोपानानि भाषाया अवगन्तुं पार्यन्ते—१. वेदसंहिताभाषा, तस्या व्याख्यानं ब्राह्मणेषु, निरुक्ते प्रातिशाख्येषु च; २. औपनिषदी, महाभारतीया, सूत्रग्रन्थानां च भाषा, ३. काव्य-महाकाव्य-नाटकादिभाषा, ४. प्राकृतपालिभाषा, ५. अपभ्रंशभाषा चेति। ब्राह्मणारण्यककालादेव यज्ञाद्यतिरिक्तव्यवहारेषु या भाषा प्रयोक्तुमारब्धा, सा परतः संस्कृतनाम्ना व्याहृताऽभूत्। खीस्ताब्दीतः पूर्वं महाभारतकाल एव ग्रामेषु कीकटादिदेशेषु च प्राकृतपाल्यपभ्रंशभाषाः प्रादुरभूवन्निति शक्यते वक्तुं दृढम्। एताभ्यः संस्कृते भूयांसः शब्दा आदीयमाना मन्यन्ते विद्वत्पुङ्गवैः। वैदिककाले प्राकृतजनैर्ग्रामादिषु या भाषा भाष्यन्ते स्म ता वैदिकप्राकृताः, ब्राह्मणारण्यककालादारभ्य ग्रामादौ व्यवह्रियमाणाश्च भाषाः संस्कृतप्राकृताः संजाताः। ततोऽप्यपभ्रष्टास्ता अपभ्रंशपदवीमभजन्।

केचित् तु वैदिक्यामपि भाषायां प्राकृतभाषातो गृहीता अभूवंस्तच्छब्दा इति संकल्पन्ते, तदविचारितरमणीयम्। भूयिष्ठा वैदिकाः शब्दाः संस्कृताभिधानलौकिकसाहित्येऽदृश्यमाना अपि प्रादेशिकीषु भाषासु प्रयुक्ताः समधिगम्यन्ते। अथर्ववेदीये कौशिकगृह्यसूत्रे प्रयुक्तस्य पल्पूलनशब्दस्य √पल्पूल्धातुः संस्कृतप्राकृतपाल्यभ्रंशादिभाषास्वनुपलभ्यमानस्तदेकांशतया पुलिन्द-(बुन्देल)-प्रदेशीय-भाषायां √पीलबौ इति

---

१. संस्कारक्रमसम्पन्नामद्रुतामविलम्बिताम्।
उच्चारयति कल्याणीं वाचं हृदयहर्षिणीम्॥ वा० रा० ४।३।३२।

२ 'संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः'—काव्यादर्शे १।३३।

रूपेण व्यवह्रियते लवनार्थकः। वैदिको गर्दाशब्दः कन्या-धूलिवाचकः संस्कृत-पालि-प्राकृतापभ्रंशप्रादेशिकभाषास्वनासादितः पारसीकभाषायामेव प्रयुज्यते। ततश्चाधुनिकीषु भाषासु धूलिवाचको गर्दाशब्दो गृहीतः, न तु साक्षाद् वैदिकाद् वाङ्मयात्। कन्यावाचकस्तु पौरस्त्यब्राह्मणानां शाण्डिल्यगोत्रीयाणां गर्दमुखशाखायां दृश्यते। कस्यचन वैदिकशब्दस्य संस्कृतवाङ्मयेऽनुपलम्भात् प्राकृतवाङ्मये च समासादनात् प्राकृतमूलत्वं न सिध्यति। एवमेव वैदिकशब्दस्य पालिप्राकृतापभ्रंशादिभाषास्वनुपलब्धस्य पारसीकदेशे च प्रयुक्तस्य पारसीकदेशमूलत्वं न सेत्स्यति।

संहिताकाल एव भाषाविश्लेषणविषयकाः प्रश्नाः समुदिता अभूवन्। तैत्तिरीयसंहितायां (६।४।७) भाषाविश्लेषणार्थं देवा इन्द्रमब्रुवन्। तत्र विश्लेषणार्थे व्याकरणशब्दप्रयोगः—'भाषां मे व्याकुरु' इति। श्रीमन्महाभारतेऽयं शब्दो विश्लेषणार्थे समुपलभ्यते[1]। साम्प्रतं खीस्ताब्दात् पूर्ववर्ति यद् भाषाविश्लेषणात्मकं समधिगम्यते तदस्ति पाणिनीयं व्याकरणम्। पाणिनिना तत्र पूर्ववर्तिनां दशसंख्याकानां वैयाकरणानां नामानि समुल्लिखितानि। इत्थं खलु महती परम्परा विलसति सुप्राचीना व्याकरणस्य भाषाविश्लेषणात्मकस्य प्राचीने भारते। ऐन्द्री माहेशी चेति परम्परा-द्वयस्य प्रचारोऽत्र सुस्पष्टं विज्ञायते। वैदिकव्याकरणं प्रातिशाख्येषु विवृतं सन्धिमात्रम्। व्याकरणस्य सीमा खलु पदसाधुत्वमात्रम्। गोपथब्राह्मणकाले 'को धातुः, कः प्रत्ययः, किं प्रातिपदिकम्' इत्यादिवचनैर्धातुप्रत्ययविश्लेषणपुरस्सरं पदसाधुत्वमवगम्यते स्म।

शब्दविश्लेषणात्मिका नैरुक्तप्रक्रिया व्याकरणप्रक्रियातो भिन्ना विलसति। तामाधुनिकं भाषातत्त्वं (भाषाविज्ञानम्) अनुकुरुते। व्याकरणप्रक्रिया वर्णनमाश्रयते। आधुनिकतमोऽयं प्रकारः प्रख्यायते भाषातत्त्वस्य साम्प्रतं वर्णनात्मकः (Discriptive Linguistics)। पाणिनिना 'पृषोदरादीनि यथोपदिष्टम्' (६।३।१०९) इति सूत्रेण वर्णलोप-वर्णविकार-वर्णविपर्ययादयो निरुक्तप्रकाराः स्वकीये व्याकरणे समावेशिताः। निरुक्तकारो यास्को महाभारते व्यासेन समुल्लिखित इति तस्मात् पूर्वमस्यावस्थिति-

---

१. सर्वार्थानां व्याकरणाद् वैयाकरण उच्यते।
प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः॥ महाभारते ५।४३।३७ :
'व्यवसायात्मिका बुद्धिर्मनो व्याकरणात्मकम्' महाभारते १२।२४४।११।
धर्मव्याकरणम्—महाभारते १३।......
मन्त्रव्याकरणम्—हरिवंशे
एकादशपरिक्षेपं मनो व्याकरणात्मकम्।
बुद्धिस्वामिकमित्येतत् परमेकादशं भवेत्॥ महाभारते १४, आश्व. ३६।

निश्चीयते। यास्केन स्वकीये निरुक्ते शाकपूण्यादयोऽनेके निरुक्तकाराः स्मृता इति भारतीयभाषा-तत्त्वविचारः खलु सुचिरन्तनः।

निरुक्तं तु व्याकरणमन्तरा न प्रवर्तते। अत एवाह निरुक्तकारो यास्कः—'नावैयाकरणाय नानुपसन्नायानिदंविदे वा नित्यं ह्यविज्ञातुर्विज्ञानेऽसूयोपसन्नाय तु निर्ब्रूयात् (२।१।६) इति। नूनं व्याकरणेन प्रारम्भिकशिक्षावत् पूर्ववर्तिना भाव्यं निरुक्तेभ्यः। यास्को वदति—'तदिदं विद्यास्थान व्याकरणस्य कार्त्स्न्यम्' (१।५।१) इति। 'इति गार्ग्यो वैयाकरणानां चैके' (निरु० १।४।१) इति। एवं सत्यपि निरुक्तं स्वतन्त्रमेव विद्यास्थानमर्थनिर्वचनम्, व्याकरणं तु लक्षणप्रधानमिति विशेषः। रज्जु-शब्दव्युत्पत्तिप्रसङ्गे व्याकरणमाह—'सृजतेरसुन् च' (उणा० १।१५) इति। निरुक्ते तु 'अथाप्याद्यन्तविपर्ययो भवति' इति। सिकताव्युत्पत्तिप्रसङ्गे व्याकरणे—'सिच्यते, बाहुलकादतच्, पृषोदरादिः (६।३।१०९)', निरुक्ते तु—'अथाप्याद्यन्तविपर्ययो भवति (√कस् विकसने)। एवमेव तर्कुः (कृती छेदने), √कर्त् > तर्क् > उ = 'तर्कुः' इति। दुहितृ-शब्दविश्लेषणे तु निरुक्तमाहार्थनिर्वचनम्—'दुर्हिता, दूरे हिता' इति। व्याकरणं तु—'दोग्धि, √दुह् प्रपूरणे, दहति, √दह् भस्मीकरणे, 'नप्तृनेष्टृ०' (उणा० २।९५) इति साधु, स्वस्रादित्वात् (४।१।१०) न ङीष् इति।

निरुक्तव्याकरणयोराद्यन्तोपधालोप उपधाविकारश्च सदृशावाख्यातौ। यथा निरुक्तकारः—'अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति—स्तः, सन्ति' इति, अथाप्यन्तलोपो भवति—गत्वा, गतम् इति, अथाप्युपधालोपो भवति—जग्मतुः, जग्मुरिति, अथाप्युपधाविकारो भवति—राजा, दण्डी—इति।' निरुक्ते ध्वनिसादृश्येन सार्धमेवार्थनिर्वचनं निध्यायते। निघण्टुशब्दनिर्वचने निरुक्तकारो √गम् धातुतो √हृ धातुतश्च व्युत्पत्त्यै प्रयतते—'निघण्टवः कस्मात्? निगमा इमे भवन्ति, छन्दोभ्यः समाहृत्य समाहृत्य समाम्नातास्ते निगन्तवः। एवं सन्तो निगमान्निघण्टव उच्यन्त इत्योपमन्यवः' इति। 'अपि वा हननादेव स्युः समाहृता भवन्ति। यद्वा समाहृता भवन्ति तद् यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च' इति।

निरुक्तादिषु कस्यचिदेकस्य शब्दस्य विविधा निरुक्तयो दृश्यन्ते भूयसामर्थ्यानामाधारेणेत्यव्यवस्था। यथा दण्डशब्दो द्विधा निरुच्यते तत्र—१. 'ददतेर्धारयतिकर्मणः', २. 'दमनादित्यौपमन्यवः' इति। पाणिनिना तु प्रकृतिप्रत्ययपुरस्सरं पदसाधुत्वाय सुव्यवस्थापितं व्याकरणशास्त्रम्। निपातनार्थकाच्चौरादिकाद् √दण्डधातोः पचाद्यचि (३।१।१३४), 'पुंसि' (३,४,११८) इत्यनेन घे कृते रूपं निष्पद्यते। औणादिकेन 'ञमन्ताड्डः' (१।११४) इति सूत्रेण तु √दम् धातोर्डे प्रत्यये कृते दण्डशब्दो निष्पद्यते। चौरादिकेषु बहुसंख्यकेषु धातुषु नामधातुप्रवृत्तिर्निभाल्यते। मूलतस्तूभयोर्भेदो नास्ति।

तृतीया प्रवृत्तिर्विलोक्यते भाषाविश्लेषणस्य प्रातिशाख्येषु नाम शिक्षाग्रन्थेषु । तस्यास्तादृशमनुशीलनं यूरपादिभाषासु नैव प्ररूढम् । पाणिनिना प्रातिशाख्यानां द्वेधा प्रवृत्तिर्नैजे व्याकरणे समाहृता—वैदिकव्याकरणरूपतया, शिक्षाग्रन्थतया च । यद्यपि साम्प्रतमुपलभ्यमाना पाणिनीया शिक्षा पाणिनिकृता न भवितुमर्हति, तथापि तत्र तत्त्वानि पाणिन्युपदिष्टानि सम्भाव्यन्ते । एतादृशमुच्चारणानुशीलनं यूरपादिदेशेषु परतः प्रक्रान्तम् । एवं खलु—१. दर्शनम्, २. पदसाधुत्वम्, ३. निर्वचनम्, ४. शिक्षादि चेति चतुर्गुणात्मकं भाषातत्त्वस्वरूपं ख्रीस्तशताब्दीतः पूर्वं महाभारतकाले दृढमूलमभवदिति नास्ति कश्चन संशीतिलेशः । साम्प्रतमेकत्र पाणिनीये व्याकरणे भाषातत्त्वस्वरूपमिदं संग्रहमुखेन समासाद्यते ।



# स्वरभेदादर्थभेदः

**डॉ० भीमसिंहो वेदालङ्कारः**
शास्त्री, एम्० ए०, एम्० फिल्०, पी-एच्० डी०
अध्यक्षः, संस्कृतविभागे
जनता-महाविद्यालयः, कौलम् (कुरुक्षेत्रम्)

❁ ❁ ❁

अद्य वयं स्वरभेदादर्थभेद इत्यावश्यकं विषयमुद्दिश्य किञ्चित् प्रस्तुवीमः। स्वरशब्देनास्माकमत्र त्रेधाभिप्रायः समुल्लसति। उद्देश्यविधेयभावेनार्थावबोधपूर्वकं शब्दस्वरूपोच्चारणम्—इत्येकः। आरोहावरोहक्रमरूपं काव्यगुणमधिकृत्यार्थविबोधकं वर्णोच्चारणम्—इत्यपरः। उक्तं च काव्यालङ्कारसूत्रे वामनेन—**'आरोहावरोहक्रमसमाधिरिति'**[1] समाधिनामकं गुणं लक्षयता। उदात्तानुदात्तस्वरितरूपेण त्रैस्वर्येण यथावदर्थप्रतिपादकं शब्दोच्चारणमिति तृतीयः। उक्तलक्षणस्यैतस्य स्वरस्य महत्त्वं सर्वत्र लोके वेदे च सुतरां प्रसिध्यति।

तद्यथा लोके आर्यभाषायां प्रयुज्यते—**'रोको मत जाने दो'**। अस्मिन् वाक्ये स्वरस्य माहात्म्यं दृश्यताम्—यदि गमनप्रतिषेधो वक्तुर्विवक्षितः, तदा 'रोको, मत जाने दो' इत्येवं स्वर उच्चारणीयो भवति। तथाप्रयुक्तेन स्वरेण गमनप्रतिषेधो विधेयोऽस्तीति विज्ञायते। तद्विरुद्धेन 'रोको मत, जाने दो' इत्येवं यदि स्वरेण वाक्यमुच्चार्यते, तदा गमनप्रतिषेधं विहाय गमनमेवाभ्यनुज्ञातं प्रतीयते। इत्थं परस्परविरुद्धावर्थौ स्वरोच्चारणभेदादेव प्रसिध्यतः। एवं **'हमें तो वे पसन्द हैं'** इत्यस्मिन् वाक्ये यदि **'वे पसन्द हैं'** इति स्वरः समुच्चिचारयिषितः, तदा तेषामानुकूल्यं प्रतीति भवति। **'वे पसन्द हैं'** इत्येवं स्वरेणोच्चारिते सति तेषां प्रातिकूल्यमनुभूयते, भाषाविज्ञाने वकार-बकार-पकारेष्वभेदस्य स्वीकरणात्।

देववाण्यामपि लौकिक्यां **'न द्यां यान्ति पतत्रिणः'**[2] इत्येवं **'न द्याम्'** शब्दयोः स्वरव्यवधानेनोच्चारितयोः सतोः **'पतत्रिणः द्यां दिवं न यान्ति = न गच्छन्ति'**

---

१. काव्यालङ्कारसूत्राणि, डॉ० बेचनझा सम्पादितानि, चौखम्बा-संस्कृत-संस्थान, वाराणसीतः प्रकाशितानि, द्वितीयं संस्करणम्, वि० २०३३, ३।१।१३।

२. द्र०—चन्द्रालोके, सुबोधचन्द्रपन्तसम्पादिते, १९६६ ईशवीयाब्दे, मोतीलाल-बनारसीदास दिल्लीतः प्रकाशिते, प्रथमे संस्करणे, दोषप्रकरणाख्ये द्वितीये मयूखे, श्लोकसंख्या–९।६।२९।
"स्याद् द्व्यर्थंमिह सन्दिग्धं नद्यां यान्ति पतत्रिणः।
स्यादप्रतीतं शास्त्रैकगम्यं वीतानुमादिवत्"॥

इत्यर्थोऽववुध्यते। नदीशब्दस्य सप्तम्येकवचने **'नद्याम्'** इति समुच्चारणे तु **'पतत्रिणः नद्यां सरिति यान्ति = गच्छन्ति'** इत्यर्थभेदः स्फुटीभवति। तदेतत् स्वरोच्चारणकृतमेव वैलक्षण्यमर्थभेदं जनयति। **'अजरामरता कस्य नायोध्येव पुरी प्रिया'**[1] इति वाक्ये यदि **'अजरस्य अमरस्य च भावः अजरामरता'** इति स्वरोच्चारणविवक्षा, तदा **'अजरामरत्वमयोध्या पुरीव कस्य न प्रियमित्यर्थः'** प्रतीतिपथमवतरति। अयोध्यापुर्या उपमानिर्वाहाय यदि स्वरभेदं कृत्वा **'अज-राम-रता = अजेन रामेण च राज्ञा रता'** इत्येवमुच्चार्येत, तदा स्पष्टमेवार्थभेदश्चमत्करोति।

यथा लोके स्वरभेदादर्थभेदोऽक्षिलक्षीभवति, तथा वेदेऽपि प्रत्यक्षमीक्ष्यताम् — **'चरित्रांस्ते शुन्धामि'**[2] इति वेदमन्त्रे **'चरित्रशब्द'** यदि 'चर्' धातोः करणे कारके **'अर्तिलूधूखनसहचर इत्रः'**[3] इति इत्रप्रत्ययान्तः इष्यते—'चरति अनेन तत् चरित्रम्; चरित्रान् पादानित्यर्थः' तदा 'इत्र' प्रत्ययस्याद्युदात्तत्वात् **'चरित्र'**शब्दो मध्योदात्तो भवति। तेन च स्वरेण **'चरित्रशब्दस्य'** पादोऽर्थः स्फुटीभवति। अथ यदि 'चर्' धातोरौणादिकेन **'सर्वधातुभ्यः ष्ट्रन्'**[4] इति सूत्रेण **'ष्ट्रन्'** प्रत्यये इडागमे च सति भाववचनः **'चरित्रशब्दो'** निष्पाद्यते, तदा इडागमस्यानुदात्तत्वात् **'ष्ट्रन्'** प्रत्ययस्य च नित्त्वाद् आद्युदात्तः **'चरित्रशब्दः'** भवति। आद्युदात्तस्य **'चरित्रशब्दस्य'** सदाचारोऽर्थः, तत्पर्यायवाचक एव **'चारित्रशब्दः'** निम्नेन सूत्रेण निष्पन्नो भवति, **'चरेर् वृत्ते'**[5] इति तदेतन् माहात्म्यं स्वरस्यैव। तेन मन्यामहे स्वरभेदादर्थभेदो भवतीति।

एवम् **'आप्यायध्वमघ्न्या'**[6] इत्यत्र **'अघ्न्याः'** इति शब्द आमन्त्रितत्वात् सर्वानुदात्तः, **'आमन्त्रितस्य च'**[7] इत्याष्टमिकनिघातविधानात्। **'अघ्न्या'** शब्दस्य प्रथमाद्वितीयाबहुवचनत्वे कल्प्यमाने तु आमन्त्रितनिघातस्य सर्वथाऽभाव एव स्यात्। तेन च **'हे अघ्न्याः ! अहन्तव्या गावः ! यूयमाप्यायध्वम् = पुष्यत'** इत्यस्य वस्तुभूतस्यार्थस्य लोप एव स्यात्। **'हे मनुष्याः ! यूयमघ्न्या गाः आप्यायध्वम्=पोषयध्वम्'**

---

१. द्र०—तत्रैव अलङ्कारप्रकरणाख्ये पञ्चमे मयूखे, श्लोकसं० ६८, पृ० १७१।
"भङ्गश्लेषः पदस्तोमस्यैव चेत् पृथगर्थता।
अजरामरता कस्य नायोध्येव पुरी प्रिया"॥

२. माध्यन्दिनशुक्लयजुर्वेदसंहिता (मा० यजु० ६।१४), सातवलेकर-सम्पादिता, स्वाध्याय-मण्डलपारडीतः प्रकाशिता, १९७०।

३. पाणिनीयाष्टाध्यायी (पा० ३।२।१८) श्रीधरशास्त्रि-सम्पादिता, भाण्डारकर ओरियण्टल रिसर्च इन्स्टीच्यूट, पूनातः प्रकाशिता, १९३५।

४. पा० उणादिसू० ६०८।

५. पा० ६।१।१९७-'ञ्नित्यादिर्नित्यम्'।

६. पा० उणादिसू० ६२१।

७. मा० यजु० १।१।

इत्यस्यार्थस्य स्वरविरोधाद् ग्रहणं न भवति। स्वर एवार्थविधौ बलवत् प्रमाणम्। स्वरव्यत्ययस्त्वगतिकगतिः।

स्वरज्ञानस्यात्यावश्यकत्वं मन्यमाना एवाभियुक्ता एवमाहुः—

**दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्**[1] ॥

अस्य वचसोऽयमेव संक्षिप्तोऽर्थः—य शब्दः स्वरेण वर्णेन वा दुष्टः, दोषयुक्तो भवति, स मिथ्याप्रयुक्तः सन् तमभीष्टमर्थं नाह, न कथयितुं प्रभवति। दोषयुक्तः शब्दो वाचो वज्रमिव घातको भवति। स्वरदोषदुष्टेन शब्देन यजमानो हन्यते। यथा **'इन्द्रशत्रु'**शब्दः स्वरदोषदुष्टत्वाद् यजमानं हिंसितवान्। **'इन्द्रशत्रु'**शब्दः प्रायेण वेदेष्वाद्युदात्त एवोपलभ्यते[2]। आद्युदात्तं स्वरं दृष्ट्वा तत्र शब्दे बहुव्रीहिः समासः प्रकल्प्यते। **'इन्द्रः शत्रु शातयिता यस्य स इन्द्रशत्रुरिति'**, **'बहुव्रीहौ प्रकृत्या पूर्वपदम्'**[3] इति वचनात् बहुव्रीहिसमासे पूर्वपदप्रकृतिस्वरो विधीयते। पूर्वपदं चात्रेन्द्रशब्दः। स च **'ऋजेन्द्राग्रवज्र०'**[4] इति सूत्रेण नित्त्वाद् आद्युदात्तः। तेन **'इन्द्रशत्रु'**शब्दः पूर्वप्रकृतिस्वरेणाद्युदात्तो भवति। शिष्टमनुदात्तम्। बहुव्रीहिसमासे 'शत्रु'शब्दस्य 'इन्द्र'शब्देन सह सामानाधिकरण्याद् इन्द्रः शत्रुः शातयिता भवति। स च तद्विरोधिनो वृत्रस्यैव। वृत्रेण यदा इन्द्रस्याभिचार आरब्धस्तदा तदीयऋत्विजा प्रमादाद् अन्तोदात्ते **'इन्द्रशत्रु'**शब्दे प्रयोक्तव्ये आद्युदात्तः प्रयुक्तः। तेन बहुव्रीहिसमासावगतौ इन्द्र एव वृत्रस्य शातयिता सम्पन्नः।

यद्यसौ ऋत्विक् प्रमादमकृत्वा अन्तोदात्तम् **'इन्द्रशत्रु'**शब्दं प्रायोक्ष्यत, तदा अन्तोदात्तेन **'इन्द्रशत्रु'**शब्देन षष्ठीतत्पुरुषसमासावगतिरभविष्यत्। षष्ठीसमासे हि **'समासस्य'**[5] इति विग्रहे **'इन्द्रस्य शत्रुः शातयिता इति इन्द्रशत्रुः'** इत्यर्थे वृत्र एवेन्द्रस्य शत्रुः शातयिता समभविष्यत्। तेन च तदभीष्टं सिध्येत्; किन्तु स्वरदोषदुष्टो मन्त्रः किं कुर्यात्। स्वरभेदादर्थभेदो भवत्येव। अन्तोदात्तस्वरप्रयोगात् षष्ठीतत्पुरुषसमासावगतौ सत्यां तेनैव वृत्रप्रयुक्तेन स्वरदोषदुष्टेन वृत्रस्य विनाशो विहित इति प्राचीनाख्या श्रूयते। तस्मान्मन्त्रोच्चारणे विशेषेणावधेयम्। स्वरदुष्टो मन्त्रो मा कदाचिदस्मान् विनाशयिष्यतीति।

---

१. महाभाष्यम्—(महा०) अभ्यङ्करसम्पादितम्, भाण्डारकर ओरियण्टल रिसर्च इन्स्टीच्यूट पूनातः प्रकाशितम्, तृतीय संस्करणम्, १९६२, पस्पशाह्निकम्, पृ० २।

२. तैत्तिरीयसंहिता, सातवलेकरसम्पादिता, स्वाध्यायमन्डलपारडीतः प्रकाशिता, १९५७, २।४।१२।१, २।५।२।१।

३. पा० ६।२।१। ४. पा० उणादिः–१९६। ५. पा० ६।१।२२३।

स्वरभेदादर्थभेदे सति बहून्युदाहरणानि फिट्सूत्रपाठे द्रष्टव्यानि। कानिचित्तु निदर्शनत्वेनोपन्यस्यामः—

### १. आशा', आशा

**'आशाया अदिगाख्या चेत्'**[1] इति फिट्सूत्रेण दिग्भिन्नेऽर्थे 'आशा' शब्दोऽन्तोदात्तः, दिगर्थे तु आद्युदात्तः। आताः। **आशाः**। उपराः। आष्ठाः। काष्ठाः। व्योम। ककुभः। हरितः। इत्यष्टौ दिङ्नामानि वैदिककोशे निघण्टौ पठितानि[2]। आशंसावचनस्तु लोके प्रसिद्ध **एवाशाशब्दः**[3]। तत्र दिगर्थवाचिनः **'आशा'**शब्दस्योदाहरणमथर्ववेदे दृश्यताम्—**'सर्वा आशा मम मित्रं भवन्तु'**[4], सर्वा दिशो मम मित्रं भवन्तु इत्यर्थः। अत्र दिग्वाची **आशाशब्द** आद्युदात्तः। **'यामाशामेमि केवेली सा मे अस्तु'** इत्यत्र **'आशा'**शब्दोऽभिलाषवाची आशंसावाची वान्तोदात्तः।

### २. अर्यः, अर्यः

स्वामिन्यन्तोदात्तः। वैश्ये त्वाद्युदात्तः। **'यो अर्यो मर्तभोजनं परा ददाति'**। 'यच्छूद्रे यदर्ये'[5]। **'अर्यः स्वामिवैश्ययोः'**[6], **'अर्यस्य स्वाम्याख्या चेत्'**[7] इति फिट्सूत्रेणापि तदेवानूद्यते।

### ३. कृष्णः, कृष्णः

**कृष्णशब्दो** यदा कृष्णमृगवाची भवति, तदाद्युदात्तः। यथा—**'कृष्णोऽस्याखरेष्ठः'**[8], किञ्च कृष्णनामा मन्त्रद्रष्टा ऋषिरपि ऋग्वेदे श्रूयते। सोऽपि कृष्णमृगनामसाम्याद् आद्युदात्त एव। यदा—**'अयं वां कृष्णो अश्विना हवते'**[9]। वर्णविशेषवाची तु

---

१. फिट्सूत्रम्—(फि०) १८।

२. The Nirukta and the Nighantu, L. Sarup, Motilal Banarasidas, Delhi-1967, 1. 8.
—तुलनीयम्, अमरकोषः (अमरः०), रामाश्रमीव्याख्योपेतः सम्पा० हरगोविन्दशास्त्री, चौखम्बा संस्कृत सीरीज आफिस, वाराणसीतः, प्रकाशितः, प्रथमं संस्करणम्, १९७०—१।३।१, पृ० ३७—''दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः' ॥

३. द्र०—अमरे, ३।३।२१६—''आशा तृष्णापि चायता''।

४. अथर्ववेदः—(अथर्व०) विश्वबन्धुसम्पादितः, विश्वेश्वरानन्द-वैदिक-शोधसंस्थान, होशियारपुरतः प्रकाशितः, १९६१-६२,-१९।१५।६।

५. मा० यजु० २०।१७।

६. पा० ३।१।१०३; तुलनीयम्, अमरे ३।३।१०६—'स्यादर्यः स्वामिवैश्ययोः'।

७. फि० सू० १७। ८. मा० यजु०, २।१। ९. ऋक्० ८।८५।३।

**कृष्णशब्दो**ऽन्तोदात्तः। तद्यथा—**'श्वा कृष्णः'**[१]। उक्तं च फिट्सूत्रे—**'कृष्णस्यामृगाख्या चेत्'**[२] इति। एवं 'कृष्णशब्दः' स्वरभेदादर्थत्रये विभक्तो भवति।

**४. कर्णः, कर्णः**

यदा **'कर्ण'शब्दः** शरीरावयवश्रोत्रवाची भवति, तदाऽऽद्युदात्तः। **'स्वाङ्गशिटामदन्तानाम्'**[3] इति वचनात्। तद्यथा—**'वक्ष्यन्ति इव इत् आगनीगन्ति कर्णम्'**[४]। यदा तु **'कर्णयुक्तः कर्णः'** इति विशेषणत्वेनोपचर्यते, तदाऽन्तोदात्तो भवति, यथा—**'कर्णो गर्दभः'**[५] अत्र गर्दभविशेषणतया प्रयुक्तः कर्णशब्दोऽन्तोदात्त एव। अत्रापि स्वरभेदं दृष्ट्वार्थभेदोऽनुमेयो भवति।

**५. वेदः, वेदः**

ऋग्वेदादिसंहिताचतुष्टयवाची **'वेद'शब्दः** आद्युदात्तः। तद्यथा— **'वेदः पृष्टः शचीपते'**[६]। यदा तु कुशमुष्टिवाचकत्वेनार्थविशेषे रूढो **'वेद'शब्दः, तदाऽसावन्तोदात्त** एव। तद्यथा—**'वेदोऽसि येन त्वं वेद वेद देवेभ्यो वेदोऽभवः'**[७]।

**६. दक्षिणः, दक्षिणः**

**'दक्षिण'**शब्दे **'दक्षिणस्य साधौ'**[८] इति फिट्सूत्रवचनात् तथाप्रयोगदर्शनाच्चाद्यन्तावक्षरौ पर्यायेणोदात्तौ भवतः। उक्तं च तत्रैवाग्रे सूत्रम्—**'स्वाङ्गाख्यायामादिर्वा'**[९] इति। **'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु'**[१०] इति कोषकारवचनादनेकार्थको 'दक्षिण'शब्दः। दक्षिणहस्तवाची **'दक्षिण'**शब्दोऽन्तोदात्तोऽपि दृश्यते, तथाद्युदात्तोऽपि। तद् यथा—**'इन्द्रस्य बाहुरसि दक्षिणः'**[११] इत्यत्राद्युदात्तः।

ऋग्वेदे तु **'दक्षिणशब्दो'**ऽन्दोदात्तो दृष्टिपथमवतरित। तद्यथा—**'स दक्षिणे संभृता कृतानि'**[१२]। दक्षिणहस्तेन दानाद् दानवाचको **'दक्षिणा'**शब्दस्त्वाद्युदात्त एव सर्वत्र[१३]। **'दक्षिणादाच्'**[१४] इत्याच्प्रत्ययान्तोऽव्ययं **'दक्षिणा'** शब्दः सर्वत्रान्तोदात एव, **'चित'**[१५] इत्यनुशासनात्। **'न दक्षिणा विचिकिते न सव्या'**[१६] इत्याजन्तस्योदाहरणम्।

---

१. मा० यजु० २४।४०। २. फि० ११। ३. तत्रैव—१९।
४. मा० यजु० २९।४०। ५. तदेव-२४।४०। ६. अथर्ववे० ७।५४।२।
७. मा० यजु० २।२१। ८. फि० ८। ९. तत्रैव—८।
१०. अमरे ३।१।८, "दक्षिणे सरलोदारौ"। तुलनीयम्—"दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु"। ११. मा० यजु० २।३। १२. ऋक्० १।१००।९।
१३. द्र०—उदाहरणार्थं यथा—ऋक्० २।२।२१—"दुहीयदिन्द्र दक्षिणा मघोनी"। तुलनीयं निरुक्ते—१।२ दक्षिणा दक्षतेः समर्धयति कर्मणः। वृद्धं समर्धयति अपि वा प्रदक्षिणागमनात् दिशमभिप्रेत्य..........।
१४. पा०, ५।३।३१। १५. पा० ६।१।१६३। १६. ऋक्० ३।२७।११।

'**दक्षिण**'शब्दस्येत्थं स्वरव्यवस्थायां फिट्सूत्रव्याख्यायां कौमुद्यामभाणीयं कल्याणी वाणी—'**दक्षिणस्य साधौ**' अन्त उदात्तः स्यात्। साधुवाचित्वाभावे तु व्यवस्थायां '**दक्षिण**'शब्दस्य सर्वनामतया '**स्वाङ्गशिटा**' मित्याद्युदात्तः, अर्थान्तरे तु लघावन्ते द्वयोश्च बह्वषो गुरुरिति गुरुरुदात्तः। स्वाङ्गाख्यायां **दक्षिणशब्दस्याद्यन्तौ** दकारणकारौ पर्यायेणोदात्तौ स्तः। '**दक्षिणो**' बाहुः। '**दक्षिणो** बाहुरिति'। छन्दसि च '**दक्षिण**'शब्दस्याद्यन्तावक्षरौ पर्यायेणोदात्तौ भवतः[1]।

न चेदं लक्षणैकचक्षुष्कैराशङ्कनीयं यल्लौकिकानां वैदिकानां च संस्कृतशब्दानां स्वरप्रामाण्ये पाणिनिलक्षणभिन्नानि पश्चाद्भवान्याधुनिकानि च फिट्सूत्राणि कथं प्रमाणभूतानि भवन्तीति। अपाणिनीयान्यपि फिट्सूत्राणि शान्तनवाचार्यप्रणीतानि लौकिकवैदिकस्वरविषये महाभाष्यकारपतञ्जलिमुनिवचनप्रामाण्यात् प्रामाण्यमर्हन्तीति।

तदुक्तं प्रकृतसूत्राणां व्याख्यावसरे सुबोधिन्या पर्यनुयोगपरिहाररूपं वचनम्—"ननु कथमपाणिनीयानि सूत्राण्युपन्यस्यन्ते पाणिनीयसूत्रैर्यः स्वर आयाति, स एव प्रमाणम्। तथा च '**शताच्च ठन्यतावशते**' इति सूत्रे कैयटः। '**नियतकालाश्च स्मृतयो व्यवस्थाहेतवः**' इति मुनित्रयमतेनाद्यत्वे साध्वसाधुप्रविभाग इति। नैतदपाणिनीयान्यपि फिट्सूत्राणि पाणिनीयैराश्रीयन्ते भाष्याद् ज्ञापकात्। तथा च '**आद्युदात्तश्च**' इति सूत्रे भाष्यम्—'**प्रातिपदिकान्तस्य चान्त**' इति प्रकृतेरन्तोदात्तत्वं शास्ति। '**फिषोऽन्त उदात्तः**' इति सूत्रेण फिषोऽन्तोदात्तत्वं विधीयते। '**फिडिति**' पूर्वाचार्यप्रसिद्ध्या प्रातिपदिकमुच्यते। तथा तस्मिन्नेव सूत्रे प्रत्ययाद्युदात्तत्वस्यावकाशः—यत्रानुदात्ता प्रकृतिः समत्वम्, सिमत्वमिति। न हि 'फिषोऽन्त उदात्तः, त्वत्, त्व, नेम, सम, सिमेत्यनुच्चा' इत्यादि फिट्सूत्राश्रयणं विना प्रकृतेरन्तोदात्तत्वं सर्वानुदात्तत्वं च सम्भवतीति दिक्[2]"।

### ७. अक्षः, अक्षः

स्वरभेदभिन्नाविमावक्षशब्दौ द्वाभ्यां धातुभ्यां निष्पन्नौ भवतः। एकोऽक्षशब्दः '**अशेर्देवने**'[3] इत्युणादिसूत्रविहित'स'प्रत्ययान्तत्वादन्तोदात्तः। स चाशूधातोर्निष्पन्नत्वाद् देवनार्थकपाशवाची[4]।

---

१. वैयाकरणसिद्धान्तकौमुदी, गिरिधरशर्मा-सम्पादिता, १९७६ ईशवीयाब्दे, मोतीलालबनारसीदास, दिल्लीतः प्रकाशिता, भा० ४, फिट्सूत्राणि, ८।९।१०, पृ० ४९४-९५।

२. सुबोधिनीटीका (वैयाकरणसिद्धान्तकौमुद्याः), फिट्सूत्रप्रकरणम् पृ० ४९१-९२।

३. उणादिः—३५२।

४. द्र०—अमरे २।१०।४५। "अक्षास्तु देवनाः पाशकाश्च ते"।

अपरस्तु **'अक्षू व्याप्तौ'** इति धातोः 'घञ्' प्रत्यये कृते निष्पद्यत इति नित्वादाद्युदात्तः। स च शकटाक्षवाची। उभयोर्यथाक्रममुदाहरणम्। यथा—**'यस्यागृधद् वेदने वाज्यक्षः'**[1] इत्यत्राक्षशब्दोऽन्तोदात्तः। **'तस्य नाक्ष'स्तप्यते भूरिभारः'**[2] इत्यत्र शकटाक्षवाचित्वादाद्युदात्तः। यदोभयोरपि 'अक्ष'शब्दयोः स्वरभिन्नयोस्सतोः **'अक्षौ'** इत्येकशेषः क्रियते, तदा **'सरूपाणामेकशेष एकविभक्तौ'** इति सूत्रस्थेन **'स्वरभिन्नानां यस्योत्तरः स्वरविधिः'** इति वार्त्तिकेन यस्याष्टाध्याय्यामुत्तरः स्वरविधिः, स शिष्यते। तेनाद्युदात्तस्यैव **'अक्ष'** शब्दस्यैकशेषो भवति **'अक्षौ'** इति। न त्वन्तोदात्तस्य **'अक्ष'**शब्दस्य।

**८. मी॒मांस॑कः, मीम॑ांसकः**

अत्र द्वौ **'मीमांसक'**शब्दौ द्वेधा निष्पद्येते। **'मान् वध दान शान्भ्यो दीर्घश्चाभ्यासस्य'**[3] इति सूत्रविहितसन्नन्तात् 'मान्' धातोः 'मीमांसते' इति **'मीमांसक'** इत्यर्थे **'ण्वुल्'** प्रत्यये सति **'लित् स्वरेण'**[4] मध्योदात्तो **'मीमांसक'**शब्द एको भवति।

अपरस्तु **मीमांसाशब्दात्—'तदधीते तद्वेद'**[5] इत्यर्थे **'क्रमादिभ्यो वुन्'**[6] इति **'वुन्'** प्रत्यये कृते तस्याकादेशे च सति **'मीमांसामधीते वेद वा मीमांसकः'** इत्यर्थको निष्पद्यते **'वुन्'** प्रत्ययस्य नित्वात् **'ञ्नित्यादिर्नित्यम्'**[7] इति नित्प्रत्ययान्तस्याद्युदात्तत्वं भवति। भिन्नार्थयोरुभयोः शब्दयोरेकशेषे **'यस्योत्तरः स्वरविधिरि'**त्युक्तेन वार्त्तिकेन **'मीमांसकौ'** इत्यत्राद्युदात्तस्यैवैकशेषः साधु मन्यते।

वेदचतुष्टय्यां तु शब्दद्वयस्याप्यस्य स्थाने **'मीमांसितस्य'**, **'मीमांसमानस्य'**[8] इति शब्दावुपलभ्येते। तत्र **'मीमांसितस्येति'** तु 'मीमांस' धातोः सन्नन्तात् **'क्त'** प्रत्यये सति **'प्रत्ययस्वरेणान्तोदात्तः'** निर्बाधः सिध्यति। **'मीमांसमानस्येत्यपि'** सन्नन्तात् 'मीमांसधातोः' लटः शानचो लसार्वधातुकनिघाते सति धातुस्वरेणान्तोदात्त एव सिध्यति।

**९. क्षय॑ः, क्ष॒यः**

उभौ **'क्षय'**शब्दौ स्वरभेदादर्थभेदं जनयतः। एक आद्युदात्तः। **'क्षयो निवासे'**[9] इति निवासार्थे आद्युदात्तविधानात्। यथा—**'यस्य क्षय॑ाय जिन्वथ'**[10]। 'क्षि निवास-

---

१. तत्रैव–३।३।२२१-२२। "अथाक्षमिन्द्रिये। ना द्यूताङ्गे कर्षे चक्रे व्यवहारे कलिद्रुमे"।

२. ऋक् —१०।३४।४।

३. पा०—१।२।६४।

४. तत्रैव–३।१।६।

५. तत्रैव–६।१।१९३—"लिति"।

६. तत्रैव।

७. तत्रैव–४।२।६१।

८. अथर्व० ९।७।७। वेदचतुष्टय्यां मीमांसकशब्दस्याभावसन्दर्भे उपरि यदलेखि, तद विश्वबन्धुसम्पादितचतुर्वेदवैयाकरणपदसूचीति ग्रन्थानुसारमेव बोध्यम्।

९. पा० ६।१।१०१।

१०. ऋक्० १०।९।३; मा० यजु० ३६।१६।

गत्योः' इति निवासार्थकात् 'क्षि' धातोः **'एरच्'**[1] इति कर्तृभिन्ने कारकेऽच् प्रत्यये कृते चित्स्वरेणान्तोदात्ते प्राप्ते **'क्षयो निवासे'** इति विशेषविहितत्वाद् आद्युदात्तत्वं भवति। निवासभिन्नेऽर्थे तु **'एरचश्'** चित्स्वरेणान्तोदात्तत्वात् **'क्षयः'** इत्यन्तोदात्तोऽपि सिध्यति। तत्तु रूपं 'क्षि क्षये' इति धातोः क्षयार्थकाद् निष्पाद्यम्। क्षयो विनाश इत्यर्थः[2]। विनाशार्थकस्य **'क्षय'** शब्दस्योदाहरणं वेदचतुष्टय्यामन्वेष्टव्यं भवति[3]।

### १०. क्षिति॑ः, क्षि॒तिः।

एतद् रूपद्वयमपि स्वरभेदं दृष्ट्वार्थभेदे परिकल्पनेन विनाशार्थकाद् निवासार्थकाच्च 'क्षि' धातोः निष्पन्नं विज्ञेयम्[4]। विनाशार्थकस्योदाहरणम्--**'क्षितिः पर्याक्रृता'**[5]। निवासार्थकस्योदाहरणम्—**'पुष्टिर् न रण्वा क्षितिर् न पृथ्वी'**[6]। **'क्षितिः पर्याक्रृता'** इत्यथर्ववचसोऽयमर्थः—पर्याक्रृता परितः समुपस्थापिता ब्रह्मगवी क्षितिः विनाशरूपा भवति। सर्वैः शिष्टैरशिष्टैश्च पर्याक्रृता स्पर्शविषयीकृता ब्रह्मगवी क्षितिं विनाशं जनयतीत्यर्थः।

### ११. चि॒त्रः, चित्र॑ः

स्वरभेदभिन्नावुभावपीमौ **'चित्र'**शब्दावर्थभेदं प्रकाशयतः। एकोऽन्तोदात्तश्चित्रशब्दश्चायनीयं पूजनीयमाश्चर्यकरमर्थं प्रकटीकरोति[7]। तद्यथा— **'यश्चि॒त्रो**

---

१. पा० ३।३।५६।

२. द्र० अमरे–३।३।१४५; ३।२।७ निलयापचयौ क्षयौ। क्षये क्षिया।

३. वेदचतुष्टय्यां विनाशार्थकस्य 'क्षय'शब्दस्याभावविषये उपरि यल्लिखितम्, तदपि विश्वबन्धुसम्पादितचतुर्वेदवैयाकरणपदसूचीति ग्रन्थानुसारमेव बोध्यम्। भाषाविज्ञानसरण्येदं समीचीनमेव प्रतीयते यन् निवास–क्षयेत्युभयार्थकस्य 'क्षि' धातोः एको निवासार्थकः 'क्षय' शब्दो वैदिकसाहित्ये प्रसिद्धः, अपरो विनाशार्थकः 'क्षय' शब्दो लौकिकसाहित्ये रूढः। यथा –'स भविष्यत्यसंदिग्धं वानराणां क्षयावहः'। (पञ्चतन्त्रस्यापरीक्षितकारके, डा० परमानन्दसम्पादिते, श्लोक सं० ७५)। अतो वैदिकसाहित्ये विनाशार्थकस्य 'क्षय'शब्दस्याभावेनैव भाव्यमासीत्। तुलनीयं निरुक्ते–२।१–-'अथापि प्रकृतय एवैकेषु भाष्यन्ते। विकृतय एकेषु। शवतिर् गतिकर्मा कम्बोजेष्वेव भाष्यते, विकारमस्यार्येषु भाषन्ते शव इति। दातिर् लवनार्थे प्राच्येषु, दात्रमुदीच्येषु'॥

४. प्रसङ्गेऽस्मिन् ४ संख्याका पादटिप्पणी द्रष्टव्या। अन्यच्चापि द्रष्टव्यम्, अमरे ३।३।७०, "क्षयवासावपि क्षितिः"।

५. अथर्व० १२।७।५। ६. ऋक्० १।६५।३।

७. द्र०–अमरे १।७।१९; ३।३।१७८। 'विस्मयोऽद्भुतमाश्चर्यं चित्रमपि'। 'आलेख्याश्चर्ययोश्चित्रम्'।

**मानुषे जने', 'चित्रं देवानामुदगादनीकम्'**[1]। अपर आद्युदात्तः **'चित्र'**शब्दो राजविशेषाभिधानमाचष्टे। चित्रो नाम राजा बभूव यस्य दानस्तुतिं सोभरिः काण्वः इत्थं प्रस्तौति—**'चित्र' इद् राजा राजका इदन्यके यके सरस्वतीमनु'**[2]। सोभरिर्मन्त्रदर्शनकृद् ऋषिः चित्रं राजानं प्रस्तुवन्नाह—एकः चित्रो नामैव राजा प्रशस्तो वर्तते। अन्यके अन्ये यके ये केचन सरस्वतीनदीमनु निवसन्ति, ते तु राजका एव, कुत्सिता राजान एव सन्ति। न ते प्रशंसामर्हन्तीति भावः।

## १२. जठ'रः (जठ'लः), जुठर'म्

**'जठर'**शब्दोऽपि स्वरभेदेन भिद्यतेऽर्थभेदनिमित्तं च भवति। उदरवाची **'जठरशब्दो'** मध्योदात्तः **'जठरमुदरं भवति। जग्धमस्मिन् ध्रियते धीयते वा'** इति प्राह भगवान् यास्को नैगमकाण्डे[3]। तद्यथा—**'आयः सोमेन जुठर'मपि प्रत', 'आसिञ्चस्व जुठरे' मध्व ऊमिम्'**[4] इत्यादीन्युदाहरणानि मध्योदात्तस्य **'जठर'**शब्दस्योदरार्थकस्य द्रष्टव्यानि। इतरो **'जठर'**शब्दस्त्वाद्युदात्तः। स च व्यक्तिविशेषस्य संज्ञा। **'जठरः'** एव वर्णव्यत्ययेन **'जठलः'** इत्युच्यते रलयोरभेदात्। तद्यथा—**'याभिः पठर्वा जठरस्य यज्मना', 'चतस्रो नावो जठलस्य जुष्टा'**[5] इति।

## १३. अयुतं, अयु'तः

**'अयुत'**शब्दोऽप्यर्थभेदं स्वरभेदादेव जनयति। एको मध्योदात्तः। अपरश्चाद्युदात्तः। **'अ-युतः='अयुतः'** इत्यवग्रहे तु नात्यादरः। मध्योदात्तोऽयुतशब्दः संख्याविशेषपरिमाणस्य वाचकः। तद्यथा—**'सहस्रं सर्वा अयुतं च साकम्', 'सहस्रं च सहस्रं चायुतं चायुतं च नियुतं च नियुतं च'**। आद्युदात्तोऽपरोऽयुतशब्दस्त्ववग्रहमपि प्रयोजयति—**'अ-युतः इत्ययुतः'**[6] इति। युतः पृथग्भूतः सम्मिश्रितो वा। तद्भिन्नः अयुतः। तद्यथा—**'अयु'तोऽहमयु'तो मे आत्मा'**[7] इति।

## १४. अुरित्रम्, अरित्रम्

**'अर्तिलूधूसूखनसहचर इत्रः'**[8] इति 'इत्र' प्रत्ययान्तोऽरित्र शब्दो मध्योदात्तः। **'सर्वधातुभ्यः ष्ट्रन्'**[9] इति **'ष्ट्रन्'** प्रत्ययान्तात् 'ऋ' धातोरिडागमे गुणे च कृते नित्स्वरेणाद्युदात्तोऽपरोऽरित्रशब्दः। **अरित्रं नौसम्बद्धं 'चप्पू'** इति भाषायाम्[10]। मध्योदात्तस्योदाहरणम्—**'अुरित्रं वा दिवस्पृथु'**[11]। आद्युदात्तस्योदाहरणम्—

---

१. ऋक्० १।४८।११; १।११५।१। २. तत्रैव–८।२१।१८। ३. निरुक्ते–४।१।
४. ऋक्०–५।३४।२; मा० यजु० ७।३८। ५. ऋक्० १।११२।१७; तत्रैव–१।१८२।६।
६. तत्रैव–४।२६।७; मा० यजु०, १७।२। ७. अथर्व० १९।५१।१।
८. पा० ३।२।१८४। ९. पा० उणादिः-६०८।
१०. द्र०–अमरे–१।१०।१३ अरित्रं के निपातकः। ११. ऋक्० १।४६।८।

'अरित्राणि हिरण्यया'[1] इति। छन्दसि सर्वविधीनां विकल्पितत्वात्[2] स्वरभेदेऽप्यत्रार्थ-भेद एव स्फुटीभवति। मध्योदात्तोऽरित्रशब्दः पुंलिङ्गे बहुत्वे चापि वेदेषु दृश्यते। तेन मन्यामहे यौगिकोऽयं शब्दोऽपि सम्भवतीति। तद्यथा—'अस्याजरासोद्मामरित्राः'[3] इति।

### १५. अरिः, अरिः

स्वरभेदभिन्नावरिशब्दौ वेदेषूपलभ्यते। तत्र स्वरभेदेनोभयोरर्थभेदेनाप्यवश्यं भवितव्यम्। वेदे यथायथं प्रकरणं विज्ञाय द्वयोरप्यर्थभेदः स्वयमेवोह्यः। 'अरि'-शब्दस्य प्रायः प्रसिद्धः शत्रुरेवार्थः। स किमदाननिमित्तक उत प्रत्यर्थिरूपेण रूढ इति विमृश्यमवश्यम्। तथा च 'अ-रिः=अरिः' इत्यवग्रहोऽपि न दुष्यति अन्तोदात्तस्य 'अरि'शब्दस्योदाहरणम्—'उत नः सुभगाँ अरिः'[4] इति। आद्युदात्तस्य तु—'हन्त्वेनान् प्रदहत्वरिः'[5] इति।

### १६. मानः, मानः

'मान'शब्दौ स्वरभेदभिन्नावर्थभेदं प्रकटीकुरुतः। आद्युदात्तो 'मान'-शब्दस्तत्संज्ञकं व्यक्तिविशेषं सूचयति। यद्यप्याद्युदात्तस्य 'मान'शब्दस्यान्येऽप्यर्थाः सम्भवन्ति; तथापि अगस्त्यऋषेः जनकः कश्चित् 'मान' नामर्षिरपि प्रादुरासीदिति[6] वेदमन्त्रेष्वाख्यानात् प्रतीयते। तद्यथा—'मानस्य सूनुः सहसाने अग्नौ'[7] इति मन्त्रं मानस्य सूनुरगस्त्य ऋषिः प्रवक्ति। अथर्ववेदे बहुषु स्थलेषु 'मानस्य पत्नि' इति बहुधा श्रूयते[8]। कोऽसौ मानः? का च तस्य पत्नीति? वेदज्ञैर् जिज्ञासितव्यम्। अपरो 'मान'शब्दस्त्वन्तोदात्तः। तद्यथा—'अरुणं मानमन्धसः'[9] इत्यत्र 'मान'शब्दः परिमाणार्थकः सम्भवेन्नाम।

---

१. अथर्व० ५।४।५।

२. द्र०—परिभाषेन्दुशेखरः, अभ्यङ्करसम्पादितः, भाण्डारकर ओरियन्टल रिसर्च इंस्टीच्यूट, पूनातः प्रकाशितः, १९६२, परि० संख्या, ३५—'सर्वे विधयश्छन्दसि विकल्प्यन्ते।' तुलनीयम्—महा०, मा० १, पा० १।१।६, पृ० ५५, दृष्टानुविधिश्छन्दसि भवति।

३. ऋक्० १०।४६।७, मा० यजु०, ३३।१।

४. ऋक्० १।४।६।

५. अथर्व० १३।१।२९।

६. द्र०— अमरे, २।९।८५ 'यौतवं द्रव्यं पाय्यमिति मानार्थकं त्रयम्'।

द्र०—M. M. William Dictionary–Publ shed by Oxford University Press, 1956, Opinion, Notion, Conception, Name of the father of Agastya etc.

७. ऋक्० १।१८९।८।

८. अथर्व० ९।३६।९।

९. ऋक्० १०।१४५।५।

### १७. म॒नुः, मनु॑ः

अत्रापि स्वरभेदादर्थभेदोऽनुमीयते। आद्युदात्तो 'मनु'शब्दो मनुनामकं राजर्षि सूचयति। **'शृस्वृस्निहि०'**[१] इत्यादिनोणादिसूत्रेण 'मन्' धातोर् विहितस्य **'उ'** प्रत्ययस्य नित्वविधानात्। **'धान्ये नित्'**[२] इति पूर्वस्मात् सूत्राद् **'नित्'** इत्यस्यानुवृत्तेः स्वीकारात्। नित्त्वादाद्युदात्तत्वं स्पष्टमेव। अपरस्तु **'मनु'**शब्दोऽन्तोदात्तो मनुष्यनामको मन्त्रनामको वा सम्भवेत्। तत्राद्युदात्तस्योदाहरणं यथा—**'त्वमग्ने मनवे द्यामवाशय'**[३] अन्तोदात्तस्य तु **'सीदद्धोता मनावधि'**[४] इति।

### १८. अ॒णुः अणु॑ः

इमावपि शब्दौ स्वरभेदेनार्थभेदं व्यङ्क्तः। आद्युदात्तोऽणुशब्दः धान्यविशेषस्य वाचकः[५]। अण्' धातोः **'धान्ये नित्'**[६] इति विधीयमानः 'उ' प्रत्ययो नित्वादाद्युदात्तत्वं प्रयोजयति। तद्यथा—**'प्रियङ्गवश्च मेऽणवश्च मे'**[७]। धान्यार्थादन्यत्र लेशार्थकस्त्वणुशब्दः[८] नित्वाभावात् **'उ'** प्रत्ययस्वरेणान्तोदात्तः।

### १९. अ॒भ्वः, अ॒भ्वः

अभ्व इति महन्नामसु निघण्टौ पठितम्[९]। एकत्र स्वरितत्वम्, अपरत्र तूदात्तत्वम्। यदि तु "स्वरितेऽप्युदात्तोऽस्ति"[१०] इति भाष्यकारवचनाद् उदात्तस्वरितयोरभेदं मत्वा स्वरभेदो नाभ्युपेयते, तदार्थभेदादिदमुदाहरणं परिहर्तव्यं भवति। आद्युदात्तस्योदाहरणम्—"द्यावा रक्षतं पृथिवी नो अभ्वा॑त्"[११] इति। स्वरितस्योदाहरणं केवलमथर्ववेद एव—"रक्षो अ॒भ्वंमराय्य॑ः"[१२] इति।

### २०. जुष्टः, जुष्टः

एतौ शब्दौ **'जुष्टार्पिते च छन्दसि'**[१३] इति वचनादाद्युदात्तावन्तोदात्तौ च विकल्पेन स्मर्येते। **'छन्दसि'** इति कथनेन ब्राह्मणाख्ये वेदभागे स्वरद्वययुक्तौ स्यातामिति कल्प्यते। मन्त्रभागे तु वेदे **'नित्यं मन्त्रे'**[१४] इति वचनाद् नित्यमेव **'जुष्टार्पित'** शब्दाभ्यामाद्युदात्ताभ्यां भाव्यम्। किन्तु न तथा मन्त्रभागरूपे वेदचतुष्टयेऽपि

---

१. पा० उणादिः-११०। २. तत्रैव-९।
३. ऋक्०, १।३१।४। ४. तत्रैव-८।७२।२।
५. द्र०—अमरे-२।९।२२, "व्रीहिभेदस्त्वणुः पुमान्"।
६. पा० उणादिः ९। ७. मा० यजु०-१८।१२।
८. द्र०—अमरे-३।१।६१, "स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाणवः"।
९. निघण्टौ—३।३। १०. महा० भाग-३, पा० ६।२।१, पृ० ९७।
११. ऋक्०—१।१८४।२। १२. अथर्व० ४।१७।५।
१३. पा० ६।१।२०९। १४. तत्रैव—६।१।२१०।

ऐकस्वर्यं दृश्यते, तस्मात् **'नित्यं मन्त्रे'** इति सूत्रं मन्त्रदृष्टस्वरविरोधात् त्याज्यमेव। आद्युदात्तस्य 'जुष्ट'शब्दस्यादोहरणं यथा—**'जुष्टो' हि दूतो असि हव्यवाहनः'**[1]। अन्तोदात्तस्य तु **'मती जुष्टा धिया हितः'**[2] इति। **'नित्यं मन्त्रे'** इति पाणिनीयसूत्रमधिकृत्य सिद्धान्तकौमुद्यामुक्तं दीक्षितैः—"एतत् सूत्रं शक्यमकर्तुम्। **'जुष्टो दमू'ना'**[3]। **'षडंर आहुरर्पितम्'**[4] इत्यादेः पूर्वेणैव सिद्धेः, छन्दसि पाठस्य व्यवस्थिततया विपरीतापादनायोगात्। **'अर्पिताः षष्टिर् न चला चलासः'**[5] इत्यत्रान्तोदात्तदर्शनाच्च इति। युक्तं चैतत् **'जुष्टार्पित'**शब्दयोरर्थस्तु स्वरभेदेऽपि न भिद्यत इति प्रतिशाखं मन्त्रभेदेन स्वरभेदोऽकिञ्चित्कर एव।

### २१. अर्पितः अर्पितः

अत्र स्वरभेदे यो हेतुः स, जुष्टशब्दव्याख्यान एव प्रोक्तः।

### २२. अर्धः, अर्धः

स्वरभेदेन 'अर्ध'शब्दस्याप्यर्थभेदो जायते। समप्रविभागभिन्नेऽर्थे 'अर्ध' शब्द आद्युदात्तः। समप्रविभागे त्वन्तोदात्तः[6]। तद्यथा—'अर्धो ग्रामस्य' इत्यत्रासमप्रविभागत्वात् 'अर्ध'शब्दस्याद्युदात्तत्वम्। **'अर्धं पिप्पल्याः'** इत्यत्र तु समप्रविभागत्वादन्तोदात्तत्वम्। तथा च—**'अर्धस्यासमद्योतने'**[7] इति फिट्सूत्रम्। वेदेऽप्युदाहरणं दृश्यताम्—**'सा कद्रीची कंस्विदर्धं परागात्'**[8]। अत्र समांशवाचकोऽर्धशब्द इत्याद्युदात्तत्वम्। असमप्रविभागे तु **'अस्माँ अर्धं कृणुतादिन्द्र गोनाम्'**[9] इति। अत्र गवां समप्रविभागो न विवक्षित इत्यर्धशब्दस्यान्तोदात्तत्वं द्रष्टव्यम्।

### २३. अस्य, अस्य

अत्र द्वौ **'अस्य'** इति शब्दौ। एकोऽन्तोदात्तोऽपरश्च सर्वानुदात्तः। यदा 'इदम्' शब्दस्य षष्ठ्येकवचने त्यदाद्यत्वे पररूपे च **'टाङसिङसाम्'**[10] इति 'ङसः' स्यादेशे हलादिपरत्वे सति **'हलि लोपः'**[11] इति 'इद्' भागस्य लोपः क्रियते। इदमोऽवशिष्टस्याकारस्य **'फिषोऽन्तोदात्तः'**[12] इति अन्तोदात्तत्वात् **'ऊडिदं पदादि०'**[13] इति सूत्रेण स्यप्रत्ययस्यानुदात्तस्योदात्तत्वं विधीयते। शेषनिघातेनाकारोऽनुदात्तः। तदा अकारेऽनुदात्ते सति **'अस्य'** इति शब्दोऽन्तोदात्तो भवति। तद्यथा—**'अस्य वामस्य पलितस्य होतुः'**[14]। इदं तु 'अस्य' इति रूपमन्वादेशभिन्नम्। अन्वादेशे (पुनः कथने) तु विवक्षिते

---

१. ऋक्० १।४४।२। २. तत्रैव-९।४४।२। ३. तत्रैव-५।४।५।

४. तत्रैव-१।१६४।२। ५. तत्रैव-१।१६४।४८।

६. द्र०—अमरे-१।३।१६-'अर्धं समेऽशंके'। ७. फि० ३६। ८. ऋक्० १।१६४।१७।

९. तत्रैव-२।३०।५। १०. पा ७।१।१२। ११. पा० ७।२।११३।

१२. फि० १। १३. पा०, ६।१।१७६। १४. ऋक् १।१६४।१।

तस्यैव 'इदम्' शब्दस्य षष्ठ्येकवचने 'स्य' प्रत्यये परतः **'इदमोऽन्वादेशे०'**[1] इति 'इदमः' स्थाने विधीयमानः 'अशादेशः' अनुदात्तो भवति। स्यप्रत्ययश्च सुप्त्वात् **'अनुदात्तौ सुप्पितौ'**[2] इति अनुदात्तोऽस्त्येव। एवमन्वादेशे **'अस्य'** इति पदं सर्वानुदात्तं सिद्धं भवति। तद्यथा—**'तृतीयो भ्राता घृतपृष्ठो अस्य'**[3] इति। उक्तं च भगवता यास्केन —'अस्या इति च अस्य इति चोदात्तं प्रथमादेशे। अनुदात्तमन्वादेशे। तीव्रार्थतरमुदात्तम्। अल्पीयार्थतरमनुदात्तम्'[4] इति।

स्वरभेदादर्थभेदो भवतीत्युपक्रान्तस्य विषयस्य साधीयः प्रद्योतनाय लौकिकानि वैदिकानि चोपपञ्चविंशान्युदाहरणानि अलम्भूष्णूनि सन्तीति मत्वा नाधिकतरं प्रपञ्च्यते। इदन्तु बोध्यम्—अद्यत्वे भूयांसः संस्कृतज्ञा अपि पुरुषाः प्रायेण मन्त्राणामुद्देश्यविधेयभावापरिज्ञानात् स्वरदोषदुष्टान् मन्त्रानुच्चारयन्ति। तेन चोच्चारणदोषेणार्थोऽपि सुतरां दुष्यति। स दोषः परिहरणीयः। तद्यथा—**'द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरित्यादि'**[5] यजुर्वेदीयमाध्यन्दिनशाखायाः शान्तिपाठमन्त्रे द्यु प्रभृतीनुद्दिश्य शान्तिर्विधीयते। तदर्थानुसारमेव मन्त्रपाठः कर्तव्य। तथाहि—**'द्यौः शान्तिरः, अन्तरिक्षं शान्तिः, पृथिवी शान्तिरः, आपः शान्तिरः'** इत्येवं स्वरवर्णानुपूर्वीपरिज्ञानयुक्तेन पाठेन मन्त्रोऽर्थवत्वात् फलवान् भवति। तद्विपरीतपाठेन तु फलरहितो निष्फलो वा जायते।

बहवः सुविज्ञा अपि सामाजिकाः स्वकीयेषु मन्दिरेषु भक्तिमन्तोऽपि सन्तोऽर्थज्ञानविरहिता इत्थङ्कारमन्यथाकारं मन्त्रानशुद्धान् विगीतान् वोच्चारयन्ति। तद्यथा—**'द्यौः शान्तिरन्तरिक्षं, शान्तिः पृथिवी, शान्तिरापः, शान्तिरोषधयः०'** इति भ्रष्टस्वरोच्चारणजनितेयमशुद्धिः शोधयितव्या भवति। या दिवः शान्तिः, सा दिवैव सह प्रयोक्तव्या। अन्तरिक्षस्य शान्तिरन्तरिक्षेण सहैव। पृथिव्याः शान्तिः पृथिव्या सहैव। अपां शान्तिरद्भिः सहैव। ओषधीनां शान्तिरोषधीभिः सहैवेत्येवमादि विवेक्तव्यम्। अस्मिन् शान्तिपाठमन्ते पूर्वं द्यु प्रभृतयो निर्दिष्टास्तदनन्तरं तेषामेवाव्यवधानेन 'शान्ति' शब्दो निर्दिष्टः। तस्मात् 'शान्तिः पृथिवी, शान्तिर् आपः, शान्तिरोषधयः०' इत्येवं भ्रष्टः पाठो न कदाप्यनुष्ठेयः, किं तर्हि, **'अन्तरिक्षं शान्तिः, पृथिवी शान्तिः, आपः शान्तिः, ओषधयः शान्तिरः०'** इत्येवं शुद्धः पाठो वेदोक्तोद्देश्यविधेयभावं विज्ञाय विधेयः। पर्यवसाने 'शान्तिः सामा, शान्तिरेधि' इत्येवमपशब्दमनर्थकं च ब्रुवाणा प्रत्यवायभाजो भवन्ति। **'अनर्थकं मा धिगीष्महि'**[6] इति भाष्यकारपतञ्जलिवचनं न विस्मर्तव्यम्।

---

१. पा० २।४।३२।
२. तत्रैव–३।१।४।
३. ऋक्० १।१६४।१।
४. निरुक्ते, नैगमकाण्डे–४।४।
५. मा० यजु० ३६।१७।
६. महा० भा०–१, पस्पशायाम्, पृ २।

एवं सन्ध्यामन्त्रेषु **'प्राची दिगग्निर्०'**[1] इत्यादि मनसा परिक्रमणाख्येषु षट्स्वपि मन्त्रेषु **'तेभ्यो नमो, धिपतिभ्यो नमो, रक्षितृभ्यो नम, इषुभ्यो नम, एभ्यो अस्तु'** इति वाक्यं नमस्काररहितमेवोच्चारयन्तो महान्तं क्लेशमनर्थं च जनयन्ति। तस्माद् वेदमन्त्रस्थं स्वरमर्थं च सम्यक् परिज्ञायैवमुच्चारणीयम्—**'तेभ्यो नमोऽधिपतिभ्यो, नमो रक्षितृभ्यो, नम इषुभ्यो, नम एभ्यो अस्तु'** इत्येवं शुद्धमर्थस्वरसमन्वितं च मन्त्रमुच्चारयन्तो वैदिका विद्वांसः स्वमभीष्टं लप्स्यन्ते, अनिष्टाच्च निवर्तिष्यन्ते। एषु षट्स्वपि मन्त्रेषु 'नमः' शब्दस्योच्चारणमधिपतिप्रभृतिभ्य उद्देश्येभ्यः प्रागेव विधानीयः, न तु पश्चात्। तथानुच्चारणे महादोषप्रसङ्गात्।

किञ्च अथर्ववेदस्य शौनकशाखायास्तृतीये काण्डे सप्तविंशतितमस्य सूक्तस्येमे मन्त्राः प्रत्यक्षदृश्या भवन्ति। अस्यैवाथर्ववेदस्य पैप्पलादशाखायाम् **'एभ्योऽस्तु'** इत्यस्य स्थाने **'वो अस्तु'** इति पाठभेद उपलभ्यते। 'युष्मद्' शब्दस्य चतुर्थीबहुवचने **'वस्'** आदेशश्च पदात्परत्वेऽपादादौ च भवति, न तु पादादौ। यदि **'नम एभ्योऽस्तु'** इत्येवं **'नमः'** पदपूर्वकं पठ्येत, तदा तत्स्थाने विधीयमानपैप्पलादीयः **'नमो वो अस्तु'** इति पाठ भेदः सुष्ठूपपद्येत। **'अनुदात्तं सर्वमपादादौ'**[2] इत्यनुशासनेन 'वस्' आदेशस्य सर्वानुदात्तत्वात्। यथा **'एभ्यो अस्तु'** इति शौनकपाठे **'एभ्यः'** इति 'इदमः' 'एतदो वा' स्थाने विधीयमानोऽशादेशः। **'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ'**[3] इति सूत्रेण सर्वानुदात्तो भवति। 'एभ्यः' इति अन्वादेशे रूपं द्रष्टव्यम्। सर्वथा स्वरराहित्यात्। **'भ्यस्'** तु सुप्त्वादनुदात्तः। 'अशः' स्थाने एकारोऽपि अशोऽनुदात्तत्वादनुदात्त एव। एवम् **'एभ्यः'** इति सर्वानुदात्तं पदं भवति। अन्वादेशाभावे तु **'ऊडिदं पदाद्यप्'**[4] इति सूत्रेण 'भ्यसः' उदात्तत्वं लभ्येत। तत्तु न लभ्यम्। अन्वादेशेऽशोऽनुदात्तत्वविधानात्। तस्मात् 'एभ्यः' इति सर्वानुदात्तमेव पदं भवितुमर्हति। तथा च सति तत्स्थाने **'वो अस्तु'** इति पाठभेदोऽपि सर्वानुदात्त एव न्याय्यः।

एवं संक्षिप्तेनानेन शोधपत्त्रेण निश्चितमिदं सिध्यति यत् सर्वत्र वैदिकेषु शब्देषु स्वरपरिज्ञानमवश्यकार्यं भवति। स्वरभेदज्ञानाच्चार्थभेदज्ञानमपि सुतरामर्थादापद्यते। ये तु स्वरं सर्वथैव न विदुः, ते कथङ्कारं वैदिकं शब्दब्रह्मस्वरूपं वेदितुमलङ्कर्मीणाः सम्पत्स्यन्त इति। त एव प्रष्टव्या इत्यञ्चितमवञ्चितं च निश्चप्रचं वचः प्रोच्य विरमामि।

● ● ●

---

१. शौनकीयाथर्व० ६।२७।    २. पा० ८।१।१८।
३. पा० २।४।३२।    ४. पा० ६।१।७६।

# प्रातिशाख्यशिक्षाप्रोक्तानां पाणिन्यादित्रिमुन्यभिमतानां चोदात्तादि-स्वरलक्षणानां समन्वयः, काशिकाकार-सिद्धान्तकौमुदीकारादिमतनिराकरणं च

आचार्यश्रीशिवराजकौण्डिन्न्यायनः

❀ ❀ ❀

यस्य स्वरस्योच्चारणं श्वासनलिकामुखपार्श्वयोः स्थितयोः तन्त्र्योर्निग्रहादायामो दैर्घ्यापरपर्यायो भवति, स्वरजनकवायोः प्रभूततया वेगेन निस्सरणेन च कण्ठस्याऽऽपेक्षिकतयाऽधिकतरं शुष्कीकरणात् स्वरोपादानध्वने रूक्षता च भवति, श्वासनलिकाविवरं च आयतस्वरतन्त्र्यवरोधेन सुष्ठु आ समन्तादणु भवति, स तीक्ष्णः स्वर उदात्त इत्युच्यत इति प्राचीनानां वैदिकानां विदुषां कथनमस्ति[1]। तन्त्र्योर्निग्रहमूलक आयाम इति उपलक्षणमेव, सर्वेषामेवोच्चारणावयवानां निग्रहेण दार्ढ्यं करणीयमिति विज्ञायते। उदात्तनिर्वचनं च **"अन्वर्थग्रहणं विज्ञास्यते......ऊर्ध्वमात्तमिति चाऽत उदात्तम्[2]"** इति मुनिना पतञ्जलिना प्रदर्शितम्। उदात्त उच्च इति च पर्यायवचनौ शब्दौ।

अत्र च विचारसौकर्याय ऋग्वेदप्रातिशाख्याद्युक्तानि उदात्तादिलक्षणान्युपस्थाप्यन्ते। तत्र ऋग्वेदप्रातिशाख्ये—

**उदात्तश्चानुदात्तश्च स्वरितश्च त्रयः स्वराः।**
**आयाम-विश्रम्भाक्षेपैस्त उच्यन्तेऽक्षराश्रयाः[3]॥**

इति उदात्तादिलक्षणानि सूचितानि।

शुक्लयजुर्वेदप्रातिशाख्येऽपि **'आयाम-मार्दवाऽभिघाताः, उच्चनीचविशेषः[4]'** इति, **'उच्चैरुदात्तः, नीचैरनुदात्तः, उभयवान् स्वरितः[5]'** इति च उदात्तादिलक्षणानि उक्तानि।

तैत्तिरीयप्रातिशाख्येऽपि—'उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः[6]' इति, **'आयामो दारुण्यमणुता खस्येत्युच्चैःकराणि शब्दस्य अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकराणि'[7]** इति चोदात्तादिलक्षणानि स्फुटतरं प्रतिपादितानि।

---

१. ऋग्वेदप्रातिशाख्यम्। २. पा० व्या० मा० १।२।३२।
३. ऋ० प्रा० ३।१। ४. तदेव-१।३१,३२। ५. तदेव १।१०८-११०।
६. तदेव-१।३८-४०। ७. तदेव-२२।९-१०।

शौनकीयचतुरध्यायिकाख्येऽथर्ववेदप्रातिशाख्ये च—**'समानयमेऽक्षरमुच्चैरुदात्तं नीचैरनुदात्तमाक्षिप्तं स्वरितम्'**[१] इत्युक्तम् ।

आपिशलिशिक्षासूत्रे च—'यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति, तदा गात्रस्य विग्रहः कण्ठबिलस्य चाऽणुत्वं स्वरस्य च वायोस्तीव्रगतित्वाद् रौक्ष्यं भवति, तमुदात्तमाचक्षते, यदा तु मन्दः प्रयत्नो भवति, तदा गात्रस्य स्रंसनं कण्ठबिलस्य महत्त्वं स्वरस्य च वायोर्मन्दगतित्वात् स्निग्धता भवति, तमनुदात्तमाचक्षते, उदात्तानुदात्त-स्वरसन्निपातात् स्वरित इति'[२] इति उदात्तादिलक्षणानि स्फुटतमं प्रतिपादितानि ।

शैशिरीयशिक्षायां च—

**'नीचैः स्वरोऽनुदात्तः स्यादुच्चैश्चोदात्त उच्यते ।**
**स्वरितं तत्समाहारस्तदैक्यं प्रचयः स्मृतः'**[३] ॥ इति ।

उदात्तलक्षणे उच्चैस्त्वं श्रुतिगतत्वेनैवोक्तम् । एवमेव शौनकशिक्षायामपि एतेनैव श्लोकेन प्रतिपादितम्[४] ।

वर्णरत्नप्रदीपिकायां शिक्षायां च—

**वर्णेषूच्चार्यमाणेषु विकाराः स्युस्त्रयस्तनोः ।**
**आयाम-मार्दवौ चोभौ ( आयाममार्दवे चोभे ? ) तृतीयश्चाऽभिघातकः ।**
**गात्रस्योच्च(र्ध्वं ?) मधस्तिर्यग्गमनं स्याद् यतः क्रमात् ।**
**तच्चोदात्तेऽनुदात्ते च स्वरिते च प्रकीर्तितम् ॥'**[५]

इति उदात्ताद्युपलक्षणानि प्रोक्तानि ।

कौहलीयशिक्षायां च—

**'उच्चैरुच्चार्यते यस्तु स उदात्त उदाहृतः ।**
**आयामो दृढता रौक्ष्यं गात्रेऽङ्गेषु तथा गले ॥**
**उच्चत्वकारकानेतानाहुः प्राज्ञा विशेषतः ।**
**नीचैरुच्चार्यते यस्तु सोऽनुदात्तोऽभिधीयते ॥**
**प्रसृता (प्रसृतिः ? श्लथता ?) मृदुता स्थौल्यं गात्रादेः कारकं विदुः ।**
**नीचत्वे स्वरितः प्रोक्तस्तयोः सन्धान इष्यते ॥**

---

१. ऋ० प्रा०—१।१४-१६ । २. आपि० शि० ८।२१,२२,२३ ।
३. शै० शि०—श्लो० ६० । ४. शौ० शि० श्लो० ५४ ।
५. वर्ण० शि० श्लो० ८८-८९ (शि० स०, पृ० १२४-२५) ।

तस्य तु स्वरितस्याद्यमर्धमुच्चैस्तरां विदुः।
शेषस्यार्धस्य नीचत्वं किञ्चित्स्वाद् भृशमिष्यते॥
केचिदस्यादिमं भागमुदात्तसदृशं विदुः।
अनुदात्तसमः शेष एतावन्तो द्विधा स्मृताः'[1]॥

इति उदात्तादिविवरणं कृतम्।

सर्वसम्मतशिक्षायामपि—

उदात्तादिस्वराधारवर्णानामिह संस्थितेः।
प्रोच्यते स्वरसंस्थानमज्ञानां ज्ञानसिद्धये॥
यदेतद् देहदीर्घत्वमङ्गानां दृढता च या।
कण्ठाकाशस्य कृशता निमित्तान्युच्चजन्मनि॥
ह्रस्वत्वं यच्च देहस्य त्वङ्गानां मृदुता च या।
कण्ठाकाशमहत्त्वं च नीचजन्मनि हेतवः॥
कारणं स्वरितोत्पत्तौ समाहारोऽनयोर्भवेत्[2]॥'

इति श्रुतिगतोच्चैस्त्वादिकमेवोदात्तादौ स्वीकृत्योदात्तादिविवरणं कृतम्।

पारिशिक्षायां च—

'यद् गात्रदैर्घ्यं दृढता च या ध्वनेस्तथाऽणुता कण्ठबिलस्य या च।
एतानि कुर्वन्ति च शब्दमुच्चैर्यद्ध्रस्वता या मृदुता स्वरस्य॥
या विस्तृता (तिः ?) कण्ठबिलस्य चैताः कराणि शब्दं निहतं च नित्यम्[3]॥'

इति शब्दगतोच्चतादिरूपमेव उदात्तत्वादिकमभिप्रेतम्।

व्यासशिक्षायामपि—

उदात्तोच्चारणे तस्य देहदैर्घ्यं भवेद् यतः।
उच्चारणेऽनुदात्तस्य देहस्य ह्रस्वता भवेत्॥
भवेत् तत्र समाहारः स्वरितश्चोच्चनीचयोः[4]॥

इत्येवोदात्ताद्युच्चारणोपलक्षणानि वर्णितानि।

न केवलं शिक्षका एवोदात्तादीनां श्रुतिगतोच्चैस्त्वादिवन्ति स्वरूपाणि आहुः, किन्तु वैयाकरणः पाणिनिमुनिरपि 'उच्चैरुदात्तो नीचैरनुदात्तः समाहारः स्वरितः[5]' इति उदात्तादीनां शिक्षकैः प्रतिपादितानि स्वरूपाण्येवानुवदति। पाणिनीयवचन-

---

१. कौ० शि० श्लो० ३–६।
२. सर्वस० शि० श्लो० ३८–४१।
३. पा० शि० सू० ८१–८२।
४. व्या० शि० सू० २८८-९०।
५. अष्टा० १।२।२९-३१।

व्याख्याने वार्त्तिककारभाष्यकारौ च—'उच्चनीचस्याऽनवस्थितत्वात् संज्ञाऽप्रसिद्धिः। इदमुच्चमनवस्थितपदार्थकम्। तदेव हि कञ्चित् प्रति उच्चैर्भवति, कञ्चित् प्रति नीचैः। एवं कञ्चित् कश्चिदधीयानमाह—'किमुच्चै रोरूयसेऽथ नीचैर्वर्तताम्' इति। तमेव तथाऽधीयानमपर आह—'किमन्तर्दन्तकेनाऽधीषे, उच्चैर्वर्तताम्' इति। एवमुच्चनीचमनवस्थितपदार्थकम्, तस्याऽनवस्थानात् संज्ञाया अप्रसिद्धिः। एवं तर्हि लक्षणं करिष्यते। आयामो दारुण्यमणुता खस्येत्युच्चैःकराणि शब्दस्य। आयामो गात्राणां निग्रहः। दारुण्यं स्वरस्य दारुणता रूक्षता। अणुता खस्य कण्ठस्य संवृतता। उच्चैःकराणि शब्दस्य। अथ नीचैःकराणि शब्दस्य। अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकराणि शब्दस्य। अन्ववसर्गो गात्राणां शिथिलता। मार्दवं स्वरस्य मृदुता स्निग्धता। उरुता खस्य महत्ता कण्ठस्य, इति नीचैःकराणि शब्दस्य। एतदप्यनैकान्तिकम्। यदल्पप्राणस्य सर्वोच्चैस्तन् महाप्राणस्य सर्वनीचैः। सिद्धं तु समानप्रक्रमवचनात्। सिद्धमेतत्। कथम्? समाने प्रक्रम इति वक्तव्यम्। कः पुनः प्रक्रमः। उरः कण्ठः शिरः इति'[1] इति शङ्कासमाधानपूर्वकम् उदात्तानुदात्तयोः प्रातिशाख्यशिक्षाकारैः प्रतिपादित एव स्वरूपे समर्थ्येते।

शब्दस्य उच्चैस्त्वं तारत्वं तीक्ष्णत्वं चेत्यनर्थान्तरमिति चोदाहृतशिक्षावचनेभ्यः स्वरितविशेषतीक्ष्णता-तारतम्यप्रतिपादकेभ्यः 'तीक्ष्णोऽभिनिहितः'[2] इत्यादिकेभ्यो वचनेभ्यश्च निश्चेतुं शक्यते। 'तीव्रार्थतरमुदात्तम्', 'अल्पीयोऽर्थतरमनुदात्तम्'[3] इति यास्कवचनमप्युदात्तानुदात्तयोस्तैक्ष्ण्याऽतैक्ष्ण्ये सूचयत् प्रतीयते।

ननु पाणिनीयव्याकरणभाष्यकारेणोदात्तत्वस्य शब्दगतोच्चैस्त्वरूपताया अनुदात्तत्वस्य शब्दगतनीचैस्त्वरूपतायाश्चानैकान्तिकत्वं प्रदर्श्य, तं पक्षं दूषयित्वा शब्द(वर्ण)स्थानगतोच्चैस्त्वनीचैस्त्वप्रयुक्ततायाः प्रतिपादनं कृतमिति स्वीकृत्य काशिकाकारेण 'ताल्वादिषु हि भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते, तत्र यः समाने स्थाने ऊर्ध्वभागनिष्पन्नोऽच्, स उदात्तसंज्ञो भवति'[4] इति। 'समाने स्थाने नीचभागे निष्पन्नोऽजनुदात्तः'[5] इति चोक्तम्। न्यास-पदमञ्जरीकाराभ्यामपि तदेव समर्थितम्। भाष्यप्रदीपकारेणापि 'एकस्मिंस्ताल्वादिके स्थान ऊर्ध्वाधरभागयुक्ते ऊर्ध्वभागेनोच्चार्यमाण उदात्तः'[6] इत्युक्तम्। वैयाकरणसिद्धान्तकौमुदीकारेण च 'ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात्'[7] इत्येवोक्तम्, काशिकाविवरण-

---

१. पा० व्या० मा० १।२।२९-३०। २. शु० य० प्रा० १।१२५।

३. निरुक्ते ४।४।८ (४।२५)।

४. काशिका—१।२।२९। ५. तदेव—१।२।३०।

६. प्रदीपः-१।२।१९-३०। ७. सि० कौ०—सञ्ज्ञाप्रकरणे।

पञ्जिकाकारेण शब्दशास्त्रसहकारपादपदमञ्जरीकारेण च **'(उच्चैस्त्वेन श्रुति-प्रकर्षो) यदि गृह्येत, उपांशुप्रयोगे उदात्तादिसंज्ञा न स्यादित्यव्याप्तिः'**[१] इत्युक्त्वा शब्द (श्रुति) गतस्योच्चैस्त्वस्य ग्रहणेऽनुपपत्तिः प्रदर्शिता, सैवाऽनुपपत्तिर्नागेशेन बृहति लघौ च शब्देन्दुशेखरे[२], वासुदेवदीक्षितादिभिर्बालमनोरमादौ[३] चानूदितेति कथं शब्द-(श्रुति)गतोच्चैस्त्वनीचैस्त्वयोरुदात्तत्वानुदात्तत्वयोः प्रतिपादकैर् ऋग्वेद-प्रातिशाख्य-तैत्तिरीयप्रातिशाख्याऽऽपिशलिशिक्षासूत्रादिवचनैः सह पाणिनीयव्याकरणभाष्यकार-वचनस्याविरोधः समानार्थकत्वं वा प्रतिज्ञायते ? इति केचिद् भणेयुः।

तत्रेदं वक्तव्यम्—पाणिनीयव्याकरणभाष्यकारवचनं प्रमाणं न वा ? बाढं **प्रमाणम्**। ऋग्वेदप्रातिशाख्य-तैत्तिरीयप्रातिशाख्यादिवचनं प्रमाणं न वा ? प्रमाणमेव। कथं तर्हि प्रमाणवचनयोर्विरोधः स्यात्, प्रमाण-प्रमाणाभासयोरेव हि विरोधः प्रतीयत इति चेत् ? नास्ति विरोधः, विषयविभागेनाऽविरोधस्याऽऽस्थेयत्वात्, तत्तत्प्राति-शाख्यविषयेषु चरणेषु तत्तत्प्रातिशाख्योक्तरूपता उदात्तत्वादेः, सामान्यतया वेदेषु लोके च पाणिनीयव्याकरणभाष्यकारोक्तरूपतेति विषयविभाग इत्यविरोध इति।

एवं तर्हि किन्नु पाणिनीयव्याकरणभाष्यकारोऽधिकाराधिकारविषय इव **'पार्षदकृतिरेषा तत्र भवताम्'**[४] इत्युक्त्वाऽस्मिन् विषयेऽपि व्यवस्थामप्रदर्श्य तैत्तिरीय-प्रातिशाख्यादिवचनेऽनैकान्तिकत्वं दर्शयित्वा तद् दूषयति ? अस्य प्रश्नस्य युक्तियुक्त-मुत्तरं न मां प्रतिभाति, त्वयापि अस्य प्रश्नस्योत्तरमवश्यमेव देयमिति चेत्, अत्रोच्यते—वार्त्तिककारेण भाष्यकारेण च प्रथमं सूत्रस्थयोरुच्चैर्नीचैःपदयोः शब्दस्य दूर-श्रवणीयत्वप्रयोजकपरिमाणाधिकरूपमुच्चत्वं दूराऽश्रवणीयत्वप्रयोजकपरिमाणाल्प्यरूपं नीचत्वं चोपादायानवस्थितार्थकत्वापत्तिरूपः सन्देहः प्रदर्शितः, लोके परिमाणाधिके(स्थूले) शब्देऽपि उच्चैस्त्वस्य परिमाणेनाल्पे (स्वाणौ) शब्देऽपि नीचैस्त्वस्य प्रसिद्धेः।

अयं च सन्देहः शब्दस्योच्चारणवैशिष्ट्यप्रयुक्तं तैक्ष्ण्यरूपमुच्चैस्त्वं मन्द्रत्वरूपं व्याख्यायाऽपाकरिष्यत इत्युक्तम्—**'एवं तर्हि लक्षणं करिष्यते'**[५] इत्यादिना। शब्दस्य (श्रुतेः) तीक्ष्णत्वरूपे उच्चैस्त्वे मन्द्रत्वरूपे नीचैस्त्वे च स्वीकृतेऽपि मनुष्याणामुरः-कण्ठशिरःप्रभृतीनामुच्चारणाङ्गानां नैकविधत्वान् नैकविधशक्तियुक्तत्वाच्च केनचित् तीक्ष्णत्वेन प्रयुज्यमानः स्वरो यादृशो भवति, अन्येन मन्द्रत्वेन प्रयुज्यमानस्स्वरोऽपि तादृशो भवति, तीक्ष्णत्वेन प्रयुज्यमानस्तु पूर्वोक्ततीक्ष्णस्वरापेक्षया तीक्ष्णतरो भवतीति

---

१. प० मं० १।२।२९। २. श० शे०-सञ्ज्ञाप्रकरणव्याख्याने।

३. सञ्ज्ञाप्रकरणव्याख्याने प्रतिसंस्कृतसिद्धान्तकौमुद्यादौ च।

४. पा० व्या० भा० 'एओङ्' 'ऐऔच्' इत्यत्र, १।१।४८। ५. तत्रैव।

पुनरपि शब्दगतस्योच्चैस्त्वस्य नीचैस्त्वस्य चानवस्थितार्थकत्वमित्यापत्तिरूपः सन्देहो भवत्येवेति। तथा चोक्तम्—**"एतदप्यनैकान्तिकम्, यदल्पप्राणस्य सर्वोच्चैस्तन् महाप्राणस्य सर्वनीचैः"**[1] इति। तस्य सन्देहस्य समाधानञ्च **'सिद्धं तु समानप्रक्रमवचनात्। सिद्धमेतत्। कथम्। समाने प्रक्रम इति वक्तव्यम्। कः पुनः प्रक्रमः। उरः कण्ठः शिर इति'**[2] इति। अस्य समाधानस्य च समाने प्रक्रमे उच्चैरुदात्तो नीचैरनुदात्तः समाहारः स्वरित इति व्याख्यातव्यमित्यर्थः।

एवञ्च सति उच्चारयितृपुरुषभेदमुपादाय यो दोष आशङ्कितः, स लक्षणे ऊच्चारयितृपुरुषाभेदस्योपादेयत्वस्य प्रतिपादनेन परिहृतो भवतीति भावः। उक्तं हि कथञ्चित् काशिकाविवरणपञ्जिकाकारेणाऽपि—**'तत् पुनः समानत्वं वक्त्रभिन्नत्वाद् वेदितव्यम्, न तु ताल्वादिस्थानस्याभिन्नत्वात्, अन्यथा तालव्यमेवापेक्ष्योदात्तः स्यात्, न तु कण्ठ्यादीन्, वक्तुरभेदात् तद्द्वारेण भिन्नानामपि ताल्वादीनां समानत्वेऽपि विज्ञायमान एष दोषो न भवति'**[3] इति।

नन्वयं चेदभिप्रायोऽभिष्यत् तर्हि **'सिद्धं तु समानपुरुषवचनात्'** इति स्फुटमवक्ष्यत्, न तु **'समानप्रक्रमवचनात्'** इति चेत्, सत्यम्, किन्तु प्राचामुक्तेरनुसरणेन तथा प्रयुक्तम्। तथा हि—**"समानयमेऽक्षरमुच्चैरुदात्तम्, नीचैरनुदात्तमाक्षिप्तं स्वरितम्"**[4] इत्युक्तिर्दृश्यते पाणिनीयव्याकरणभाष्यकारात् प्राचीनस्याऽऽचार्यशौनकस्य। यद्यपि समानयमसमानप्रक्रमशब्दयोरर्थौ पृथक्; तथापि शैलीसादृश्यमस्त्येव। युक्तैवाऽपि चेयमुक्तिः। यथा हि पुरुषभेदेऽपि न तद्भेदात् साक्षात् स्वरतैक्ष्ण्यादिभेदः, किन्तु तदीयोरःकण्ठशिरःप्रधानानामङ्गानामेव पुरुषे पुरुषे संस्थानादिविशेषतः पुरुषे पुरुषे स्वरतैक्ष्ण्यादिभेद इति पुरुषोरःकण्ठशिरःप्रधानानामङ्गानामेव पुरुषे पुरुषे स्वरतैक्ष्ण्यादिभेदस्य साक्षाज्जनकतेति तेषामेवाऽभेदमुपादाय समाधानं युक्ततरमिति भाति।

**'सिद्धं तु समानप्रक्रमवचनात्'** इत्येवमेवोक्तेऽपि महाप्राणाल्पप्राणपुरुषभेदमुपादाय सन्देह उपस्थापितः, समाधानं च पुरुषाभेदमुपादाय लक्षणस्य प्रवृत्तिं प्रदर्श्य कृतमिति च सन्देहोपस्थापनतत्समाधानशैल्याः परिशीलनेनाऽपि सुज्ञानमेव।

न च खलु **'उरः कण्ठः शिरः'** इति भाष्योक्तेस्ताल्वादिस्थानोपलक्षकता नागोजिभट्टप्रभृत्युक्तोचिता, तेषामुरःप्रभृतीनां स्वत एव स्वरविशेषनिष्पादकतायाः प्रसिद्धेः। तथा हि भरतनाट्यशास्त्रे—

---

१. पा० व्या० भा०–१।२।२९–३०। २. तत्रैव।
३. का० वि० प० १।१।२९। ४. शौ० च० १।१४-१६।

'शारीर्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु ।
उरसः शिरसः कण्ठात् स्वरः काकुः प्रवर्तते'[1] ॥ इति ।

एवमपि उदात्तत्वादीनामापेक्षिकत्वमेवार्थात् प्रतिपादितं भवतीति अनियतार्थकत्वमेव तेषां पर्यवसितमिति चेत्, इष्टापत्तेः । यथा व्याकरणादौ मात्राव्यवहार आपेक्षिकः[2], यथा च तन्त्रीस्वरसप्तकविवेकोऽप्यापेक्षिकः[3], तथैवायमुदात्तादिव्यवहारोऽपीति । आपेक्षिकत्वेऽपि 'समानपुरुषस्य समानशब्दपरिमाणके उच्चारणे तीक्ष्णः स्वर उदात्तो मन्द्रोऽनुदात्त उभयवान् स्वरितः' इति लक्षणानां सिद्धौ बाधकस्याऽभावात्।

न च उच्चैस्त्वादेः शब्द (श्रुति)-धर्मत्वे उपांशुप्रयोगे उदात्तत्वस्यासम्भवः, मानसजपादौ श्रुतिविशेषरूपाकारादिविभागस्येव तत्रापि तस्य सम्भवात् । उपांशुप्रयुक्तमन्द्रस्वारापेक्षयैव तीक्ष्णत्वस्य तत्राऽऽवश्यकात्, तादृशस्य तस्य तत्रापि सुतरां सम्भवाच्च ।

एवञ्च सति न प्रमाणभूतयोर्मुनिवचनयोर्विरोधस्याऽऽपत्तिः । न च **'समानप्रक्रमे उच्चैरजुदात्तो नीचैरनुदात्तः', 'समानयमेऽक्षरमुच्चैरुदात्तम्, नीचैरनुदात्तमाक्षिप्तं स्वरितम्'**[2] इत्यादिष्वार्षवचनेषु श्रुतं परित्यज्याऽश्रुतस्य **'समानस्थानस्योच्चैर्भागे उत्पन्नोऽनुदात्तो नीचैर्भागे उत्पन्नोऽनुदात्तः'** इत्यस्य कल्पनाया अन्यथानुपपत्तिशून्याया आवश्यकतेति सर्वमवदातम् । उच्चैस्त्वनीचैस्त्वयोः साक्षादज्विशेषणत्वं चोदाहृतप्रातिशाख्यशिक्षाव्याकरणादिवाक्येषु स्फुटम् । पाणिनीये **'उच्चैरुदात्तः'** इति सूत्रेऽपि अजित्यनुवर्तत इति तद्भाष्ये प्रतिपादितमस्तीति न विस्मर्तव्यम् । तैत्तिरीयप्रातिशाख्ये तु शब्दस्य (श्रुतेः) एव उच्चैस्त्वम्, नीचैस्त्वं च कण्ठरवेणैव प्रतिपादत मिति तत् स्फुटतरम् ।

इदमप्यत्राऽवधेयम्—यद्यपि काशिकाकार-काशिकाविवरणपञ्जिकाकारशब्दशास्त्रसहकारपादपपदमञ्जरीकार-प्रासादकारादिभिरपि पाणिनीयसूत्रेऽज्विशेषणत्वेन श्रुते उच्चैस्त्वनीचैस्त्वे स्थानपरतया हठाद् नीते, तथापि तैस्तेषां तादृशमपि व्याख्यानम् **'आयामो दारुण्यमणुता खस्येत्युच्चैःकराणि शब्दस्य, अन्ववसर्गो मार्दवमुरुता खस्येति नीचैःकराणि शब्दस्य'** इति वचनेन सहाऽपि समन्वितमेवेति स्वीकृतमिति तत्तद्व्याख्यानगतवाक्यशेषेभ्योऽवसीयते । यद्यप्येतावताऽपि तेषां सूत्रार्थे भाष्यार्थे च व्यामोह एव सूच्यते, तथापि प्रदीपकारोद्द्योतकारशब्दकौस्तुभ-वैयाकरणसिद्धान्तकौमुदीकारादिभिस्तु स्वकीयस्य व्याख्यानस्य **'आयामो दारुण्यम्'** इत्यादिना

---

१. ना० शा० १७।१०६ । २. पा० व्या० मा० १।१।७० ।
३. पा० शि० शि० स० स०, पृ० १००, १०६ ।

मुनिवचनेन सहाऽपमन्वितत्वमेव स्वीकृतं प्रतीयत इति, एतेषामस्मिन् विषये गाढतरो व्यामोहः प्रतीयते ।

एवञ्च वेदैकप्रवणानां प्रातिशाख्यशिक्षादिकाराणां वेदविदुषां पाणिनि-कात्यायन-पतञ्जलिमुनीनां च वचनमेवात्र उदात्तादिस्वरस्वरूपविषये सर्वथा ग्राह्यम्, वेदोच्चारण एव स्वराणां याथार्थ्येन प्रयोगे सातिशयजागरूकतायाः स्वाभाविकत्वेन तेषां तत्स्वरूपज्ञानस्य सुलभत्वात्, भाषायामपि तेषामेव समये स्वराणां प्रयोगस्य परम्पराया अविच्छिन्नत्वात्, न तु वेदनिरपेक्षकल्पस्य जैनस्य जयादित्यस्य तदनुयायिनां जिनेन्द्रबुद्धि-हरदत्तादीनां वा, नैव वाऽङ्गिनं विस्मृत्यैवैकमङ्गमेव संभृशतामर्वाचीनानां भट्टोजिदीक्षित-नागोजिभट्टप्रभृतीनामित्यस्माकं भाति। वेदवेदाङ्गविद्यास्वभियुक्ताः परीक्ष्यग्राहिणो विद्वांसः सम्यक् परीक्ष्यास्माकीनां व्याख्यां स्वीकुर्वन्तु निराकुर्वन्तु वा यथार्हमिति शम् ।

**सङ्केतविवरणम्**

पा० व्या० भा० = पाणिनीय-व्याकरण-भाष्यम् ।
श्लो० = श्लोकसङ्ख्या ।
शि० स० = शिक्षासंग्रहः ।
सू० = सूत्रसङ्ख्या ।
अष्टा० = अष्टाध्यायी ।
शु० य० प्रा० = शुक्लयजुर्वेदप्रातिशाख्यम् ।
शौ० च० = शौनकीयचतुरध्यायिका (अथर्ववेदप्रातिशाख्यम्) ।
पा० शि० शि० स० सं० = पाणिनीयशिक्षायाः शिक्षान्तरैः सह समीक्षा ।



# प्राच्यपाश्चात्यदृष्ट्या धर्मस्वरूपपर्यालोचनम्

डॉ० युगलकिशोरमिश्रः

आचार्योऽध्यक्षश्च–वेदविभागस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

❀ ❀ ❀

विश्वस्मिन् सृष्टौ मानवः सर्वाणि प्राणिजातान्याक्रम्य तिष्ठति[1]। आचार्यवर्यो यास्कः प्राणिषु मानवजातेः श्रैष्ठ्यं किम्मूलकमिति विवेचयन् मनुष्यपदनिर्वचनप्रसङ्गे वक्ति—'मत्वा कर्माणि सीव्यन्तीति'[2]। यस्मात्प्रकृतिप्रदत्तविवेकबुद्धिप्रयोगपूर्वकं कर्मानुष्ठानसामर्थ्यं धारयति, तस्मान्मनुष्य इति तात्पर्यार्थः। विद्वांसस्तु विवेकबुद्धेरन्तश्चेतनाविकासस्य चाधारभूतो धर्माख्य एव पदार्थ इति स्वीकुर्वन्ति। तेन विश्वसंस्कृतेर्जीवनदर्शनस्य च धर्मेण सह समस्ति कश्चन विशिष्टस्सम्बन्ध इति निश्चप्रचम्। तथा च सति कोऽयं धर्मो नाम ? किञ्च तल्लक्षणमिति विभिन्नसंस्कृतानुरागिणां विदुषां विचारकोटिमाटीकते।

प्रसिद्धः पाश्चात्त्यो विद्वान् जे० फ्रेज़रमहोदयो वर्णयति यद् धर्मः खलु सर्वाधिकविवादग्रस्तो विषयो वर्त्तते, यदर्थं काचन सर्वजनसमादृता परिभाषा प्रायशो नैव दातुं शक्या[3]। पाश्चात्यकोपग्रन्थेषु धर्मस्वरूपजिज्ञापयिषया इत्थं विवेचितं भवति—**'धर्मः खलु उच्चादृश्यनियामकशक्तौ। शक्तिषु वा विश्वासः, तस्या। तासां वा स्वीकारः, अथवा ताम्। ताः प्रति जाग्रतानुभूतेर्नामास्ति यया सह भावनाया नैतिकतायाश्च योगः। किञ्च धर्मपरिधौ उपासनाया अनुष्ठानानाञ्चापि परिगणनं भवति'**[4]।

---

१. मनुः—'भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः। बुद्धिमत्सु नराः श्रेष्ठाः'—(मनुस्मृतिः १।९६)।

२. निरुक्तम् ३।२।

३. 'There is probably no subject in the world about which opinions differ so much as the nature of religion and to frame a definition of it, which would satisfy everyone must obviously be Impossible.'

—(J. Frazer : The golden bough III ED. Vol. I, page 222)

४. Dharma : Belief, recognition of or an awakened sense of a higher unseen controlling power or powers, with the emotion and morality connection therewith-rites or worship.

अस्मिन्नेवालोके जे० फ्रेज़रमहोदयो धर्ममित्थं परिभाषयति—**'धर्मः मानवेतरोच्चशक्तीनां प्रसादने संराधने वा निहितः। याः (शक्तयः) प्रकृतिं मनुष्यजीवनञ्च सञ्चालयन्ति, नियमयन्ति च'**[1]।

भारतीयस्मृतिग्रन्थेषु धर्मविषये सामान्यतया ऋषिभिर्लक्षितं यत् —**'शिष्टाः यं क्रियमाणं (कार्यं) प्रशंसन्ति, उत वा यं शंसन्ति, स धर्मः, किञ्च यं विगर्हन्ति, उत वा अधर्मपदेन व्यपदिशन्ति, सोऽधर्म इति'**[2]।

धर्मवेत्ता भगवान्मनुः सन्दर्भेऽस्मिन् शिष्टजनसमादृतानि दश नैतिकतत्त्वानि धर्मत्वेन एवमुपदिशति—

**धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्**[3] ॥ इति।

परं काले व्यपगते सति युगप्रभावाद् यदा श्रीबौधायनाचार्यपरिलक्षिताः शिष्टजनाः[4] दुर्लभतां गतास्तदानीं तत्कालिकैराचार्यवृन्दैः पुनरपि कश्चन धर्मलक्षण-प्रयत्न आरचितः। अत्राचार्यपादस्य जैमिनेर्व्याख्यातुर्माधवस्य इमा पङ्क्तय ऐतिहासिकदृशा महत्त्वपूर्णाः—**'न ह्रीदानीन्तनाः शिष्टा मन्वादिवद्देशकालविप्रकृष्टं वेदं दिव्यज्ञानेन साक्षात्कर्तुं शक्नुवन्ति, येन शिष्टाचारो मूलवेदमनुमापयेदिति**[5]।'

---

१. A propitiation or concilation of powers superior to man, which are bel'eved to direct and control the course of nature and of human life. —The Golden Bough, 3rd ED. Vol I, P. 222.

२. (क) 'यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ॥
(विश्वामित्र, वी० प्र० ३१'१०)।

(ख)-'यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मो, यं गर्हन्ते सोऽधर्मः।
--(आप० ध० १।२०।७)

(ग)-विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥
—(मनुस्मृतिः—२।१)।

३. मनु० ६।९२।

४. शिष्टाः— शिष्टाः खलु विगतमत्सरा निरहङ्काराः कुम्भीधान्या अलोलुपा दम्भ-दर्प-लोभ-मोह-क्रोध-विवर्जिताः। धर्मेणाधिगतो येषां वेदः सपरिबृंहणः। शिष्टास्तदनुमानज्ञाः श्रुति-प्रत्यक्षहेतवः।'—(बौ० ध० १।१।५-६)।

५. जै० न्या० मा वि० १।३।५।

धर्मलक्षणरचनायाः पृष्ठभूमौ दार्शनिकैराचार्यैस्तथ्यमिदं भित्तिरूपेण स्थापितं यत् श्रुत्यपरपर्यायो वेदशब्दराशिः सृष्टिनियमनार्थं संविधानरूपेण निसर्गत एव भगवत्कृपया प्राप्तो वर्त्तते, अतश्च वेदशब्दराशिरेव धर्मलक्षणस्याधारो भवितुमर्हति।

एवं विचिन्त्यमानानां दार्शनिकाचार्यपादानां स्वीयाऽवधारणायां तानि पुराणस्मृतिवचनानि पोषकाण्युपोद्बलकानि चाभूवन्, येषु त्रैवर्णिकानां कृते वेदाध्ययनस्यानिवार्यव्यवस्था कृताऽऽसीत्। तेन हि वैशेषिकदर्शनाचार्यैर्धर्मस्य लक्षणम्—**'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'** इति[1] कृतम्। मीमांसकैस्तु **'चोदनालक्षणोऽर्थो-धर्मः[2]'** इति लक्षितम्। जैमिनिलक्षणमुपबृंहयता लौगाक्षिभास्कराचार्येणोक्तम्—**'वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः'** इति[3]।

समेषामेतेषां धर्मलक्षणानां पर्यालोचनेनेदं भारतीयदृशा सिद्धं भवति, यत्श्रुति-स्मृति-प्रतिपादितानां व्यवहाराणां कर्त्तव्यानां वाऽभिधानमेव धर्मः। धर्म एव तादृशी काचनालौकिकी शक्तिरस्ति, या समग्रं सृष्टिप्रपञ्चं धारयति। अत एव 'धारणाद्धर्मः' इति निरुक्तिमुपवर्णयन्त्याचार्याः।[4] यज्ञः, दानम्, तपः, कर्म, उपासना, ज्ञानमित्येतान्यङ्गानि धर्मस्य।

यदि वयं भारतीयधर्मस्याङ्गोपाङ्गानां विस्तारेऽवधानं दध्मस्तर्हीदं प्रमाणितं भवति, यत्सनातनधर्मस्यैव केनाप्यङ्गेनोपाङ्गेन वा जगतीतलस्यास्य तत्तदुपधर्माः, सम्प्रदायाः, पन्थानश्च संवर्धितास्सन्तिष्ठन्ते। अतश्चेदमपि कथनं युक्तिपूर्वकमेव स्याद्यत्सनातनधर्मद्रुमस्य शाखाः प्रशाखाश्छायारूपा वा भूमण्डलस्यास्य सर्वे धर्माः। यतो हि प्राचीना रोमन-कैथोलिकैञ्जिल (Angel) देवोपासना, पारसीधर्माऽनुयायिनां 'जोरोस्त्रियन्' (Zoroastrian) धर्मान्तर्गता समुद्राग्न्यादीनां देवोपासना च 'विभूत्युपासना' रूपेण भारतीयधर्मान्तर्गता एव। मोहम्मदीयानां क्रिश्चियनधर्मानुयायिनाञ्च निराकारा भक्तिसंवलिता उपासनाऽपि सनातनधर्मच्छायैव।

बौद्धानां तथागतपूजा, जैनधर्मावलम्बिनाञ्च 'ऋषभदेवोपासना', अवतारोपासनारूपेण सनातनधर्मे समाहितेति नात्र विचारलेशावसरः। किम्बहुना, जापानदेशस्य पित्र्युपासना भारतीयश्राद्धविधेरेकं रूपमेव। अतश्च समेषां मतमतान्तराणां वैदिके सनातनधर्म एव विरामस्वीकारे परस्परं धार्मिकविवादस्य प्रसङ्ग एव नोदेति।

**पाश्चात्यमते धर्मदेवतयोस्सम्बन्धः**

पाश्चात्यैर्विद्वद्भिः धर्मस्य पक्षद्वयं स्वीकृतम्। एकः सैद्धान्तिकः पक्षः, अपरश्च क्रियात्मकः। तत्र प्रथमे सैद्धान्तिकपक्षे मानवस्य दिव्यशक्तिविषयिणी सृष्टिधारकतत्त्वरूपिणी चेति द्वे मान्यते स्वीक्रियेते। क्रियात्मकपक्षे दिव्यशक्तिप्रसादनानुरूपा धार्मिकविधयः समागच्छन्ति।

---

१. वैशेषिकदर्शनम्–१।१। २. जै० सू० १।१।२।
३. अर्थसङ्ग्रहः–१।१। ४. ऋ० सं० ३।१७।१–सा० भा०।

अत्रेदमवधेयं यद् मैक्डानलमहोदयानां मते धर्मो विश्वस्यादृश्यशक्ति-विषयकविभिन्नविश्वासानामेकसंस्थारूपः। अन्यच्च—मानवः शरीरधारिजीवविशेषः, यो रूपनामभ्यामाबद्धः। अतः स (मानवः) अदृश्याव्यक्तनिराकाररूपां शक्तिमभि-लक्ष्य तां प्राप्तुं सर्वदा यतते। प्राप्तिकामः प्रयतमानश्च मानवस्तास्ताः शक्तीः स्वमिव रूपनामभ्यामाबध्नयन् तासां महिम्नि आख्यानानि कल्पयति[१]। प्रकृति-सान्निध्यमेवादिकालस्य मानवस्यातिसमीपस्थं वस्तु आसीदिति कृत्वा विभिन्नानां प्राकृतिकदृश्याणां प्रभावो मानवमस्तिष्के सहजरूपेणाभवत्। तत्रानेकानि दृश्यजातानि मानवं सौन्दर्यप्रकर्षेणाकर्षयन्ति स्म, तथानेकानि दारुणतयाऽभिभवन्ति स्म। अतश्चर्ग्वेद-कालिकैः कविभिः प्रकृतिसन्निधौ स्वीयानुभवमूलको धार्मिकः सौन्दर्यबोधः प्रकटी-कृतः[२]। मैक्डानलमहोदयानां मते ऋग्वेदीयैः कविभिः प्राकृतिकशक्तेः पृष्ठभूमावदृश्यतया कार्यसञ्चालनं कुर्वतीनां चेतनसत्तानां परिकल्पना कृता, या 'देवता' इति पदेन तत्र तत्र प्रशंसिता भवति[३]।

**पाश्चात्यानां धार्मिको विकासवादः**

पाश्चात्यमनोषिभिर्धार्मिकविकासवादक्रमे विचारस्यास्य स्थापना कृता यत्सर्वतः प्रथमं ऋग्वेदीयो धर्मो बहुदेववादी वर्तते। यतो हि तत्र देवतानां विपुला संख्या वर्त्तते। शनैः शनैर् ऋषिभिरिदं ज्ञातं यद्देवानामनेकत्वं नोचितम्। प्राकृतिकपदार्थ-घटनयोर्मध्ये कश्चनैकः सम्बन्धो नूनं भवत्येवेति स्वीयेनान्तः प्रज्ञानेन ऋषिभिः (कविभिर्वा) स्थिरीकृतम्[४]। ततश्चाधिष्ठातृदेवशक्तिः सङ्गृह्यैकस्या महाशक्तेः परि-

१. Macdonnel—Myths have their sources in the attempt of the human mind in a primitive and unscientific age, to explain the various forces and phenomenon of nature with much more is confronted. —(Vedic Mythology, p. 1)

२. Mythology is rather a poetic device which the Rgvedic seers had invented to express their religio-ascethetic Consciousness in the presence of nature.
— (Treatment of nature in the Rgveda p. 90)

३. (a) See : Origin and growth of Religion, p. 220-21.
(b) H. D. Griswold : The Religion of the Rgveda (p. 252). "The 'devas' gods rose out of nature. They were in general defied natural phenomenon or to put in another way they are the product of the religions instinct working on the raw material of natural phenomenon."

४. A. B. Keith : The Religion and Philosophy of the Veda and Upanishads, Vol. I, p. 106. "The tendency of syncretism is also increased by the close connection of the elements in nature."

कल्पना समुद्भूता। तदेतस्यामेकत्वस्थितिसिद्धौ पाश्चात्यविचारकाः पर्यायत्रयं विमृशन्ति। तत्र प्रथमे पर्याये देवताद्वन्द्वस्य परिकल्पना समागच्छति, यस्मिन्— 'इन्द्रवायू', 'इन्द्राग्नी', 'इन्द्रावरुणौ', 'अग्निषोमौ' इत्यादीनां देवताद्वन्द्वानां समावेशो भवति। तदनन्तरं कविभिरिदं विचारितं यत् कापि देवता स्तुतिविधानेन वञ्चिता न स्यात्, तर्हि द्वितीयपर्यायस्य स्थापनमभूद्यत्र विश्वेषां देवानां सम्मिलित-(विश्वेदेव-) रूपेण स्तुतिप्रयोगो दृश्यते[१]।

तृतीये पर्याये स्तुतेस्तत्स्वरूपमागच्छति, यत्र स्तोता (ऋषिः) एकमेवाराध्य-देवं सर्वगुणसम्पन्नं सर्वशक्तिमन्तञ्चानुध्यायन्स्तौति। मैक्समूलरेण अस्याः स्थितेः 'हीनोथीज्म' इति संज्ञा कृता वर्त्तते[२]।

**भारतीयः पक्षः—**

भारतीयाचार्याणां मते तु धार्मिकविकासवादस्यास्य न किमप्यौचित्यम्। भारतीयचिन्तकानां त्वेष सर्वमान्यः सिद्धान्तो वर्त्तते यत्सृष्टिप्रपञ्चमूले एकस्य परतत्त्वस्य सत्ता वर्त्तते, यन्मायोपहितचैतन्यतया निरतिशयेनैश्वर्येण युक्तं सत् 'ईश्वरः' इत्याख्यां भजते। राद्धान्तमिममुररीकृत्य आचार्यो वदति—**'माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते[३]'** । अत्र श्रुतेरप्युद्घोषः—

**इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गुरुत्मान्।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः[४] ॥**

वाजसनेयिनश्चामनन्ति—'तद् यद् इदमाहुरमुं यजामुं यजेत्येकैकं देवम्। एतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः'[५] इति शम्।

---

१. A. A. Macdonnel : A History of Sanskrit Literature–P. 106. "It is a Factitious sacrificial group meant to embrace all, the whole pantheon, in order that none should be excluded in invocations intended to be addressed to all."

२. F. Maxmuller : The Vedas–p. 85.

३. (क) निरुक्तम् ७।१।
(ख) 'तासां माहाभाग्यादेकैकस्यापि बहूनि नामधेयानि भवन्ति। अपि वा कर्मपृथक्त्वात्' (निरुक्तम्-- ७।५)।

४. ऋ० सं० १।१६४।४६। ५. बृ० उ० १।४।६।

• • •

# दर्शननिदर्शनम्

**डॉ० रामयत्नशुक्लः**

**आचार्योऽध्यक्षश्च, व्याकरणविभागस्य, सम्पूर्णानन्दसंस्कृतविश्वविद्यालये**

❀ ❀ ❀

दृश्यतेऽनेनेति व्युत्पत्तौ 'दृश्'–धातोः करणेऽर्थे ल्युटि सति सिद्ध्यति दर्शन-पदम्। किं तत्तत्त्वम् ? यद् दृश्धात्वर्थे कर्मीभूतमिति जिज्ञासायां यत्तत्वं लौकिकेन चक्षुरादिप्रमाणेन न ज्ञायते, तदेव तत्त्वं तथाविधत्वेन स्वीक्रियते। चक्षुरादिप्रमाणैः स एव पदार्थो ज्ञायते, यो हि तैः सम्बद्धः, न त्वसम्बद्धः। तथा चोक्तम्—**'सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिना'** इति। तच्च तत्त्वम् आत्मतत्त्वं नाम। आत्मना सह चक्षुरादिसम्बन्धो नास्तीति। तदेवम्भूतस्यात्मतत्त्वस्य निरूपणायैव दर्शनमुपयुज्यते।

यद्यपि आत्मसामान्यं पांसुलपादस्यापि सम्मतम्, यतो हि तत्र कस्यापि विमतिर्नास्ति। भाष्यकृता भगवताऽप्येतदुक्तम्—**'आत्मनो निराकर्तुमशक्यत्वाद्, यो हि निराकर्ता, तस्यैवात्मत्वात्'**।

अयमाशयः—निराकर्तृत्वं नाम निराकरणक्रियाधारत्वम्। आश्रयं विना क्रियाया अवस्थितेरेवाभावाद् निराकर्ता अवश्यं मन्तव्यो भवति, स एव च कर्ता आत्मा।

लोके हि आत्मनिमित्ता एव सर्वा अपि क्रियाः, आत्मसामान्याप्रतीतौ सर्व-व्यवहारोच्छेदापत्तेः। तस्माद् आत्मसामान्यं सुप्रतीतम्। तद्विशेष एव विप्रति-पत्तयः।

केचित् पुत्रे मृते आत्मानं मृतं मन्यन्ते, गृहादिषु नष्टेषु आत्मानमपि नष्टं मन्यन्ते। इमे स्थूलदर्शिनो गृहपुत्रादिष्वेवात्मबुद्धिं प्रतियन्ति। अत एव—**'आत्मा वै जायते पुत्रः'** इत्यस्य प्रामाण्यमप्युपगच्छन्ति।

अन्ये तु ममेदं गृहम्, ममायं पुत्र इति भेदनिबन्धनव्यवहारदर्शनेन **'स्थूलोऽहम्', 'कृशोऽहम्'** इति देहसामानाधिकरण्येनानुभवबलाच्च देहस्यैवात्मत्वमुपगच्छन्ति। तथा चात्र श्रुतियुक्तयश्च तैः प्रदीयन्ते। इमे देहात्मवादिनश्चार्वाकाः। ये चारु वदन्ति, येषां चारुवाक्यं रुच्या लोक आददाति, ते हि चार्वाकाः। अत एवेषां मतं लोके आयतमिव विस्तृतमिव भवति। तस्मादेवेदं मतं 'लोकायत'-पदेनाऽपि दर्शने प्रसिद्धम्। इमे परलोकं नावगच्छन्ति। केवलं भौतिकं जीवनमेव वास्तविकं जीवनम्। देह-मात्रनिमित्ताः सर्वा अपि प्रवृत्तयः। अत एवैषामुक्तिरियं साधीयसी—

'यावज्जीवेत्सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥' इति ।

देहनाशानन्तरं न किमप्यात्मसम्बन्धितयावशिष्यते । तस्माद् यावच्छरीरधारणं सर्वोऽपि व्यवहारः ।

एतेषां मते नीतिकामशास्त्रानुसारेणार्थकामौ द्वावेव पुरुषार्थौ । पृथिवीजलतेजोवायवश्चत्वारि भूतानि । यथा विलक्षणान्नसम्पर्कवशाद् मादकशक्तेरुद्भवः, यथा वा हरिद्राचूर्णसम्पर्कवशाद् रक्तवर्णोत्पत्तिः, तथैव भूतानां विलक्षणसंयोगवशाच्चैतन्योत्पत्तिः । अत एव देहनाशाच्चैतन्यस्यापि नाशः । चैतन्यविशिष्टो देह एव आत्मा एकं प्रत्यक्षमेव प्रमाणम् । देहभिन्नात्मनि प्रमाणाभावः । कामिनीपरिरम्भणजन्यसुखमेव मोक्षः, कण्टकादिजन्यदुःखमेव नरकः । लोकसिद्धराजा एव परमेश्वर इति चार्वाकमतसंक्षेपः ।

'अहं जिघ्रामि', 'अहं स्पृशामि', 'अहं काणः', 'अहं बधिरः', इत्यादिव्यवहारबलाद् इन्द्रियमेवात्मेति चार्वाकैकदेशिमतम् । तन्मते ममेदमिन्द्रियमिति भेदव्यवहारस्तु 'राहोः शिरः' इतिवदौपचारिकः ।

इतः परं **बौद्धः** प्रत्यवतिष्ठते—प्रत्यक्षस्यैकस्यैव प्रामाण्याभ्युपगमे पश्वादिप्रवृत्तिनिवृत्त्यनुपपत्तिः । तथा हि–गृहीतहरिततृणादिपुरुषविशेषमवलोक्य पशवः प्रवर्तन्ते, दण्डोद्यतकरपुरुषावलोकनेन च पलायन्ते । इष्टानिष्टहेतुज्ञानं विनैतन्न सम्भवति । अनुमानस्यापि प्रामाण्यव्यवस्थापनाय कैश्चिदुक्तम्—

रे रेऽनुमानं यदि न प्रमाणं चक्षुष्टवास्त्यत्र किमस्ति मानम् ।
भवादृशे दूरविदेशमागते चरन्तु वैधव्यव्रतं तवाङ्गनाः ॥

एवं रीत्याऽनुमानस्यापि प्रामाण्यं मन्तव्यमेव । अनेन चानुमानेन आत्मनो देहभिन्नत्वमपि साध्यते । तथा हि–आत्मा देहादिभिन्नः, ममायं देह इत्यादिभेदप्रतीतिविषयत्वादिति ।

किञ्च योऽहं बाल्ये पितरौ सोऽहं स्थाविरे प्रणप्तॄननुभवामि, इति प्रत्यभिज्ञानं जायते । नहि बाल्यस्थविरशरीरयोरस्ति मनागपि प्रत्यभिज्ञानगन्धः । 'योऽहं पश्यामि', 'सोहं स्पृशामि' इत्यादाविन्द्रियभेदेऽपि प्रत्यभिज्ञादर्शनेन देहेन्द्रियाद्यतिरिक्त आत्मा । किञ्च शरीरस्यैवात्मत्वे जडचेतनविभागो विलीनतां गच्छेत् । यैस्तत्त्वैः शरीरं निर्मीयते, तैरेव तत्त्वैस्तव मते शरीरमपि निर्मीयते । तस्यैवात्मत्वे द्वयोः को भेदः स्यादिति अन्ततोगत्वा ज्ञानस्यैव भेदकता न्याय्या । तस्माज्ज्ञानमेवात्मा, तच्च विज्ञानम् । प्रतिक्षणं नवनवायमानं कदाचिद् घट इति, कदाचित् पट इति । अतः क्षणिकम् । इदं क्षणिकं विज्ञानं धारावाहिकरूपेण तिष्ठति । एतावता चैतन्यविलोपो न जायते ।

इयमेव प्रवाहनित्यता नाम। तदेवं रीत्या विज्ञानात्मा प्रतिक्षणं विपरिणममानोऽपि प्रवाहनित्य एव।

**जैनास्त्वित्थं ब्रुवते—यदि आत्मनः स्थिरत्वं स्वीक्रियये, तदा ऐहिकपारलौकिको-**भयविधफलसाधनानां वैयर्थ्यापत्तिः। यद्यात्मा क्षणिकः, तदा धर्मकाले भिन्न आत्मा, भोगकालेऽन्यः। तदेतदसमीचीनम्। यो हि कर्ता, स एव भोक्तेति नियमः। योऽहं सोऽहमिति निर्बाधप्रतीतिरप्यात्मनः स्थिरत्वं प्रत्याययति। योऽहं चक्षुर्भ्यामपश्यम्, सोऽहं हस्तेन स्पृशामि। योऽहं स्वप्नमद्राक्षम्, सोऽहं जागर्मि—इत्यादिप्रत्यभिज्ञाभिः स्वप्नजागराद्यवस्थायामेकः स्थायी कश्चिदात्मेति सुदृढं भवति।

यदप्युच्यते—यथा मधुराप्लुतायां भूमौ उप्तानाम् आम्रबीजानां माधुर्यमङ्कुर-काण्डस्कन्धशाखापल्लवादिद्वारा फलपर्यन्तमनुगच्छति, तथैव यस्मिन् विज्ञानसन्ताने कर्मवासने समाहिते, तथैव फलेनापि भवितव्यम्।

इदमपि नोचितं भाति, दृष्टान्ते बीजस्य निरन्वयनाशो न जायते; किन्तु बीजस्यैव सूक्ष्मावयवा भिन्नभिन्नभावनाभिः भाविताः फलाद्यात्मना विकसिता भवन्ति, किन्तु क्षणिकविज्ञानवादिमते पिपीलिकानां भिन्ना काचिदन्या पङ्क्तिर्न विद्यते, तथैव सर्वत्रापि सन्तानिनो भिन्नः सन्तानो नास्ति।

किञ्च स्थायित्वाभावेऽकृताभ्यागमकृतविप्रणाशप्रसङ्गोऽपि समायाति। यश्च सर्वथा औचितीं नावहति। तस्मादात्मनः स्थिरत्वमभ्युपेयम्।

किन्तु अयमात्मा कदाचिद् दुःखी, कदाचित्सुखीत्येवंरूपेणाऽनित्योऽपि। अहमा-कारवृत्तेरेकरूपतया नित्यतापि। अर्थाद् द्रव्यरूपेण नित्यः, अवस्था-(पर्याय) रूपेणा-नित्योऽपि। एतन्मते अनादिरेकः परमात्मा न स्वीक्रियते। तप आदिभिरज्ञाननाशे यस्यात्मनोऽशेषज्ञानं जायते, स सर्वज्ञः कथ्यते। स च क्रमशोऽनेकः। तैः सर्वज्ञैर्निर्मिता आगमा एव शास्त्रम्। आत्मा च देहपरिमितः बन्धकाले लोष्ठबद्धतुम्बिकावदूर्ध्व-मधश्च गच्छति।

**वैशेषिकाश्चेत्थं** ब्रुवते—'स्थिरमन्यत्, अस्थिरमन्यत्, नित्यमन्यत्, अनित्य-मन्यत्, तस्मादेकरूपतया आत्मा नित्यः स्थिरश्च। इच्छादयस्तस्य धर्मा अनित्याः, प्रतिक्षणं नवनवायमानाः। तेषामनित्यत्वेऽपि धर्मिणो आत्मनो नानित्यत्वम्। यथा पीतरागेण रक्तं वस्त्रं पीतम्, रक्तरागेण रक्तं रक्तम्। पुनश्च प्रक्षालनेन शुक्लं जायते। इदं दर्शनं देहादिभिन्नमात्मानं मन्यते।

स चात्मा प्रतिशरीरं भिन्नो विभुश्च। परमात्मापि तन्मते स्वीक्रियते। तं विना जगन्निर्माणम्, कर्मफलव्यवस्था च नोपपद्येत। स परमात्मा नित्यज्ञानेच्छादिमान् एकः। जीवपरमात्मभेदः शाश्वतिकः। तत्त्वज्ञाने एकविंशतिदुःखोच्छेद एव मुक्तिः।

**साङ्ख्यास्तु** आत्मा व्यापकोऽसङ्गोऽनन्तश्चेतनश्च। स च ज्ञानादिगुणैः कर्तृत्वादिदोषैश्च रहितः, प्रकृतिरेव पुरुषभोगार्थं तस्यापवर्गसिद्धयर्थं च महदादि-

प्रपञ्चाकारेण विपरिणमते। प्रकृतिप्राकृततत्त्वधर्माणां मिथोविवेकाभावेनात्मनि 'अयः पिण्ड' इव कर्तृत्वादिधर्माणां भानमविद्यया जायते। वस्तुतः स आत्मा पुष्कर-पलाशवन्निर्लेपः साङ्ख्यविवेकेन स्वरूपावस्थानमेव मोक्षः जन्ममरणमोक्षादि-व्यवस्थार्थं प्रतिशरीरं भिन्नः।

योगमते, साङ्ख्यमते च या प्रक्रिया प्रायः, सा सर्वाऽपि स्वीक्रियते—जीवश्चा-विद्यादिपञ्चक्लेशयुक्तो यमनियमादिभिरष्टाङ्गयोगैश्चित्तनिरोधेन सत्त्वपुरुषान्यताख्याति-पूर्वकं द्रष्टुः स्वरूपावस्थानमेव मोक्षः। यद्यपि साङ्ख्यमते प्रायः परमेश्वरो नाङ्गी-कृतः, तथापि प्रकृतिनियमनाय योगिपुरुषाभीष्टसिद्ध्यर्थं योगमते स स्वीक्रियते। स च क्लेशकर्मादिरहितः।

**पूर्वमीमांसक**मते कर्मफलासङ्गी आत्मा चेतनाचेनश्च। **उत्तरमीमांसका**नां मते तु नानाभेदाः, यतो हि तत्त्वान्वेषिणां तत्र प्रवृत्तेः। केचन द्वैतवादिनः, केचिद् द्वैताद्वैतवादिनः, अन्ये शुद्धाद्वैतवादिनः, अपरे विशिष्टाद्वैतवादिनः, केचन अद्वैत-वादिनश्च। केचन शास्त्राणामद्वैत एव तात्पर्यं वर्णयन्ति। अद्वैतपराणां गौणार्थकत्व-मिति—अद्वैतवादिनस्तु द्वैतपराणां शब्दानां गौणार्थकत्वमेव मन्यन्ते। किन्तु शास्त्रत्वं नाम अनधिगतार्थज्ञापकत्वम्। यदि लोकसिद्धमेव द्वैतं शास्त्रं प्रतिपादयति, तर्हि अनधिगतार्थगन्तृत्वरूपं शास्त्रत्वमेव न स्यात्, तस्माद् लोकाप्रसिद्धाद्वैतपराण्येव शास्त्राणीति मन्तव्यम्।

अतः समस्तश्रुतिवाक्यानामद्वितीये ब्रह्मण्येव तात्पर्यमवसितम्। इम आचार्याः शास्त्रमात्रविश्वासाः। अत एव **'एकमेवाद्वितीयं ब्रह्म'**[1] इत्यादिश्रुतिवाक्यानां सार्थक्यम्। एकमिति अद्वितीयमिति एवेति पदत्रयद्वारा भेदत्रयनिवारणेनाद्वैतमेव प्रतिपाद्यं भवति। तथा चोक्तं पञ्चदश्याम्—

> **वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादितः।**
> **वृक्षान्तरात् सजातीयो विजातीयः शिलादितः॥**
> **तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते।**
> **ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात्**[2]॥ इति।

अयञ्च सिद्धान्तः श्रीमद्भगवत्पादशङ्कराचार्यसम्मतः। अन्येषां सिद्धान्तानां श्रुतियुक्तिविरोधेन स्वीकार्यता नोचिता। तन्निरूपण एव गतार्थता भविष्यति।

एतन्मते वस्तुत एकमेव तत्त्वम्, तच्च ब्रह्मरूपम्। जगत्सर्गसमये माया-साचिव्यमादाय **'एकोऽहं बहु स्याम'** इति सङ्कल्पनया नानारूपतामुपगच्छति। एतेषां मते—

---

१ छा० उ० ६।२।१। २. पञ्चदशी।

**जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा ।**
**अविद्या तच्चितो योगः षडस्माकमनादयः ॥**

इतीमे षट् पदार्था अनादयो भवन्ति, एतेषु पञ्च अनादित्वे सति सान्ताः, ब्रह्म त्वनन्तमिति । तदेव शुद्धं ब्रह्म मलिनसत्त्वप्रधानाविद्योपाधिवशाद् नाना भवति । तथा चोक्तम्—**'अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा'** इति ।

अविद्याया मालिन्येन त्रिगुणात्मकत्वेन चाविद्यावच्छिन्नचैतन्यमपि तथा भवति । अस्या अविद्याया नानात्वेन तदवच्छिन्नं चैतन्यमपि नाना । एतस्मिन्मते अविद्याया व्यापकतया जीवोऽपि व्यापकः । अन्तःकरणावच्छिन्नं चैतन्यं जीव इत्यपि मतम् । अत्र मते जीवस्य प्रादेशिकत्वमपि । यथा च एकोऽपि चन्द्रो घटादिगतजल-भेदेन नाना, तथैवान्तःकरणोपाधिभेदेन जीवोऽपि नाना । तथा चोक्तम्—

**एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥** इति ।

यथा महाकाशस्यैकत्वेऽपि घटादिरूपोपाधिवशाद् घटाकाशादीनां नानात्वम्, घटादिनाशे तदाकाशं महाकाशं भवति, तथैवान्तःकरणोपाधिनाशे जीवचैतन्यमपि ब्रह्मरूपतामेति । जीवब्रह्मैक्यज्ञानञ्च श्रवणादिद्वारा भवति । वेदान्तवाक्यानां श्रवणा-दिना ऐक्यज्ञानेन जीवो ब्रह्म सम्पद्यते । ब्रह्म तु निरतिशयानन्दरूपम्, तदेव जीवरूप-मपि । इदानीं तस्यैव जीवस्य सुखरूपतां प्रतिपादयन् प्रस्तौमि ।

**आत्मतत्त्वविमर्शः**

लोके हि सर्वोऽपि जन्तुः सजातीयेनैव व्यवहर्त्तुमिच्छति, काकाः काकैः, वका वकैः । वकपङ्क्तेरवलोकनं प्राय आकाशे दृश्यत एव, एवमेव महिष्यो महिषीभिः, मनुष्या मनुष्यैः, समानशीलव्यसनास्तथाभूतैरेव व्यवहरन्ति, नातथाभूतैः । अत एव कोपि जीविकोपार्जनाय क्वचिदनुकूलवातावरणे नियुक्तो जीविकां चोपार्जयन् दूरदेशं गच्छति, तत्र गत्वा वनगतकोलभिल्लादिसम्पर्काद् उद्विग्नः स्वस्थानं प्रत्यावर्तमानो लोकैः पृष्टो 'न तत्र मनो रमते तत्रत्या मानवा दानवाः सर्वथा प्रतिकूला एवेति, तत्र नाहं गन्तुमीहे' इति ब्रूते । प्रयत्य चान्यत्र स्वजीविकासाधनं सम्पादयति । अनया रीत्या समस्तस्यापि जन्तोः साजात्य एव मनोऽभिलाषः, न तु वैजात्य इति समायाति ।

एवं दृष्टान्तोपस्थापनेनापरत्रापि दृष्टिर्दीयताम् । लौकिकानां खलु सुखाभिलाषः सर्वजनसिद्धः, न कोऽपि दुःखं कामयते—

**विपदः सन्तु नः शश्वत् तत्र तत्र जगद्गुरो ! ।**
**भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम् ॥**

इति कुन्त्या यद् दुःखं कामितम्, तद् उत्तरार्द्धेन भवतो दर्शनं यत् स्यादपुनर्भव-दर्शनमित्यनेनैव समाहितम्। विपत्तिसमागमवशाद् भगवतः स्मरणाभ्यासेन अपुनर्भव-दर्शनरूपो मोक्ष एव तत्र काम्यः, न तु विपत्तिः काम्यते। विपत्तेस्तु काम्यता कूपखानकन्यायेनैव समाहिता भवति। तस्मात् सर्वेषां सुखमेवेष्टं भवति, न तु दुःखम्।

यथा कश्चन पठति, कस्मै प्रयोजनाय? विद्यावगतये इति, विद्यावगतिः कस्मै प्रयोजनाय? विद्यावगतये इति, विद्यावगतिः कस्मै प्रयोजनायेति प्रश्ने उपाधिप्राप्तये, उपाधिप्राप्तिश्च कस्मै प्रयोजनायेति जिज्ञासिते, पदप्राप्तये, पदप्राप्तिश्च धनोपार्जनाय, धनोपार्जनं गृहादिनिर्माणाय, गृहादिनिर्माणश्च कस्मै प्रयोजनायेति प्रश्ने सुखाय, सुखञ्च कस्मै प्रयोजनायेत्यत्र न भवति प्रयोजनाकाङ्क्षा कस्यापि। यतो हि सुखमन्तिमं फलम्, इतरेच्छानधीनेच्छाविषयत्वात्। पर्यवसानतः सुखमेव लक्ष्यम्। उक्तदृष्टान्तेन सजातीय एवाभिलाषः स्नेह इति हेतोः सुखे जीवमात्रस्याभि-लाषः, स नूनं निश्चिनोति यत् सुखं जन्तुमात्रसजातीयम्। सर्व आत्मनः सुखसदृशा एवेत्यवश्यं मन्तव्यम्। अत एव तुलसीदासेनाप्युक्तम्—

**ईस्वर अंश जीव अविनासी।**
**चेतन अमल सहज सुखरासी**[1]॥ इति।

अत एवात्मनि परा प्रीतिः सर्वेषामपि सिद्धा, तथोक्तमपि पञ्चदश्याम्—

**इयमात्मा परानन्दः परप्रेमास्पदं यतः।**
**मानभूवं हि भूयासमिति प्रेमात्मनीक्ष्यते॥**

लोके पुत्रादौ अपि प्रेम दृश्यते; किन्तु यः पुत्रः पितरं प्रीणयति, स पुत्रः पितुः प्रियो भवति, यस्तु प्रतिकूलमाचरति, स पितुर्द्वेष्यो दृश्यते; किन्तु आत्मनि नैवं दृश्यते। आत्मनि कृमेरपि परमप्रेम दृश्यते। तथा चोक्तम्—

**प्रेमानुपाधिरसुखात्मनि नोपलब्धः स प्रत्यगात्मनि कृमेरपि नित्यसिद्धः।**
**प्रेयः श्रुतेरपि ततः सुखतानुमानं नैयायिकोऽपि न दृगात्मनि निह्नवीत॥**

इति श्रुत्यापि आत्मनः सुखरूपता प्रतिपादिता।

तदेतच्छ्रुत्युक्तयुक्तिभिरात्मनः सुखरूपता सिद्ध्यति। **'आनन्दाद्ध्येव खल्वि-मानि भूतानि जायन्ते'** इत्यादिश्रुतिर्ब्रह्मणोऽपि आनन्दरूपतामावर्जयतीति जीवात्म-परमात्मनोः सुखात्मनोरेकरूपताऽपि समायाति; किन्तु जीवा नात्मानं तथाऽनुभवति। दुःखितमुपद्रुतं मलिनं चानुभवति। तत्कस्य हेतोः? अनादिनिबिडाविद्यावशादित्यवो-चाम। तथा चोक्तम्—

**घनच्छन्नदृष्टिः घनच्छन्नमर्कं यथा निष्प्रभं मन्यते चातिमूढः।**
**तथा मूढवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽयमात्मा॥** इति।

---

१. रामचरितमानस, उत्तरकाण्ड–११६।

यथा स्वच्छोऽपि सूर्यो घनच्छन्नदृष्ट्या निष्प्रभ इव मन्यते, तथैव नित्योपलब्धिस्वरूपो नित्यनिरतिशयसुखरूपो ह्यात्मा मोहवशात् तथा स्वस्य प्रतीतो न भवति। स जीवो नित्यनिरतिशयमेव सुखमिच्छति, स नैवमिच्छति यन्मम सुखं सातिशयं सान्तञ्च स्यादिति नित्यनिरतिशयमेव वाञ्छति। अतो जीवोऽपि तथैव मन्तव्यः।

यथा कोऽपि चक्रवर्ती राजा राजोचितसुखसाम्राज्यमनुभूय कदाचिद् विपन्नस्तदेवैश्वर्यं कामयते, नान्यत्, तथैव सुषुप्तौ विषयसम्पर्कराहित्यकालेऽनुपद्रुतः सन्नात्मा आत्मना सत्सम्पत्त्यवस्थायां स्वस्य नित्यनिरतिशयानन्दरूपतामनुभूय जागरणकाले पुनः विषयोपप्लवपरवशाद् बहिरेव स्थूलविषये तत्सुखमन्विच्छति। तत्रासम्भवं चानुभूय प्रत्यहं महान्तमसन्तोषं प्राप्नोति।

तथा ह्युक्तम्—

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति[1]॥**

इति श्रुतिरपि जीवस्य कर्मफलपराधीनतामाह।

यद्यपि परमात्मना जीवस्याभेदमेवैषा श्रुतिर्वास्तविकं ब्रूते। शरीररूपे वृक्षे तत्त्वद्वयं पक्षिरूपेण प्रदर्शितम्। एकस्य निरपेक्षता स्वातन्त्र्यम्, अन्यस्य सापेक्षता कर्मपारतन्त्र्यं च निर्धारितम्। निरपेक्षः -परमात्मा, सापेक्षो जीवः। सापेक्षोऽपि जीवः प्रकाममिच्छति यन्मम निरतिशयं सुखं स्यादिति। तच्च निरतिशयं सुखं सांसारिकपदार्थेषु यद्यपि नास्ति, तथापि स जीवस्तत्र द्रष्टुमिच्छति, यदि तत्र तस्यासम्भवः, कथं नाम तत्र प्राप्नुयात्? किन्त्वत्रेयं जिज्ञासा साधारणतयोदेति, यदि नाम निरतिशयं सुखं लौकिकेषु पदार्थेषु नास्ति, तर्हि क्व तत्प्रसिद्धमितीदं दृष्टान्तद्वारा विज्ञेयं भवति।

यथा सुगन्धितं तैलम् (इत्रादिकम्) कस्यचित् पुंसः पार्श्वे वर्तमानमस्ति, तस्य सुगन्धः सर्वत्रापि प्रसरति, तदभिलाषः सर्वस्य भवति, तथैव शरीररूपे वृक्षे परमात्मरूपं निरतिशयं सुखं विद्यमानम्, तत्सम्पर्कवशाद् जीवस्य सुखस्पृहा भवति, तच्च सुखं परमात्मरूपम्, तदेवात्मरूपम्; किन्तु अविद्यापरवान् तन्नानुभवति, ततो वियुज्यान्यथाऽऽत्मानमनुभवति। तत्राविद्यैव कारणम्। तस्याश्च शक्तिद्वयम्—आवरणशक्तिः, विक्षेपशक्तिश्च। प्रथमशक्त्या स्वरूपमावृतं भवति। विक्षेपशक्तिश्चान्यथात्वं परिकल्पयति। सा चेयमविद्या, अनादिः, निस्तत्त्वा, कार्यगम्या, सत्त्वासत्त्वाभ्यामनिर्वाच्या, ज्ञाननिवर्त्या च। तथा चोक्तम्—

**निस्तत्त्वा कार्यगम्यास्य शक्तिर्मायाग्निशक्तिवत्।**
**न हि शक्तिः क्वचित्कैश्चिद्दृश्यते कार्यतः पुरा॥** इति।

---

१. मु० उ० ३।१।१।

गीतायामपि **'सम्भवाम्यात्ममायया'**[1] इत्युक्तम्। अविद्याया वशगो जीव इत्यभिप्रायः पञ्चदश्यामुक्त एव—

**चिदानन्दपरब्रह्मप्रतिबिम्बसमन्विता ।**
**तमोरजःसत्त्वगुणाः प्रकृतिस्त्रिविधाऽपि सा ॥**
**तत्त्वशुद्ध्यशुद्धिभ्यां माया विद्ये च ते मते ।**
**मायाबिम्बो वशीकृत्य तां स्यात् सर्वज्ञ ईश्वरः ॥**
**अविद्यावशगस्त्वन्यः तद्वैचित्र्यादनेकधा ॥** इति ।

अविद्यावशगो जीवः स्वस्वरूपात्प्रच्युतो भूत्वा नानाक्लेशान् धत्ते। तस्य परमो लाभो यदा स परमात्मनि आत्मानं समर्पयति। समर्पणमिदं न तावद् घटे बदरी-समर्पणमिव, यतो ह्यत्र समर्पणे उभयोः पृथक् सत्ता। अत्र तु वस्तुतः पृथक् सत्ता नास्तीति वैलक्षण्यम्। यथा घटाकाशमहाकाशयोः पृथक् सत्ता नास्ति। अतो यथा तरङ्गाः समुद्रे समर्पिता भवन्ति, ततश्च न तयोः पृथक् सत्ता तदानीमुभयोर्दृश्यते।

भक्तिमार्गे भगवतः पृथक् सत्ताऽऽत्मसत्ता नास्तीति बुद्धिरेव भगवतः परमः सम्मानः। भेदबुद्धिरेव तस्यानादरः। या पत्नी स्वपतिं परित्यजति, किं सा कीर्तिं लब्धुं शक्नोति ? तथैव जीवः परमात्मन आत्मानं पृथग् मन्यते चेत्, तदा कः कलङ्को नामापर कलङ्कः ? अयमेवादरः श्रुत्या निषिध्यते क्रियासमभिहारेण। **"माहं ब्रह्म निराकुर्याम् मा मा ब्रह्म निराकरोदनिराकल्पमस्तु"** इति।

अद्य यावद् जीवात्मना परमात्मा निराकृतः, परमात्मना च जीवात्मा निरादृतः। तत एव जीवः कीटपतङ्गादियोनिषु भ्रमति। आमरणं नाप्नोति शान्तिम्। भगवत्कृपयैवेदं निराकरणं निवर्तते। न चैतत्सर्वसाधारणतया सुलभम्। तथा च श्रुतिरपि प्राह **'कश्चिद्द धीरः प्रत्यगात्मानमैच्छदावृत्तचक्षुरमृतत्वमिच्छन्'**[2] इति धियम् ईरयति प्रेरयति इति धीरः, बुद्ध्यादिकार्यकारणसङ्घातं स्वाधीनतां नयति। स्वयं तत्परतन्त्रतां नोपगच्छति स धीरो देहाभिमानेनैवैवं भवितुमुत्सहते।

**'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय**[3]**"** इति श्रुतिवाक्यं तु सोद्घोषं कथयति यत् स्वात्मज्ञानेनैव मृत्योः पारं यातुं शक्यत इति शम्।

---

१. श्रीमद्भगवद्गीता—४।६। २. श्वे० उ० ६।१०।
३. श्वे० उ० ३।८।



# मीमांसकोक्तशब्दतत्त्वसमीक्षा

एम्० आर्० श्रीकृष्णताताचार्यः,

पूर्वमीमांसाविभागाध्यक्षः, सं० सं० वि० वि०, वाराणसी

❀ ❀ ❀

शब्दतत्त्वविषये तत्तद्दार्शनिका बहुधा विवदन्ते। सर्वोऽपि शब्दोऽनित्य आकाशगुणश्चेति नैयायिका वैशेषिकाश्च सङ्गिरन्ते। शब्दो नित्यः, स च स्वतन्त्रद्रव्यभूतो न तु कस्यचिद्गुण इति भाट्टमीमांसकास्साङ्ख्याश्च। शब्दो द्रव्यम्, पञ्चभूतगुणो वेति विशिष्टाद्वैतिनः। शब्दः पौद्गलिक इति जैनाः।

तदत्र निबन्धे शब्दस्य कुमारिलभट्टपादाभिमतद्रव्यत्वविषये नैयायिकोक्तदूषणानामस्ति परिहारो न वेति विमृश्यते।

**नैयायिकोक्तशब्दलक्षणविमर्शः**

तत्र प्रथमं नैयायिकाः शब्दस्य कीदृशं लक्षणं ब्रुवन्तीति किञ्चित्प्रस्तूयते। महर्षिणा कणादेन स्वकीये वैशेषिकसूत्रे **'श्रोत्रग्रहणो योऽर्थः, स शब्दः'**[1] इति शब्दलक्षणमुक्तम्। अत्र लक्षणे ग्रहणशब्दो द्विधा व्याख्यातुं शक्यते—गृह्यतेऽनेनेति ग्रहणमिति करणव्युत्पत्त्या, अथ च गृह्यत इति ग्रहणमिति भावे ल्युडन्तव्युत्पत्त्या च। तत्र प्रथमव्युत्पत्तिपक्षे श्रोत्रम्, अर्थात् श्रवणेन्द्रियम्। ग्रहणमर्थात् प्रत्यक्षज्ञानकरणं यस्य स श्रोत्रग्रहण इति। द्वितीये श्रोत्रेण ग्रहणं प्रत्यक्षज्ञानं यस्य, स श्रोत्रग्रहण इति। सर्वथैव श्रोत्रेन्द्रियजन्यप्रत्यक्षज्ञानविषयो योऽर्थः, स शब्द इति लक्षणं पर्यवस्यति। शब्दो हि वर्णात्मको ध्वन्यात्मको वा स्यात्, श्रोत्रेण प्रत्यक्षीक्रियते। अतो लक्षणमिदं सङ्गच्छते चक्षुरादिना प्रत्यक्षीक्रियमाणे रूपादावतिव्याप्तिवारणाय लक्षणे श्रोत्रपदस्य निवेशः। येनेन्द्रियेण गुणो गृह्यते, तन्निष्ठा जातिस्तदभावश्च तदिन्द्रियेण गृह्यत इति न्यायेन शब्दगतायाः शब्दत्वजातेश्शब्दा भावस्य च श्रोत्रग्राह्यतया तत्र लक्षणस्यातिप्रसङ्गस्स्यादिति पश्चात्तनैर्नैयायिकैरर्थपदस्थाने गुणपदं सन्निवेश्य लक्षणमिदमन्यथा निरुक्तम्। यथा **'श्रोत्रग्राह्यो गुणः शब्दः'**[2] इति अन्नम्भट्टेनाभाणि। शब्दगतायां जातौ शब्दाभावे च श्रोत्रग्राह्यत्वस्य सत्त्वेऽपि गुणत्वस्याऽसत्त्वेन न तत्रातिव्याप्तिः। किन्त्वेवं रीत्या लक्षणपरिष्कारेऽप्यन्त्यशब्दस्य, तथा श्रोत्रदेशवक्तृदेशयोरन्तरालवर्ति-

---

१. वैशेषिकसूत्रम्–२।१।२६।

२. तर्कसङ्ग्रहदीपिका–पृ० २१७–चौखम्बा—१९६९।

शब्दानां च श्रोत्रग्राह्यत्वाभावेन तत्र लक्षणमिदमव्याप्तं भवतीति सप्तपदार्थीग्रन्थे[1] शिवादित्येन शब्दत्वजातिमत्वं शब्दस्य लक्षणमिति स्वाशयस्सूचितः ।

सूत्रकारेण तु शब्दलक्षणे गुणपदमनिवेश्याऽर्थपदमेव निवेशितम् । तथाकर्तुः कणादमहर्षेरयमाशयः प्रतिभाति यद् शब्दस्य लक्षणं तथा कार्यम्, यथा शब्दस्य गुणत्वाभावपक्षेऽपि तत्र लक्षणं सङ्गच्छेत । अस्ति हि शब्दस्य गुणत्वाभावपक्षोऽपि मीमांसकादीनां सुप्रसिद्धः ।

यच्च लक्षणे गुणपदानुक्तौ शब्दत्वजातौ शब्दाभावे च अतिव्याप्तेरुद्भावनं कृतम्, तन्नोचितम् । श्रोत्रग्राह्यशब्देन साक्षात् सदात्मकसम्बन्धेन श्रोत्रग्राह्यत्वाभिधानात् शब्द एव तादृशसंसर्गः, न तु शब्दत्वे शब्दाभावे वा । शब्दत्वे समवेतसमवायरूपस्य श्रोत्रसम्बन्धस्य साक्षात्संसर्गत्वाभावात् शब्दाभावे विशेषणतारूपस्य श्रोत्रसम्बन्धस्याभावात्मकतया सदात्मकत्वाभावाच्च । परं लक्षणेऽस्मिन् ग्राह्यशब्दस्य प्रत्यक्षविषयत्वरूपमर्थमुपेक्ष्य प्रत्यक्षयोग्यत्वरूपार्थो नूनमभ्युपेयः, येन वक्तृश्रोत्तृदेशयोरन्तरालवर्तिषु श्रोत्रेणागृह्यमाणेषु शब्देष्वव्याप्तिर्न स्यात् । इत्थं च श्रोत्रेन्द्रियप्रत्यक्षयोग्यो योऽर्थः, स शब्द इति वैशेषिकाणां मते शब्दस्य लक्षणं पर्यवस्यति ।

**'आप्तोपदेशश्शब्दः'**[2] इति न्यायसूत्रस्याऽपि उक्तार्थ एव तात्पर्यम् । तत्र ह्याप्तपदं न लक्षणघटकम्, किन्तूपदेशशब्दप्रतिपादितशब्दलक्षणपरिचायकमेव । उपदिश्यतेऽनेनेत्युपदेशः । उपदेशश्च नार्थप्रतीतिकरणत्वमात्ररूपः, तथासति चक्षुरादेरपि तत्करणत्वादुपदेशत्वप्रसङ्गः । अथैतत्परिजिहीर्षया ज्ञातं सच्छब्दस्य अर्थप्रतीतिकरणत्वम्, तदेवोपदेशशब्दवाच्यम्, चक्षुरादेश्च स्वरूपसदेवार्थप्रतीतिकरणतया नोपदेशत्वप्रसङ्ग इत्युच्येत, तथाऽपि ज्ञायमानलिङ्गस्याऽनुमितिकारणतया धूमादेश्च तथात्वादुपदेशत्वप्रसङ्गः । तस्मादत्र श्रोत्रग्राह्यवस्तुकरणकार्थप्रतीतिकरणत्वमेवोपदेशत्वमिति वक्तव्यम् ।

एवं सति चक्षुरादेर्धूमादेश्च सामान्यतोऽर्थप्रतीतिकरणत्वेऽपि श्रोत्रग्राह्यशब्दकरणकार्थप्रतीतिकरणत्वाभावेन न तेषामुपदेशत्वप्रसङ्गः । वर्णात्मकाश्च शब्दाः श्रोत्रग्राह्यशब्दकरणकार्थप्रतीतिजनका इति तेषामेवोपदेशशब्दवाच्यत्वम् । इत्थञ्चोपदर्शितरीत्या शब्दे श्रोत्रेन्द्रियजन्यप्रत्यक्षयोग्यत्वस्याऽप्युपदेशशब्देन लाभात् **'आप्तोपदेशश्शब्दः'** इति शब्दलक्षणस्याऽपि वैशेषिकोक्तलक्षणे तात्पर्यवर्णने न किञ्चिद्बाधकम् ।

न्यायमञ्जर्यां जयन्तभट्टाचार्यैरपि निरुक्तरीत्यैव निर्वाहः प्रादर्शि । यद्यपि प्रमाणात्मकशब्दविशेषमुद्दिश्यैव **'आप्तोपदेशः शब्दः'** इति लक्षणमभिहितम्, तथापि विशेषेऽपि सामान्यलक्षणस्यावश्यकत्वेन वैशेषिकोक्तलक्षणस्यापि प्रकृतसूत्रगम्यत्वमुपवर्णितम् ।

---

१. सप्तपदार्थी–पृ० ८२, मेडिकल हाल यन्त्रणालय १९५८ वाराणसी ।

२. न्यायसूत्रम्–१।१।७ ।

भाट्टमीमांसका अपि वैशेषिकोक्तस्य शब्दलक्षणस्यैव स्वपक्षेऽपि लक्षणत्वं प्रतिपादयन्ति । तथा च ग्रन्थसन्दर्भः—

**'श्रोत्रमात्रेन्द्रियग्राह्यः शब्दश्शब्दत्वजातिमान् ।**
**द्रव्यं सर्वगतो नित्यः कुमारिलमते मतः[1] ॥'** इति ।

एवञ्चैतत्सिद्धं यच्छब्दलक्षणविषये भाट्टानां नैयायिकानां वैशेषिकाणाञ्च तुल्यत्वम् । शब्दस्य द्रव्यत्व-गुणत्व-नित्यत्वानित्यत्वविषय एव विवाद इति । तत्र प्रथमं भाट्टमतरीत्या शब्दस्य द्रव्यत्वं निरूप्यते ।

**भाट्टमतेन शब्दस्य द्रव्यत्ववर्णनम्**

शब्दो नित्यो विभुश्च । अभिव्यञ्जकेनाऽभिव्यज्यते । इन्द्रियाणां प्राप्यकारित्वेऽपि शब्दस्य श्रोतृदेशप्राप्तिर्विभुत्वादेव सम्भवतीति द्रव्यत्वं सिद्धम् । विभुत्वञ्च शब्दे वर्तते इत्येवं स्वरूपेणैव शब्दस्य प्रतीतेर्घटादिवत् सावयवत्वाभावेन निरवयवत्वात् सर्वदेशावच्छेदेन श्रवणाच्च । तदुक्तं श्लोकवार्तिके—

**'यो यो गृहीतस्सर्वस्मिन् देशे शब्दोऽपि दृश्यते ।**
**न चास्यावयवास्सन्ति येन वर्तेत भागशः ।**
**शब्दो वर्तत इत्येवं तत्र सर्वात्मकश्च सः[2] ॥'** इति ।

विभुत्वे च ग्रहणनियमः कथमुपपद्यत इति चेद्यथैव गोत्वजातेरेकस्मिन् गवि कात्स्न्येन गृहीतत्वेऽप्यन्यस्मिन् गव्यप्युपलभ्यते, महिषादौ तु न गृह्यते, तथैव समीपस्थैरेव नादैः श्रोत्रस्य संस्कारकरणाच्छब्दस्य विभुत्वेऽपितादृशसंस्कारविशिष्टस्यैव पुरुषस्य शब्दग्रहणम्, न त्वन्यस्येति ग्रहणनियम उपपद्यते ।

उक्तञ्च पार्थसारथिमिश्रैर्न्यायरत्नाकरे—**'नादाः प्रादेशिकाः स्वदेशावच्छिन्नमेव तस्य विभोरपि संस्कारं कुर्वन्ति'**[3] इति ।

अत्रायमभिसन्धिः । 'सोऽयं गकारः' इति प्रत्यभिज्ञया वर्णात्मको शब्दो नित्यः, तस्य च ध्वनिः कौष्ठ्यो वायुर्वाभिव्यञ्जकः, अत एव शब्दस्य विभुत्वेऽपि न सर्वत्र सर्वदोपलब्धिः । तत्र च ध्वनयो वायुविशेषा इति शबरस्वामिपादानामाशयः । ध्वनीनां वायुरूपत्वे वायोश्च श्रोत्रग्राह्यत्वासम्भवेन शङ्खादिजन्यध्वनेश्श्रोत्रग्राह्यत्वप्रतीतेश्च न ध्वनीनां वायुरूपत्वम्; अपि तु वायुगुणत्वमेव, तेषाञ्च शब्दरूपत्वान्न श्रोत्रग्राह्यत्वानुपपत्तिरिति केचित् । अस्मिन् पक्षे वर्णात्मकशब्दानां न वायवोऽभिव्यञ्जकाः; किन्तु वायुगुणभूता ध्वन्याख्याश्शब्दा वायुना सह ताल्वादिभिः प्रेरिताः श्रोत्रं संस्कुर्वन्तश्शब्दस्य व्यञ्जकाः ।

---

१. मानमेयोदयः, पृ०—२२२, अड्यार लाइब्रेरी मद्रास, १९७५ ।
२. श्लोकवार्तिकम्–पृ० ५४७, तारापब्लिकेशन्स वाराणसी १९७८ ।
३. न्यायरत्नाकर :--पृ० ५३२–तारा पब्लिकेशन्स–१९७८; वाराणसी ।

अन्ये तु वायोरेव नानात्वमङ्गीकृत्य शब्दत्वजातेर्वर्णात्मके ध्वन्यात्मके च शब्दे सत्त्वात्, ध्वनेरपि श्रोत्रग्राह्यत्वं नानुपपन्नमिति भाष्यकारपक्षं समर्थयन्ति। एषाञ्च पक्षे ताल्वादिसंयोगविभागप्रेरिता वायुविशेषा एव वर्णं व्यञ्जयन्ति, अन्ये तु शब्दमात्रमिति विभागोऽनुसन्धेयः। यथा तथा वाऽस्तु—त्रिष्वपि पक्षेषु ध्वनीनामेव वर्णाभिव्यञ्जकत्वमिति संप्रतिपन्नम्।

वर्णात्मकशब्दानां नित्यत्वविभुत्वादिधर्मवत्त्वेऽपि तेषां वक्तृदेशमात्रेऽभिव्यक्त्या श्रोतुरर्थबोधासम्भवेन श्रोत्रेऽपि तदभिव्यक्तिरभ्युपगन्तव्या। तत्रत्या अभिव्यक्तिश्च वक्तृदेशीयेनाभिव्यञ्जकव्यापारेणानुपपाद्येति वक्तृदेशगतवर्णाभिव्यञ्जकध्वनेः परम्परया श्रोतृदेश उपसर्पणं स्वीकृत्य ध्वनिसंस्कृतस्य पुरुषस्य शब्दग्रहणं भवतीति वक्तव्यम्। एवञ्च वर्णात्मकशब्दाभिव्यञ्जको ध्वनिः कोष्ठ्यो वायुर्वा सर्वासु दिक्षु गच्छन् कर्णशष्कुलीरूपश्रोत्रेन्द्रिये शब्दश्रवणयोग्यतानुरूपसंस्कारमुत्पादयति, तेन च शब्दग्रहणम्, तथा तस्यैव वायोस्तीव्रत्वे शब्देऽपि तीव्रत्वबुद्धिः, मन्दत्वे च मन्दताबुद्धिरुपजायते। स च वायुर्यावद्वेगं गच्छति तावत्पर्यन्तमेव शब्दस्यापि श्रवणं सम्भवति, न तु दूरे, वायुवेगश्च शरवदेव स्वयमेवोपशाम्यति।

एवं कुड्यादिव्यवधाने सति शब्दस्य न श्रवणं सम्भवति, यतो ह्यभिव्यञ्जकवायोर्व्यवधायकस्य कुड्यादेश्च मूर्तत्वेन मूर्तयोश्च सप्रतिकत्वनियमात्। एवं वायोर्वेगगतियोगित्वाद् यतो यो वायुरागच्छति, ततस्ततश्शब्दोप्यागच्छतीति बुद्धिरुत्पद्यते। वस्तुतश्शब्दस्तु नागच्छति। इत्थञ्च सर्वेषामपि तीव्रत्वादीनां धर्माणामभिव्यञ्जकवायुधर्मत्वमेव, न तु शब्दधर्मत्वमिति वर्णात्मकः सर्वोऽपि शब्दो नित्यो द्रव्यञ्च। द्रव्यत्वं विना सर्वमूर्तद्रव्य एव नियतोत्पत्तिकत्वादिति भाट्टमीमांसकानामभिप्रायः।

**नैयायिकमतरीत्या शब्दस्य द्रव्यत्वनिराकरणं गुणत्वप्रतिपादनञ्च**

यदुक्तम्—इन्द्रियाणां प्राप्यकारित्वपक्षे शब्दस्य विभुत्वेन श्रोतृदेशप्राप्तिसम्भवाद् विभुत्वस्य च सर्वमूर्तद्रव्यसंयोगित्वरूपतया द्रव्यमेव शब्द इति। तत्रेदं वदामः—शब्दस्य गुणत्वेऽपि वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा सजातीयशब्दान्तरारम्भकत्वेन श्रोतृदेशप्राप्ते सम्भवात्। तथा हि—यथा चान्यानीन्द्रियाणि स्वस्थानावस्थितान्येव स्वसमीपमर्थं गृह्णन्ति, तथैव कर्णशष्कुल्यवच्छिन्नाकाशात्मकं श्रोत्रेन्द्रियमपि। तत्र च कर्णशष्कुली मनुष्यशरीरं विहाय शब्दोत्पत्तिमन्तं देशं न गच्छति। अत एव तदवच्छिन्नाकाशस्यापि तत्र गमनमसम्भवम्। अतो वक्तृदेशे वाद्यदेशे वोत्पन्नशब्दः श्रोत्रेणासन्निकृष्टतया श्रोत्रा न श्रोतुं शक्यते। तस्माद् वक्तृदेशगतशब्देनोत्पादितस्तत्सजातीयोऽन्य एव शब्दः श्रोतृकर्णगतश्श्रूयत इति वक्तव्यम्। तत्र च दूरदेश उत्पन्नशब्दात् तत्सजातीयोऽन्यश्शब्दः श्रोतृकर्णे कथं गृह्यत इति जिज्ञासायां

वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दस्य ग्रहणं भवतीति न्यायद्वयमुदाहृतं न्यायवैशेषिकशास्त्रयोः।

अयमर्थः—कदम्बपुष्पं यदा प्रथममुत्पद्यते, तदा तत्र सर्वासु दिक्षु लघुलघूनि विभिन्नानि दलानि भवन्ति, यथा यथा च वर्धते तथा तथा पूर्वपूर्वदलेभ्य उत्तरभागे विभिन्नासु दिक्षु विभिन्नानि दलानि जायन्ते। तदेवं पूर्णवृद्धिगते कदम्बमुकुल आरम्भावस्थातोऽन्तिमावस्थां यावत् प्रत्यवस्थं विभिन्नदिक्कानि विभिन्नदलानि भवन्ति। अनयैव रीत्या यदा कस्यचिद् वक्तुर्मुखात् कस्माच्चिद्वाद्यतो वा प्रथमश्शब्द उत्पद्यते, तदा सः स्वसजातीयान् विभिन्नान् शब्दान् परितः स्वसर्वासु दिक्षूत्पादयति। एवं द्वितीयशब्दोऽपि स्वोत्तरक्षणे विभिन्नदिगाश्रितान् स्वसजातीयान् विभिन्नशब्दानुत्पादयति। तदेवं क्रमेण कदम्बमुकुलमिव श्रोतृकर्णं यावत् शब्दोऽपि विस्तृतो भवतीति। तादृशस्य च शब्दस्य श्रोतृसन्निकृष्टत्वात् श्रोत्रेण गृह्यत इत्येकः पक्षः।

कस्मिंचिज्जलकुण्डे पाषाणखण्डे प्रक्षिप्ते यदेकं वर्तुलाकारं जलतरङ्गमुत्पद्यते, तद्वीचीति कथ्यते। अथवा समुद्रे वा वीची प्रसिद्धा। इयञ्च वीची न दिग्भेदेन भिन्ना, किन्तु सर्वासु दिक्षु समानैव भवति। सा हि स्वापेक्षयाऽधिकदेशव्यापिकामन्यां वीचीमुत्पादयति, साप्यन्यामित्येवं क्रमेण भूयिष्ठा वीचय उत्पद्यन्ते। एवञ्च यो हि शब्दो वक्तृमुखादन्यस्माद्वा जायते, स परितः सर्वदिगवच्छिन्नस्वदेशाधिकदेशव्यापिनमेकं शब्दान्तरमुत्पादयति, सोऽपि शब्दस्तादृशमेव शब्दान्तरमुत्पादयति। तदेवं क्रमेण तादृशशब्दधारा श्रोत्रदेशं यावत्प्रसरति, तदन्तर्गतश्च अन्तिमश्शब्दश्श्रोत्रेण सन्निकृष्टस्सन् गृह्यते। उक्तयोर्न्याययोः प्रथमापेक्षया द्वितीयस्मिन् न्याये बहूनां नैयायिकविदुषां सम्मतिर्दृश्यते, यतो हि कदम्बमुकुलन्यायेन शब्दोत्पत्त्यङ्गीकारे तदा दिग्भेदेनानेकेषां शब्दानामुत्पत्तेरावश्यकतया गौरवं स्यात्।

वीचीतरङ्गन्याये तु पूर्वपूर्वशब्दादुत्तरोत्तरस्य सर्वदिगवच्छिन्नस्यैकैकस्यैव शब्दस्योत्पत्त्या लाघवम्। एवञ्च शब्दस्य गुणत्वेऽप्युपदर्शितरीत्या श्रोत्रग्राह्यत्वोपपत्तेर्न तस्य विभुत्वप्रयुक्तद्रव्यत्वस्यावसरः। किञ्च, एकत्रोच्चरितस्य शब्दस्य विभिन्नासु दिक्ष्ववस्थितानां श्रोतॄणां युगपत्प्रत्यक्षं जायते, तच्च वीचीतरङ्गन्यायेन शब्दाच्छब्दोत्पत्तिपक्ष एव स्वरसतो युज्यते। विभुत्वप्रयुक्ततया द्रव्यत्वाङ्गीकारे तदैकत्र पूर्णतया स्थितस्य शब्दस्यान्यस्मिन् पुरुषे प्रत्यक्षत्वं न युज्यते। पुरुषभेदेनाभिव्यञ्जकव्यापारकल्पने च महद्गौरवम्। अतोऽत्र शब्दस्य द्रव्यत्वकल्पना निष्प्रमाणैव स्यात्।

अथानुमानप्रमाणेनापि शब्दस्य गुणत्वमेव सिद्ध्यति, न तु द्रव्यत्वम्। तथा हि—पृथिव्यादिगुणानामपाकजानां यावद्द्रव्यभावितया शब्दस्य चातथात्वेन न पृथिव्यादिगुणत्वम्। ततश्च शब्दो न स्पर्शवतां पृथिवीजलतेजोवायूनां विशेषगुणः अकारणगुणपूर्वकत्वे सति प्रत्यक्षत्वात्, सुखादिवत्। तथा न दिक्कालमनसां गुणो

विशेषगुणत्वाद् रूपादिवत्। शब्दो नात्मगुणो बहिरिन्द्रियग्राह्यत्वात्। तस्मादत्र परिशेषाद् आकाशमात्रगुणत्वं सिद्ध्यति। न च शब्दे गुणत्वमेवासिद्धमिति वाच्यम्, शब्दो गुणचक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यत्वादित्यनुमानेन तत्सिद्धेः। इत्थञ्च शब्दस्य गुणत्वं निराबाधमिति भावः।

**शब्दस्य द्रव्यत्व उदयनाचार्याभिप्रायवर्णनम्**

उदयनाचार्यास्तु भाट्टाभिमतशब्दद्रव्यत्वानुमित्यनुवादपूर्वकं तत्र बहुधा दूषण-मुद्भाव्य स्वमते शब्दस्याऽऽकाशगुणत्वमित्युपापादयन्। यदुक्तं परिशेषानुमानेन शब्दस्याऽऽकाशगुणत्वसिद्धिः, चक्षुर्ग्रहणायोग्यबहिरिन्द्रियग्राह्यत्वहेतुकानुमित्या च गुणत्वसिद्धिश्चेति। तत्र भाट्टमीमांसकाः प्राहुः परिशेषानुमितेरन्यथाऽपि सुवचत्वात्। तथाहि—शब्दः सामान्यविशेषसमवायभिन्नः सत्तावत्वात्, यश्च सत्तावान्, स न सामान्यादित्रिधात्मकः सामान्यादौ च सत्ताभावादिति व्याप्तिसहितानुमानेन सामान्या-दिभेदसिद्धिः। नापि शब्दोऽभावात्मकः, भावत्वेन प्रतीयमानत्वादित्यभावव्यावृत्तिः। शब्दो न कर्म-मूर्तद्रव्यसमवायाभावात्, कर्मणश्च मूर्तद्रव्यसमवेतत्वनियमात्। शब्दो द्रव्यम्, साक्षात्सम्बन्धेन गृह्यमाणत्वात्, घटवत्। रूपादिगुणस्य च संयुक्तसमवायरूप-परम्परासम्बन्धेनैव गृह्यमाणतया शब्दस्य चातथात्वेन न गुणत्वम्।

नैयायिकैरपि श्रोत्रेन्द्रियस्य शब्दस्य च सन्निकर्षतया समवायरूपसाक्षात्संसर्ग एव स्वीक्रियते, मीमांसकानां मते तु शब्दस्य द्रव्यत्वेन संयोग एव साक्षात्सन्निकर्षो भवतीति साक्षात्सम्बन्धेन गृह्यमाणत्वरूपहेतोरुभयवादिसम्प्रतिपन्नत्वम्। ततश्च लोकेऽपि घटादिद्रव्यस्यैव साक्षात्सम्बन्धेन गृह्यमाणत्वदर्शनात् तद्वदेव शब्दस्य द्रव्यत्व-मेव सिद्ध्यति, न तु गुणत्वमिति। अपि च शब्दो न श्रोत्ररूपाकाशगुणः, तेन गृह्यमाणत्वात्। यद् येनेन्द्रियेण गृह्यते, नासौ तस्य गुणः, यथा घ्राणग्राह्यगन्ध इति व्याप्तिसहितानुमानेन शब्दस्याकाशगुणत्वम्, किन्तु द्रव्यत्वमेवेति भाट्टाभिप्रायः।

अत्र उदयनाचार्याः—शब्दो द्रव्यम्, साक्षात्सम्बन्धेन गृह्यमाणत्वात्, इति प्रथमानुमितौ, शब्दो न द्रव्यं बहिरिन्द्रियव्वस्थाहेतुत्वात्, इति प्रत्यनुमानेन हेतो-स्सत्प्रतिपक्षितत्वेन न शब्दस्य द्रव्यत्वं सिद्ध्यति। अयं भावः—बहिरिन्द्रियव्यवस्था-हेतुत्वादित्यत्र व्यवस्थाशब्देनेतरव्यावृत्तिरुच्यते। ततश्च चक्षुरादिबहिरिन्द्रियेषु शब्दादिविशेषगुणैरेव स्वग्राहकत्वेन चक्षुरिन्द्रियं श्रोत्रेन्द्रियापेक्षयाभिन्नचक्षुरिन्द्रियेण रूपमात्रग्रहणात्—तथा श्रोत्रेन्द्रियेण शब्द एव गृह्यते, न तु रूपादिरिति रीत्या विशेष-गुणग्राहकत्वपुरस्कारेणेन्द्रियाणां परस्परव्यावृत्तिरुपपादनीया। एवञ्च शब्दस्यापि रूप-रसादिविशेषगुणवच्चक्षुरादीन्द्रियापेक्षया श्रोत्रेन्द्रियव्यावृत्तिहेतुत्वाद्गुणत्वमेव वक्तव्यम्, न तु द्रव्यत्वमित्याशयः।

शब्दो न श्रोत्रगुणः, तेन गृह्यमाणत्वादित्यनुमितौ चायोग्यत्वमुपाधिः। यतस्तत्र यत्र यत्र तदिन्द्रियेण गृह्यमाणत्वम्, तत्र तत्र तद्‌गुणत्वाभाव इति व्याप्तिर्वक्तव्या। तत्र च तदिन्द्रियग्राह्यत्वमस्तु, तदिन्द्रियगुणत्वाभावो मास्त्वित्यप्रयोजकत्वशङ्कायां यदि तद्‌गुणस्स्यात्तदा तदिन्द्रियग्राह्यो न स्यादिति बाधकतर्कोऽनुसन्धेयः। उक्ततर्कस्याङ्गभूता व्याप्तिश्च यत्र यत्र तद्‌गुणत्वाभावाभावस्तत्र तत्र तदिन्द्रियग्राह्यत्वाभाव इत्येवंरूपा। एवञ्च तद्‌गुणत्वाभावाभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेकव्याप्तावयोग्यत्वस्योपाधित्वं भाव्यम्। तत्र च तद्‌गुणत्वाभावाभावपदेन श्रोत्रगुणत्वमादाय तस्य च शब्दरूपगुणे सत्वाद् अयोग्यत्वाभावस्याऽपि तत्र विद्यमानत्वाच्च तद्‌गुणत्वाभावाभावव्यापकीभूताभावप्रतियोगित्वमुपाधेरक्षुण्णम्। तथा प्रकृतपक्षे शब्दे श्रोत्रग्राह्यत्वमस्ति, अयोग्यत्वरूपोपाधिर्नास्तीति साधनाव्यापकत्वम्।

इत्थञ्च सोपाधिकत्वेन न शब्दस्य श्रोत्रगुणत्वाभावस्साधयितुं शक्यते। एतेन शब्दो न श्रोत्रगुणः, तेन गृह्यमाणत्वादित्यनुमितावन्वयव्याप्तावुक्तोपाधेरभावात्तद्बलादेव प्रकृतानुमानं निर्वोढुं शक्यमिति शङ्कायाः नावकाशः। तस्मादत्रोपदर्शितानुमानद्वयेनाऽपि शब्दस्य द्रव्यत्वमाकाशगुणत्वप्रतिक्षेपो वा नोपपादयितुं शक्यते। अन्यथा तेन गृह्यमाणत्वरूपहेतुसद्भावमात्रेणाऽऽकाशगुणत्वप्रतिक्षेपे सुखादेरप्यात्मगुणत्वप्रतिक्षेपस्सुकरस्स्यात्, तस्यापि तेन गृह्यमाणत्वात्। इत्थञ्च तत्तदिन्द्रियेण तत्तद्‌गुणग्रहणेऽग्रहणे च तद्‌गुणत्वतदभावौ न प्रयोजकौ, अपि तु स्वगुणो वा परगुणो वा भवतु योग्यश्चेद्‌गृह्यते, अयोग्यश्चेन्न गृह्यत इति योग्यत्वतदभावयोरेव प्रयोजकतया शब्दस्य न द्रव्यत्वं सिद्धयति; अपि त्वाकाशगुणत्वमेवेति।

**"अथ द्रव्यत्वे किं बाधकम्"**[1] उच्यते शब्दो न द्रव्यम्, बहिरिन्द्रियव्यवस्थाहेतुत्वादित्यादिनाग्रन्थेन समसूचयन्नुदयनाचार्याः।

**अद्वैतिनां मतेन शब्दस्वरूपम्, तत्र नैयायिकोक्तदूषणञ्च**

अद्वैतवेदान्ते शब्दो गुणः शब्दतन्मात्रादेवाकाशस्योत्पत्तिः, आकाशात्मनो द्रव्यस्योत्पादकतया शब्दतन्मात्रस्यापि द्रव्यत्वमेव वक्तव्यम्। किन्तु वर्णात्मका ध्वन्यात्मकाश्च ये स्थूलाश्शब्दास्त आकाशगुणभूता एव। परं तेन केवलमाकाशस्यैव गुणाः पञ्चीकृतानां पृथिव्यादिभूतानामपि गुणा इति कथयन्ति।

अयमाशयः—पृथिवीजलतेजोवाय्वाकाशानां पञ्चभूतानामुपादानभूतानां गन्ध-रस-रूप-स्पर्श-शब्दतन्मात्राणां प्रत्येकमर्धभागश्चतुर्धाकृतोऽस्तत्तदर्धभागस्यैकैकभागेन सहितः क्रमेण प्रत्येकं पृथिव्यादीनामुपादानकारणं भवति। तथा च शब्दतन्मात्रस्यार्धभाग आकाशेऽन्यस्यार्धभागस्य चतुर्षु भागेष्वेकैको भागः पृथिव्यादिषु च वर्तते।

---

१. न्यायकुसुमाञ्जलिः–पृ-७६–रत्नंप्रेस मदरास–१९७९।

अतश्च शब्दतन्मात्रजनितत्वादाकाशो यथा वर्णाद्यात्मकशब्दानामुत्पत्तिस्थलं भवति, तथैव पृथिव्यादीन्यन्यभूतान्यपि शब्दतन्मात्रस्य भागजनितत्वेन शब्दतन्मात्रजन्यतया वर्णाद्यात्मकशब्दानामुत्पत्तिस्थलानि भवितुमर्हन्ति। परन्त्वाकाशस्यार्धशब्दतन्मात्र-जन्यतयाऽधिकशब्दतन्मात्रत्वात्तत्र वर्णाद्यात्मकशब्दानां बाहुल्येनोत्पत्तिर्व्यापकः प्रसारश्च भवति। पृथिव्यादीनाञ्च शब्दतन्मात्रस्य भागप्रभवत्वेनाल्पतरशब्दतन्मात्र-वत्तया तेषु वर्णाद्यात्मकशब्दानामल्पतरोत्पत्तिः उत्पत्तिदेशातिरिक्तदेशे प्रसाराभावश्च भवतीति वैलक्षण्यम्।

एवञ्चैतत्सिद्धं यच्छब्दः पञ्चभूतगुणो न त्वाकाशमात्रगुण इति। अत्र च शब्द-तन्मात्रपदेन सूक्ष्माकाश एवोच्यते, उपादानोपादेयभावस्य गुणत्वेऽसम्भवादिति ध्येयम्। इदमपि मतं **'प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः'** इति न्यायेनेश्वरजगत्सृष्ट्यादिविषयेऽनुमितेरेव प्रबलप्रमाणत्वमभ्युपगम्य भूतोत्पत्तौ परमाणोरेव कारणत्वं वदद्भ्यो नैयायिकेभ्यो न रोचते। तत्पक्ष आकाशस्य नित्य-तयोत्पत्तेरेवानङ्गीकाराद् इतरेषाञ्च भूतानां तत्तत्परमाणुद्वयसंयोगाद् द्व्यणुकत्र्यणु-कादिक्रमेणैवोत्पत्तेश्च न शब्दस्य पञ्चभूतगुणत्वं युज्यते। परन्तु नैयायिकोक्तरीत्या भूतसृष्ट्यङ्गीकारे निरपेक्षप्रमाणभूतस्य **'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः'**[1] इत्याद्याकाशोत्पत्तिप्रतिपादकस्य वेदस्याप्रामाण्यापत्तिः।

एवञ्च, अनुमितेरन्यथाऽपि वक्तुं शक्यतया श्रुतेरेवेतरप्रमाणापेक्षया बलवत्त्वेन तदनुसारेणैव भूतसृष्टेर्युक्ततया शब्दस्य पञ्चभूतगुणत्वमेवेष्टव्यमिति वेदान्तिनां रहस्यम्।

उक्तञ्च वेदान्तपरिभाषायाम्—**'न तु शब्दस्याकाशमात्रगुणत्वं वाय्वादावपि तदुपलम्भात्, न चासौ भ्रमः, बाधकाभावात्'**[2] इति।

**विशिष्टाद्वैतिमते शब्दस्य द्रव्यत्वगुणत्वविमर्शः**

विशिष्टाद्वैतदर्शनेऽप्युक्तरीत्यैव शब्दस्य पञ्चभूतगुणत्वं समर्थितम्। परन्तु श्रीभगवद्यामुनमुनयः सिद्धित्रयाख्ये ग्रन्थ आत्मसिद्धौ नभोगुणत्वं निरस्य **'दृश्यन्ते गुणा अपि शब्दगन्धसूर्यालोकरत्नप्रभादयो गतिमन्तो धर्म्यतिवर्तिनश्च। अतिसूक्ष्मो दूर-गमनधर्मा भौतिको हि शब्दः'**[3] इत्यादिना ग्रन्थेन शब्दस्य द्रव्यत्वमन्वग्रहीषुः।

श्रीभगवद्रामानुजाचार्या अपि श्रीभाष्ये—**'प्राकृतप्रलये स्रष्टुः प्रजापतेर्भूताद्य-हङ्कारपरिणामशब्दस्य च विनष्टत्वात्'**[4] इति वाक्येनाहङ्कारपरिणामित्वं शब्दस्येत्य-भ्यधुः। परिणामित्वे च शब्दस्य द्रव्यत्वं सिद्ध्यतीत्याशयः। भगवद्रामानुजाचार्या-

---

१. तैत्तिरीयोपनिषद्—आनन्दवल्ली।
२. पृ० ३१२ वेङ्कटेश्वर स्टीम् प्रेस मुम्बई, १९७१।
३. पृ० ६०-उत्तमूर-वीरराघवाचार्य, मदरास्, १९६०।
४. १।३।७ अधिकरणे पृ० ६६-उत्तमूर-वीरराघवाचार्य, मदरास् १९६७, द्वितीयसंपुटम्।

नन्तरकालिकाः श्रीनिगमान्तमहादेशिकास्तु उदाहृताचार्यवचनानां शब्दस्य द्रव्यत्वे न तात्पर्यम्, अपि त्वागन्तुकत्वादिधर्मप्रतिपादनमात्र इति सयुक्तिकमुपपाद्य स्वमते शब्दोऽद्रव्यमेवेति प्रतिपादयाम्बभूवुः ।

अयमाशयः—**'अकारस्सर्ववर्णानाम्'** यद् वेदादौ स्वरप्रोक्तो वेदान्ते च प्रतिष्ठितः, तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः[1] इत्यादिभिः श्रुतिभिर्वर्णानां वर्णान्तरोपादानत्वप्रतिपादनाद् वर्णानाञ्च शब्दात्मकतया शब्दस्य चाद्रव्यत्व उपादानोपादेयभावासम्भवात्, निमित्तकरणत्वप्रतिपादनपरत्वे चोपादानत्वबोधकप्रकृतिलीनादिपदप्रयोगस्वारस्यभङ्गाच्च शब्दस्य द्रव्यत्वमेवेष्टव्यम् ।

**'यद्वेदादौ'** इति श्रुतेश्चाययर्थः—यो वेदोपक्रमे वेदोपसंहारे च प्रतिष्ठितस्स्वरशब्दवाच्यः प्रणवः, तस्य प्रकृतिरकारः, तादृशाकारभूतप्रकृतिलीनस्याकारात्मकतां प्राप्तस्य यः परो यो वाच्यः महेश्वरः परं ब्रह्मेत्यर्थः ।

तथा च वेदप्रकृतिप्रणवप्रकृतिभूताकारवाच्यो महेश्वर इत्यर्थः सम्पन्नः । ततश्चाकारात्मकशब्दस्यैव प्रकृतिशब्देनोपादानत्वाभिधानात्तस्य च गुणत्वे कथमुपादानत्वं संगच्छत इति प्रथमा युक्तिः । उपदर्शितरीत्यैव भगवद्रामानुजाचार्यैरपि वेदार्थसंग्रहेऽर्थस्योपवर्णितत्वादस्याश्श्रुतेरौपचारिकत्वे श्रीभाष्यकारवचनविरोधोऽपि स्यादिति शब्दस्य द्रव्यत्वं सिद्ध्यतीति द्वितीया युक्तिः ।

एवं श्रीभाष्येऽपि **'भूताद्यहङ्कारपरिणामशब्दस्य च विनष्टत्वात्'** इति ग्रन्थेन शब्दस्याहङ्कारपरिणामित्वोक्तेर्गुणत्वे च परिणामित्वासम्भवाद् द्रव्यत्वमेव वक्तव्यम् ।

**'यस्य वेदाश्शरीरम्'**[2] इति श्रुत्या वेदात्मकशब्दस्य भगवच्छरीरत्वप्रतिपादनाद् विशिष्टाद्वैतिमते च यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यम्, तत्तस्य शरीरमिति रीत्या शरीरलक्षणकथनात् तादृशलक्षणस्य च शब्दस्य गुणत्वेऽसम्भवाच्च द्रव्यमेव शब्दः । इतश्च शब्दस्य गुणत्व आत्मसिद्धौ यामुनमुनिभिः **'गतिमन्तः'** **'भौतिकोहि शब्दः'** इति ग्रन्थेन भूतविकारत्वस्य गतिमत्वस्य च प्रतिपादनाद् शब्दो न गुणः, अन्यथाऽऽचार्यवचनविरोधस्स्यात् । तस्मादत्र श्रुतिविरोधात् पूर्वाचार्यवचनविरोधाच्च शब्दस्य द्रव्यत्वमेव युक्तम् । तत्रापि वायवीयत्वमुच्चारणानन्तरभावित्वादनित्यत्वञ्च वक्तव्यमिति विशिष्टाद्वैतिमतैकदेशिनामाशयः ।

**निगमान्तगुरूणामभिप्रायकथनम्**

निगमान्तमहादेशिकास्तु शब्दस्य द्रव्यत्वे प्रमाणतयोपन्यस्तश्रुतीनां पूर्वाचार्यवचनानाञ्चान्यथा तात्पर्यं निरूप्य शब्दस्याद्रव्यत्वं प्रत्यपादयन् । तथा हि यदुक्तम्—**'अकारस्सर्ववर्णानाम्', 'यद्वेदादौ स्वरः प्रोक्तः'** इत्यादिश्रुत्योपादानोपादेयत्वं प्रति-

---

१. तैत्तिरीयोपनिषद्–२।१०।  २. अन्तर्यामिब्राह्मणे–६।

पाद्यत इति शब्दस्य द्रव्यत्वसिद्धिरिति। तत्रेदं चिन्त्यते—किमत्रोपादानोपादेयत्वं कस्य मते प्रस्तूयते। न तावद्भाट्टमततरीत्या, तैश्शब्दस्य द्रव्यत्वाभ्युपगमेऽपि वर्णानां नित्यत्वाङ्गीकाराद् नित्यत्वे चोपादानोपादेयभावासम्भवात्। नापि नैयायिकमतानुसारेण तैर्द्रव्यस्यैव समवायिकारणत्वाभ्युपगमाच्छब्दस्य च तत्पक्षे आकाशगुणत्वेन समवायिकारणत्वासम्भवान्नात्र वर्णानां समवायिकारणत्वरूपमुपादानत्वं युज्यते। एवं विशिष्टाद्वैतसम्प्रदायप्रवर्तकानां भगवद्यामुनमुनिरामानुजाचार्याणाञ्चाभिसन्धिमुपलक्ष्य वर्णानामुपादानोपादेयभावो न संजाघटीति। यामुनमुनिभिर्वर्णानां वायवीयत्वस्यैव प्रतिपादितत्वात् श्रीभाष्यकारैश्चाहङ्कारमात्रपरिणामित्वाभिधानाच्च तयोर्मतेऽहङ्कारस्य वायोरेवोपादानत्वं सम्भवति, न तु वर्णानामिति सिद्धम्।

एवञ्च केषाञ्चिदपि दार्शनिकानां मतमनुसृत्य वर्णानामुपादानोपादेयत्वप्रतिपादनासम्भवात् **'अकारस्सर्ववर्णानाम्', 'यद्वेदादौ'** इत्यादिश्रुतिभिस्तादृशवर्णाधिष्ठातृदेवताविशेषस्यैवोपादानत्वं बोध्यते, न तु शब्दात्मकवर्णानाम्। तत्तदक्षराभिमानिदेवतैव ह्यभिमन्तव्यमन्त्रवर्णनिष्ठतया तेषु तेष्वागमेषूपदिश्यते। तत्र च **'मनो ब्रह्मेत्युपासीत'**[1] इत्यादिस्थलसिद्धदृष्टिविधिन्यायेनोपचारेण वा देवताया वर्णोपादानत्वमुपपादनीयम्। अत एव तत्तद्देवताबीजाक्षरेषु तत्तद्देवताया उपादानत्ववाद आगमेषु दृश्यते। एवं सति वर्णात्मके शब्द उपादानोपादेयत्वप्रयुक्तद्रव्यत्वस्य नावसर इति उपदर्शितश्रुतीनामन्यथैव निर्वाहोपपत्तेः शब्दो गुण एव।

किञ्च क्वचित् **'अकारस्सर्वोपादानम्'**[2] इति श्रूयते, क्वचिच्च **'हरिरोमित्युपक्रमाद् हकारस्सर्वोपादानम्'** इत्येवञ्च विरुद्धोपादानोपादेयभावदर्शनाद् नैताभिश्श्रुतिभिरैकान्त्येन वर्णानामुपादानत्वं वक्तुं शक्यते। यद्यपि 'हकारस्सर्वोपादानम्' इत्यत्राप्यकारस्य परतया श्रवणाद् द्वयात्मकस्यैव तत्र पाठाच्च न विरोध इति केचित्। तथाऽपि वर्णानामुपादानत्वे दार्शनिकानां विप्रतिपत्तेर्दर्शनात् सर्वमतसाधारण्येन निर्वाहस्य क्लेशतया तत्तद्वर्णाधिष्ठातृदेवताविशेषवाचकत्वेन निर्वाहोपपत्तेश्च शब्दस्य न द्रव्यत्वम्। तथा 'यस्य वेदाश्शरीरम्' इति श्रुतावपि वेदाभिमानिदेवतैव भगवतश्शरीरमित्यर्थकरणाद्देवतायाश्च 'यस्य चेतनस्य' इत्यादिशरीरलक्षणप्रतिपाद्यशरीरत्वमनवद्यमिति न वेदात्मकशब्दस्य गुणत्वे शरीरत्वान्यथानुपपत्त्या द्रव्यत्वाभ्युपगमस्समुचितः।

'दृश्यन्ते हि शब्दगन्ध' इत्यादि भगवद्यामुनमुनिवचनस्यापि सांख्यादिपरमतोपन्यास एव तात्पर्यम्, न तु शब्दस्य वायवीयद्रव्यत्वं स्वाभिप्रेतम्, यतो हि यामुनमुनेः प्राक्कालिकैर्भट्टपराशरपादैर्वाक्यलक्षणावसरे[3] गगनगुणशब्दादिस्वरूपस्थितीः प्रवर्तयता

---

१. छान्दोग्योपनिषद्—६।२।

२. न्यायसिद्धाञ्जने-पृ० ४०२, काञ्ची-१९४६। ३. तत्रैव-पृ० ४०३।

भगवतैव योग्यार्थ्यैदमर्थ्येन वाक्यप्रवाहस्य पूर्वमेवोपात्तत्वादिति ग्रन्थेन शब्दस्या द्रव्यत्वाभिधानात् तद्विरुद्धतया यामुनमुनिवचनस्य स्वपक्षे शब्दस्य द्रव्यत्वे न तात्पर्य-मुपवर्णयितुं शक्यते; किन्तु परमतोपन्यास एवेति न कश्चिद्विरोधः।

किञ्च आत्मसिद्धिवचनस्य यथाश्रुततया तात्पर्यमङ्गीकृत्य शब्दस्य वायवीय-द्रव्यत्वपक्षेऽपि **'अकारस्सर्ववर्णानाम्'** इत्यादिश्रुतेर्दृष्टिविधित्वमौपचारिकत्वं वा समा-श्रयणीयम्। वेदान्तिनां पक्षे वायुविशेषरूपवर्णानां वायूपादनकत्वासम्भवात् स्पर्श तन्मात्रादेव वायूत्पत्तेस्स्वीकारात्तदुपादानकत्वस्यैवमुक्तत्वात्। तस्माच्छब्दस्य द्रव्य-वत्वपक्षेऽपि श्रुतेर्मुख्यतया निर्वाहानुपपत्तिस्तुल्या। शब्देऽहङ्कारपरिणामित्वव्यप-देशोऽप्यागन्तुकत्वाभिप्रायमात्रेण भगवद्रामानुजाचार्यैरभिहितम्, न त्वहङ्काररूपद्रव्य-स्यैवावस्थान्तरापत्तिरूपः परिणामो विवक्षितः। सत्त्वादिगुणन्यायेन शब्दस्यापि गुण-त्वेन परिणामासम्भवाच्छब्दो गुणः। इत्थमत्र न्यायसिद्धाञ्जने ग्रन्थान्तरापेक्षया नूतनया शैल्या शब्दस्य श्रुत्याचार्यवचनविरोधपरिहारपूर्वकं सयुक्तिकमद्रव्यत्वमुप-वर्णयामासुर्निगमान्तमहादेशिकाः।

अस्मिन्नपि मते शब्दस्य पञ्चभूतगुणत्वस्वीकारान्नैयायिकोक्तदूषणं समानमेव। तस्य च परिहारोऽद्वैत्यभिमतशब्दनिरूपणावसरेऽस्माभिः प्रादर्शि। परमत्र विशिष्टाद्वैते विशेषश्रुतिमवलम्ब्य शब्दस्य द्रव्यत्वतदभावविचारो भङ्ग्यन्तरेणोपन्यस्त इति विशेषोऽनुसन्धेयः।

एतावता प्रबन्धेन नैयायिकानामन्येषाञ्च दार्शनिकानां मतमनुसृत्य यथासम्प्रदायं शब्दस्य द्रव्यत्वं गुणत्वञ्च प्रत्यपादि। तत्र च पूर्वापेक्षयोत्तरेषु पक्षेषु युक्तायुक्तत्वविवेचन-पूर्वकं तत्रत्यविशेषोऽपि प्रादर्शि। अथ नैयायिकाभिमतशब्दनिरूपणावसरे नैयायिकै-र्भाट्टमते यानि दूषणान्युद्भावितानि, तेषां परिहारपूर्वकं भाट्टमीमांसकाभिमतशब्द-तत्त्वमुपपादयामः।

**भाट्टमते नैयायिकोक्तदूषणपरिहारः**

यदुक्तं वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दात् शब्दोत्पत्तिमङ्गी-कृत्य शब्दप्रत्यक्षोपपत्तेर्न शब्दस्य विभुत्वप्रयुक्तं द्रव्यत्वमिति। तत्रेदं चिन्त्यते— **'शब्दश्शब्दान्तरं प्रसूते'** इत्यत्र कोऽपि कार्यकारणभावो न दृश्यते; किन्तु श्रोत्रेन्द्रियस्य प्राप्यकारितया तेन दूरस्थशब्दग्रहणानुपपत्त्या शब्दस्य शब्दान्तरारम्भकत्वमभ्युप-गन्तव्यम्, तदपेक्षया लाघवेन शब्दस्य विभुत्वमङ्गीकृत्य श्रोतृसंस्कारद्वारा ग्रहणनियम एव समीचीनः, यतो ह्युत्पत्तिपक्षे बहूनां शब्दानामुत्पत्तिर्वाच्या सा चादृष्टपूर्वेति महद्गौरवम्।

न च भवत्पक्षेऽन्वयव्यतिरेकवशाच्छाब्दबोधानुकूलतया श्रोत्रे प्रतिपुरुषमदृष्टः कश्चन संस्कारो ग्रहणनियमोपपत्त्यर्थं कल्प्यते। नैयायिकैस्तु तत्स्थाने शब्दस्य शब्दान्त-

रोत्पत्तिशक्तिः कल्प्यत इत्यविशेष इति वाच्यम्। एवमपि प्रागनुपजातपश्चादुपजातशब्दोपलम्भानुपपत्त्याऽवश्यं कल्पनीये कस्मिंश्चिच्छब्दोत्पत्तेर्निषेधात् संस्कारकल्पनाया एव युक्तत्वात्।

अपि च परतन्त्रैकस्वभावत्वं गुणलक्षणं यथा घटादिद्रव्यस्थरूपादेराश्रयवृत्तित्वे-नैवोपलम्भात्तेषां गुणत्वमुपपन्नम्। शब्दस्य तु पारतन्त्र्येणानुपलम्भात् '**शब्दो वर्तते**' इत्येवं स्वातन्त्र्येण प्रतीतेश्च न गुणत्वं युज्यते।

किञ्च रूपादिवदेव शब्दस्य शब्दान्तरारम्भकत्वं वक्तव्यम्। तत्र चारम्भवाद एव कारणगतरूपं कार्यगतरूपजनकं भवतीति रूपस्य दृष्टान्तत्वं सम्भवति। अस्माभिस्त्ववस्थाभेदमनुसृत्य तन्तुगतरूपादिगुणा एव तन्तुषु पटीभूतेषु पटगुणतां भजन्त इत्यभ्युपगमान्न तद्दृष्टान्तेन शब्दान्तरारम्भकत्वं युज्यते।

शब्दोत्पत्तिपक्षेऽयमेवान्त्यश्शब्द इत्यपि निर्णयो वक्तुं न शक्यते। अभिव्यञ्जकत्वपक्षे मरुतां द्रव्यत्वेन वेगवत्वाद् यावद्वेगं मरुद्गच्छति तावत्पर्यन्तमेव शब्दस्य श्रवणं भवति, वेगक्षये च शब्दश्रवणाभाव इति युज्यते। गुणत्वपक्षे च शब्दस्य वेगवत्वाभावेन तथा वक्तुमशक्यतया शब्दान्तराणि कुर्वन्तश्शब्दाः कथञ्च विरमन्तीत्यत्र नियामकाभावात्। शब्दस्य गुणत्वे तस्यामूर्ततया मूर्तद्रव्ययोरेव सप्रतिघत्वनियमादव्यवधायकस्य कुड्यादेरपि शब्दजन्यशब्दोत्पत्तिप्रतिबन्धकत्वासम्भवात् कुड्यसत्त्वेऽपि शब्दोपलब्धिप्रसङ्गः। शब्दस्याकाशगुणत्वेन कुड्यमध्ये चाकाशाभावेन नोपलब्धिरित्यपि न सुवचम्। शब्दसमवायिकारणतया भवदभिमतस्याकाशस्य विभुत्वेन कुड्यमध्येऽपि स्थितेरनपायात्। अथैतत्परिजिहीर्षयाऽऽवरणात्मककुड्यादिद्रव्यसंयोगरहितमाकाशमेव शब्दजन्मनि समवायिकारणमित्युच्यते, चेत्, तादृशस्याकाशविशेषस्य समवायिकारणत्वे प्रमाणाभावादनुपपन्नम्।

यथोक्तं श्लोकवार्त्तिके भट्टपादैः—

**आरम्भप्रतिबन्धोऽस्य न च कुड्यादिभिर्भवेत्।**
**न ह्यमूर्तस्य सद्भावो मूर्तमध्ये विहन्यते**[1]॥ इति।

किञ्च वीचीतरङ्गन्यायेनाऽपि शब्दस्य न शब्दान्तरजनकत्वम्। तत्र तु वीच्या मूर्तत्वात्क्रियावत्वाद्वेगवत्वाच्च वीच्यन्तरोत्पादकत्वं शब्दस्य च तथाऽभावान्न तत्सदृशत्वम्। यदुक्तं शब्दशब्दान्तरारम्भकः, गुणत्वाद् रूपवदिति, तत्र हेतोः शब्दो न शब्दान्तरारम्भकः शब्दत्वादन्त्यशब्दवदिति प्रत्यनुमानेन सत्प्रतिपक्षितत्वेन न शब्दान्तरारम्भकत्वं सिद्ध्यति। तथा भेरीदण्डसंयोगो वेणुदलविभागो वा न शब्दजनकः, संयोगविभागत्वात् तन्वादिसंयोगविभागवदित्यनुमित्या भेरीदण्ड-

---

१. श्लोकवा० पृ० ५३, तारा पब्लिकेशन्स १९७८ वाराणसी।

संयोगादीनां न शब्दोत्पत्तिजनकत्वं सम्भवति। तस्माच्छब्दो विभुर्द्रव्यञ्च। विभुत्वे चाभिव्यञ्जकबलादेव ग्रहणनियमस्संपत्स्यत इति न कश्चिद् दोषः।

**उदयनाचार्योक्तदूषणपरिहारः**

यदुक्तं न्यायकुसुमाञ्जलौ—**'शब्दो न द्रव्यं बहिरिन्द्रियव्यवस्थाहेतुत्वादित्यनुमानेन द्रव्यत्वसाधकस्य साक्षात्सम्बन्धेन गृह्यमाणत्वहेतोस्सत्प्रतिपक्षदोषवत्तया न शब्दस्य द्रव्यत्वं सिद्ध्यति'** इति तत्रेदमुच्यते—यादृशं द्रव्यमेकेनैवेन्द्रियेण गृह्यते, तादृशद्रव्यविशेषग्राहकत्वेनैव बहिरिन्द्रियाणां परस्परव्यावृत्तेस्सम्भवान्नात्र शब्दस्य बाह्येन्द्रियव्यावर्तकतया विशेषगुणत्वसिद्धिः। न च योग्यरूपादिविशेषगुणग्राहकत्वेनैव द्रव्यविशेषग्राहकत्वं बहिरिन्द्रियाणां वक्तव्यम्। अन्यथा अनुद्भूतरूपवत्त्वेऽपि द्रव्यस्य चाक्षुषप्रत्यक्षत्वापत्तिः सुषुप्त्यवस्थायामप्यात्मनो मनोग्राह्यत्वापत्तिश्च स्यात्। अतः स्वयोग्यविशेषगुणरहितद्रव्यविशेषग्राहकत्वं चक्षुरादीन्द्रियाणां न सम्भवतीति विशेषगुणयोग्यतामाश्रित्यैव द्रव्यविशेषग्राहकत्वस्य वक्तव्यत्वाच्छब्दस्य गुणत्वसिद्धिरिति वाच्यम्, आकाशादीनां नीरूपत्वेऽप्यनुभवानुरोधेनास्माभिः प्रत्यक्षत्वस्वीकारात्, चाक्षुषप्रत्यक्षसामान्ये योग्यरूपादिविशेषगुणस्य कारणत्वानभ्युपगमाच्च नात्र शब्दस्य बहिरिन्द्रियव्यावर्तकतया गुणत्वं युज्यते। अनुद्भूतरूपवत्त्वेऽपि द्रव्यस्य चाक्षुषत्वापत्तिवारणं तु प्रतिबन्धकाभावदिसहितसामग्रीबलादेव भाव्यमिति शब्दस्य न गुणत्वं सञ्जाघटीति। एवञ्च साक्षात्सम्बन्धेन गृह्यमाणत्वहेतुकानुमित्या शब्दस्य द्रव्यत्वमक्षुण्णमिति।

**शब्दस्य द्रव्यत्वे न्यायमञ्जरीग्रन्थोक्तदूषणं तत्परिशीलनञ्च**

अथ न्यायमञ्जर्यां जयन्तभट्टाचार्योक्तं शब्दस्य गुणत्वं तत्र भाट्टैः प्रतिपादितसमाधिश्चाधिकृत्य प्रस्तूयते। तथाहि—लोके तावद् द्रव्यं नित्यमनित्यञ्चेति द्वेधा वर्तते। तत्राकाशपरमाण्वादिरूपनित्यद्रव्यं स्वातन्त्र्येणैव विद्यते, न तु किञ्चिद्द्रव्यसमवायिकारणकम्। अनित्यघटकार्यं तु मृत्कपालाद्यनेकद्रव्यसमवायिकारणकं दृश्यते शब्दस्य चाकाशरूपैकद्रव्यसमवायिकारणकतयोभयद्रव्यविलक्षणत्वेन न तन्न्यायेन शब्दा द्रव्यं भवितुमर्हति। एवञ्च शब्दो न द्रव्यम्, एकद्रव्यत्वादित्यनुमित्याद्रव्यव्यावृत्तिः। तथा शब्दे परिस्पन्दरूपक्रियाविलक्षणत्वस्य प्रत्यक्षसिद्धत्वाच्छब्दो न कर्म। सत्तावत्वशब्दत्वादिसामान्यवत्वाच्च न स सामान्याद्यात्मकः। इत्थञ्च परिशेषाद्गुण इति।

तथा च ग्रन्थसन्दर्भः—**'किमेतर्हि शब्दस्य गुणत्वे प्रमाणम्, परिशेषानुमानमिति ब्रूमः'**[1] इति। अत्र भाट्टमीमांसकाः शब्दो द्रव्यम्, साक्षात्सम्बन्धेन गृह्यमाण-

---

१. न्यायमञ्जरी–पृ० ५६६–मैसूरविश्वविद्यालयः, १९६१।

त्वादिति प्रत्यनुमानेनैकद्रव्याश्रितत्वहेतोः सत्प्रतिपक्षिततत्वेन न तद्बलाच्छब्दस्य गुणत्वं सिद्धयति। किञ्च 'शब्दः'. 'शब्दः' इत्येवं सर्वत्र स्वातन्त्र्येणैव शब्दस्य प्रतीते शब्दे एकद्रव्याश्रितत्वस्यैवासिद्धत्वान्न तद्धेतुना शब्दस्य गुणत्वं साधयितुं युज्यते। तस्माच्छब्दस्य द्रव्यत्वमनवद्यमिति भावः।

**उपसंहारः**

अत्रेदमनुसन्धेयम्—सर्वोऽपि शब्दोऽनित्य आकाशगुणभूतश्च। तस्य च वोची-तरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दाच्छब्दोत्पत्तिमङ्गीकृत्य श्रोत्रेन्द्रियग्राह्यत्व-मिति नैयायिकानामाशयः। अस्मिन् पक्षे चाऽऽद्यस्य शब्दस्य कण्ठताल्वादिव्यापार-जन्यत्वम्, उत्तरेषां द्वितीयादिशब्दानां पूर्वपूर्वशब्दोत्पाद्यत्वम्, अन्त्येतरस्य स्वकार्य-नाश्यत्वम्, अन्त्यस्य तु स्वस्यैव स्वनाशकत्वम्, अथवा सुन्दोपसुन्दन्यायेन, अन्त्यस्तु—उपान्त्येन, उपान्त्यस्तु—अन्त्येन वा नश्यतीतीमे विशेषा अनुसन्धेयाः।

**प्राभाकरमीमांसकास्तु** तार्किकसरणिमनुसृत्य शब्दस्य बाह्यैकेन्द्रियग्राह्यत्वेन गुणत्वमुपवर्णयन्तो भाट्टसंमतं द्रव्यत्वं निराचक्रुः। परं तु भाट्टवदेव **'सोऽयं गकारः'** इत्यबाधितप्रत्यभिज्ञाबलाच्छब्दस्य नित्यत्वमुपपादयन्ति। एतस्मिन् पक्षेऽपि शब्दस्य गुणत्वविषये नैयायिकतुल्यत्वं विभावनीयम्।

**अद्वैतवेदान्तिनस्तु** पञ्चीकरणप्रक्रिययैव भूतानामुत्पत्त्यङ्गीकाराच्छब्दः पञ्चभूत-गुणः, न त्वाकाशमात्रगुण इत्याशेरते।

**विशिष्टाद्वैतवेदान्ते** निगमान्तमहादेशिकप्रभृतयो निरुक्तरीत्यैव शब्दस्य पञ्च-भूतगुणत्वमुपवर्णयन्ति। श्रीभगवद्यामुनमुनिप्रभृतयस्तु द्रव्यत्वमिच्छन्ति। परमत्र निगमान्तमहादेशिकैर्न्यायसिद्धाञ्जने सर्वेषामाचार्यवचनानां स्वाभिमतगुण-(अद्रव्यत्व)-अनुकूलतया तात्पर्यमुपवर्ण्य शब्दस्याद्रव्यत्वं निरटङ्कीति विशेषः।

**भाट्टास्तु** वर्णात्मकस्य शब्दस्य द्रव्यत्वं विभुत्वं नित्यत्वं च, ध्वन्यात्मकस्य तु गुणत्वमनित्यत्वं चेति वदन्ति। तत्र च वर्णात्मकशब्दस्य ध्वनिरभिव्यञ्जकः, स च वायुगुण इति केचित्। वायुरेवेति भाष्यकाराणां शबरस्वामिपादानामाशयः। मते चास्मिन् शब्दस्य द्रव्यत्वे प्राधान्येन नैयायिकैरुद्भावितानां दूषणानां यथाशक्ति-परिहारोऽस्माभिः प्रादर्शि।

परमत्र सर्व एव दार्शनिकाः स्वस्वपक्षानुगुणतयाऽनुभवं युक्तिञ्च प्रदर्श्य स्वीयं पक्षं परिपोषयितुं यतन्ते। तावता शब्दस्य द्रव्यत्वमेव वरम्, न तु गुणत्वमिति न सुवचम्। यथोक्तं निर्विकल्पकप्रत्यक्षनिरूपणावसरे जयन्तभट्टाचार्यैः—

प्रत्यक्षविषयेऽप्येताश्चित्रं विप्रतिपत्तयः ।
परोक्षार्थे हि विमतिः प्रत्यक्षेणोपशाम्यति ॥
प्रत्यक्षे हि समुत्पन्ना विमतिः केन शाम्यति ।
इदं भाति न भातीति संविद्विप्रतिपत्तिषु ॥
परप्रत्यायने पुंसां शरणं शपथोक्तयः'[1] ॥ इति ।

एवं चैतत्सिद्धम्—तत्तन्मतरीत्या यथायथं द्रव्यत्वगुणत्वयोरङ्गीकारेऽपि न क्षतिरिति, परं तु शब्दस्य द्रव्यत्वपक्षे नैयायिकोक्तदूषणानां परिहृतत्वाद् भाट्टपक्षो निराबाध इति न्यरूपि ।

अत्र च निबन्धे वैयाकरणोक्तशब्दतत्त्वं तत्र तत्र बहुषु स्थलेषु तस्य विचारितत्वान्नेह प्रस्तुतम् । मीमांसकाभिमतशब्दतत्त्वेऽपि नित्यत्वानित्यत्वविचारं ग्रन्थगौरवभियाऽपहाय द्रव्यत्वगुणत्वमात्रमधिकृत्य यथासिद्धान्तानुगुणं विवेचितमिति सर्वमनाकुलमिति शम् ।

१. न्यायमञ्जरी–पृ० २५२, मैसूरविश्वविद्यालयः, १९६७ ।

• • •

लघु-ग्रन्थमाला

[ ३८ ]

श्रीदीपकघोषप्रणीतः

# अभावविमर्शः

कुलपतिश्रीगौरीनाथशास्त्रि-
प्रणीतोपोद्घातेन समलङ्कृतः




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वि० सं० २०४०

# प्रस्तावना

यथा महर्षिगौतमप्रणीतन्यायशास्त्रस्यादिमं सूत्रं प्रमाणादिपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति पदार्थनिरूपणं दुःखपङ्कनिमग्नस्य जागतो निःश्रेयससिद्धये प्रावर्तिष्ट, तथा द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसमिति सूत्रयन् भगवान् कणादोऽपि स्वशास्त्रस्य निःश्रेयसमेव प्रयोजनमिति स्पष्टमाचष्टे। उभयोरपि समानतन्त्रत्वं भाष्यकारैः न्यायभाष्ये तत्र तत्र व्यवह्रियते च। अत्र पदार्थनिरूपणप्राधान्यं न्याये तु उद्देशो लक्षणं परीक्षा इति वदता परीक्षाप्राधान्यं सभासु प्रतिपक्षनिरासपूर्वकं वैदिकमतसंरक्षणस्य प्राधान्यम्। अत एव तत्रभवान् श्रीजयन्तभट्टो वेदप्रामाण्यदृढीकरणं न्यायशास्त्रं विना न सेत्स्यति। तदेव चात्र विस्तरेण निर्वर्त्यते इति साटोपं जगाद।

यद्यपि पदार्थोद्देशसूत्रे षडेव पदार्था गण्यन्ते समवायान्ताः; तथापि तत्रभवान् कणादः स्वशास्त्रे अन्यत्र चाभावं व्यवहरन् अभावस्य सप्तमपदार्थत्वं मन्यत एव, प्रतियोगिनिरूपणाधीनत्वात्तु न द्रव्यादिभिस्सह प्रोक्तवानिति गम्यत इति टीकाकृतामुदयनाचार्याणां वचनात्।

अभावं लक्षयन् उदयनाचार्यो लक्षणावल्यां नञर्थविषयप्रत्ययविषयोऽभाव इत्याह। यद्यपि घटाभावो नास्तीत्यादिप्रत्ययस्य विषयो घटरूपो भाव एव, तथापि अभावाभावोऽतिरिक्त एव तृतीयाभावस्य प्रथमाभावरूपत्वान्नानवस्थेति मताभिप्रायेणेदमुक्तम्। प्रागभावलक्षणं च उत्तरैकावधिरभावः प्रागभाव इत्याह, ध्वंसप्रतियोगित्वे सति अभावत्वमिति तदर्थः।

न च ध्वंसलक्षणे पूर्वैकावधिरभाव इति लक्षितप्रागभावप्रतियोगित्वरूपजन्यत्वनिवेशनेन अन्योन्याश्रय इति वाच्यम्, ध्वंसत्वं कालिकसम्बन्धानुयोगित्वमिति लक्षणाभ्युपगमात् प्रागभावत्वं तु ध्वंसप्रतियोगित्वे सति अभावत्वमेव अन्योन्याभावविषये तार्किकेषु विप्रतिपत्तिर्विद्यते। केचन पृथक्त्वगुणमभ्युपगम्यान्योन्याभावं निराकुर्वते। अन्योन्याभावं परित्यज्य पृथक्त्वमात्राङ्गीकारे एतद्रूपं एतद्घटात् पृथगिति प्रत्ययानुपपत्तेः रूपे गुणे पृथक्त्वगुणाभावात्। सामानाधिकरण्यसम्बन्धेन रूपरसयोः एकत्रसत्ववत् पृथक्त्वरूपयोः सामानाधिकरण्याद् रूपे घटगतपृथक्त्वं भासते इत्युच्येत यदि, तदा एतद्रूपमेतद्रूपात् पृथगित्यपि प्रयोगापत्तिः सामानाधिकरण्येन पृथक्त्वसत्त्वात्। अतोऽन्योन्याभावमङ्गीकृत्य उक्तप्रयोगाणां पृथक्शब्दस्यान्योन्याभावलक्षणाया उपपादनमेव ज्यायः, इति दिनकरः।

**मुक्तावली**कारास्तु पृथक्त्वान्योन्याभावयोरभेदे घटात्पृथगितिवत् 'घटो न' इत्यत्रापि पञ्चमीप्रसङ्गादित्याहुः । इदं तु तत्तद्विभक्तेः तत्तत्पदप्रयोगनिमित्तत्व-कल्पनयोपपद्यते ।

**नव्या**स्तु अन्योन्याभाव एव पृथक्त्वम्, न तु गुणान्तरम् । न च घटः पटो नेत्यत्र पञ्चम्यापत्तिः, तस्य **अन्यारादितरर्ते** इति सूत्रेणान्यादिपदप्रयोग एव साधुत्वात् । नञस्तु अन्योन्याभाव एवार्थः, न तु तद्विशिष्टो नञर्थभेदस्यानुयोगितासम्बन्धेनान्वयादेव तत्सिद्धेः निपातत्वात्तस्य इत्यादिना दोषनिस्तारादित्याहुः ।

त्रयाणां प्रागभावध्वंसात्यन्ताभावानां संसर्गाभाव इति नाम । तत्र ध्वंसस्य पूर्वकालावच्छिन्नप्रतियोगिताकत्वं प्रागभावस्योत्तरकालावच्छिन्नप्रतियोगिकत्वं प्राचीनैरुक्तम्, तत्पक्षे सर्वेषां संसर्गावच्छिन्नप्रतियोगिताकत्वं सूपपादम् । तदनङ्गीकारपक्षे संसर्गपदं संसर्गपदपूर्वकपरं तस्याभेदेनाभावपदार्थेऽन्वयात् त्रयाणां संसर्गाभावपद-बोध्यत्वोपपत्तिः । अन्योन्याभाव एव भेदो नातिरिक्तः । अत्यन्ताभावस्तु सामान्य-धर्मावच्छिन्नप्रतियोगिताकः सामान्याभावः । सामान्यधर्मव्याप्यतत्तद्धर्मविशेषावच्छिन्न-प्रतियोगिताको विशेषाभावः । तयोर्भेद एव यत्किञ्चिद्घटाभावे सत्यपि घटो नास्तीत्यप्रतीतेः ।

अत्र च विशेषधर्मावच्छिन्नप्रतियोगितानिरूपकाभावेषु सर्वेषु सामान्यधर्मावच्छिन्न-प्रतियोगिताकत्वस्य व्यासज्यवृत्तित्वाभ्युपगमादेवातिप्रसंगवारणसम्भवाद् न सामान्य-धर्मावच्छिन्नप्रतियोगिताकाभावोऽतिरिक्तोऽङ्गीकरणीय इति श्रीमधुसूदनसरस्वत्य आहुः । विचारितश्चायं पक्षस्तत्त्वचिन्तामणौ सामान्याभावप्रकरणे । एकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेरुभयाभावः प्रत्येकादन्यः । संयोगादिसम्बन्धावच्छिन्नाभावा अवच्छेदक-सम्बन्धभेदाद् भिन्ना एव । एवं पूर्वक्षणवृत्तित्वविशिष्टवह्न्यभावोऽप्यतिरिक्त एव केवलसत्वेऽपि विशिष्टं नास्तीति प्रतीतेरिति न्यायमतम् ।

अद्वैतसिद्धिकारास्तु अभावस्य सम्बन्धावच्छिन्नप्रतियोगिताकत्वं नाभ्युपेयम्, संयोगेन घटवति देशे समवायेन घटाभावो घटसमवायाभावविषयकत्वेनोपपद्यते; अन्यथा सम्बन्धभेदेनाभावभेदकल्पनागौरवात् । एवं संयोगतदभावयोर्न समानाधिकरणत्वम् । मूले वृक्षः कपिसंयोगी, नाग्रे इत्येतादृशप्रतीतिः मूलाग्रयोरेव संयोगाभावविषयिणी, न वृक्षे ।

व्यधिकरणधर्मावच्छिन्नप्रतियोगितास्वीकारात् संयोगेन रूपं नास्तीति प्रतीतौ रूपीयसंयोगाप्रसिद्धावपि रूपीयत्वेन संयोगाभावप्रतीत्युपपत्तिः । धर्मावच्छिन्नप्रति-

योगिताकत्वं त्वावश्यकमेव, अन्यथा ह्रदे वह्निर्नास्तीति प्रतीतौ वह्नेः द्रव्यत्वाव-च्छिन्नप्रतियोगिताकत्वसम्बन्धेन भानमुपगम्य भ्रमत्वापत्तेः। यद्यपि वैशेषिकसूत्रभाष्ययोः अभावपदार्थमधिकृत्य न विचारोऽक्रियत प्राचीनैः; तथापि वैशेषिकभाष्यटीकायां किरणावल्यामुदयनाचार्यैरभावस्तु स्वरूपवानपि पृथङ् नोद्दिष्टः, प्रतियोगिनिरूपणा-धीननिरूपणत्वात्, न तु तुच्छत्वात्। उत्पत्तिविनाशचिन्तायां प्रागभावप्रध्वंसाभावयोः वैधर्म्ये च इतरेतराभावात्यन्ताभावयोस्तत्र तत्र निदर्शयिष्यमाणत्वादिति वदन्ति।

सर्वेऽप्यभावाः प्रत्यक्षाः इह घटो भविष्यतीति प्रागभावस्य घटो ध्वस्त इति ध्वंसस्य, घटः पटो नेत्यन्योन्याभावस्य भूतले घटो नास्तीत्यत्यन्ताभावस्य ग्रहणात् तथापि प्रतीतेरन्योपपादनात् प्रागभावे अन्यदेव प्रमाणमुच्यते दार्शनिकैः।

यद्यपि इह घटो भविष्यतीति प्रतीतिर्न मानं भविष्यत्त्वस्य वर्तमानकालध्वंसा-धिकरणकालोत्पत्तिकत्वरूपत्वात् तथापि। उत्पन्नस्य घटस्य द्वितीयक्षणेऽपि घटजनक-सामग्रीसमवधानात् पुनरुत्पत्तिवारणाय प्रागभावः कल्पनीयः, तत्सद्भावे च उत्पन्न-घटप्रागभावस्य तद्घटोत्पत्त्यैव निवृत्तत्वात् प्रागभावघटितसामग्र्यभावान्न पुनरुत्पत्तिः। न च जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वान्न तादात्म्येन प्रतिबन्धकत्वान् न पुनरुत्पत्तिरिति वाच्यम्, यत्रैतद्घटकपालाभ्यां पुनः घटान्तरमुत्पद्यते, तत्र ततः पूर्वं तद्घटोत्पत्तिवारणाय तदावश्यकत्वात् तत्रात्यन्ताभावघटितसामग्रीसत्वात्। अतः प्रागभावस्वीकार आवश्यकः। अपि च पाकजस्थले रूपरसगन्धस्पर्शानामेकदोत्पत्ति-स्वीकारात् तत्र रूपादिकं प्रति तत्तत्प्रागभावो हेतुरित्यङ्गीकरणीयम्, तत्र स्वाश्रये प्रति-बन्धकद्रव्याभावसत्वेन द्रव्यप्रतिबन्धकत्वाभ्युपगमनेनानिर्वाहम्।

**प्राभाकरास्तु** अभावस्याधिकरणस्वरूपत्वमुपगच्छन्ति। तच्च केवलाधिकरण-स्वरूपमाहुः, तन्न, तत्र कैवल्यं घटाभाववत्वमेव, अन्यथा घटवत्यपि तदभावप्रतीत्या-पत्तेरित्याहुः। बहुष्वधिकरणेष्वभावत्वकल्पनापेक्षया एकस्मिन्नभावे तदुपगमे लाघव-माहुः। भाट्टास्त्वतिरिक्तमभावमुपगच्छन्ति।

श्रीशङ्करभगवत्पादास्तु बृहदारण्यकभाष्ये इत्थमाहुः—पटे घटभेदः पटादन्यश्चेत् तद्भेदोऽपि तथेत्यनवस्थापत्तिः। अतो घटभेदः पट इत्येवाङ्गीकर्त्तव्यम्। एवं प्रागभावध्वंसात्यन्ताभावानामपि तत्तदधिकरणस्वरूपत्वमेवेत्याहुः, आस्तां तावत्।

आयुष्मता श्रीदीपकघोषमहाशयेन् लिखितोऽयं ग्रन्थः सर्वथा समीचीन इति नः प्रतिभाति। एतेन भूयांसं श्रमं स्वीकुर्वता गहनगहनं नैयायिकसम्मतम्

अभावस्वरूपं प्रतिपादयता शास्त्ररसिकानां विदुषाम्, अन्तेवासिनाञ्च महानुपकारोऽनुष्ठितः।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य रजतजयन्तीमहोत्सवमुपलक्ष्य 'सारस्वती सुषमा' इत्याख्याया अनुसन्धानपत्रिकाया विशेषाङ्के 'लघुग्रन्थमालायाम्' एकोनचत्वारिंशत्प्रसूनतया मुद्रितोऽयं ग्रन्थः साम्प्रतं स्वतन्त्रग्रन्थरूपेण प्रकाश्यते।

लेखकोऽयं वयसा नवीनोऽपि ज्ञानेन प्रौढः, तं वयम् आशीर्भिर्योजयामः। आशास्महे आयत्यामपि प्रमेयान्तरमधिकृत्य एष अन्यानपि ग्रन्थान् प्रणेष्यतीति—

काश्याम्,<br>
महाशिवरात्रिपर्वणि,<br>
वि० सं० २०४०

श्रीगौरीनाथशास्त्री

# कृतज्ञतानिवेदनम्

अभावविषये यद्यपि शास्त्रकृद्भिस्तथा पण्डितप्रकाण्डैश्चैतावता पाण्डित्य-पूर्णमालोचनं कृतम्, तथापि नैयायिकरीतिमाश्रित्य नव्यन्यायादिपर्य्यालोचनेनैकत्र सम्यगालोचना प्रायशो नैव परिलक्ष्यत इति तथाविधालोचनार्थं समुत्सुकचेतसैतत्प्रबन्ध-रचने कुतूहलं मम मनसि सञ्जातम्; किन्तु समुपजातेऽपि तथाविधाभिलाषे ममा-शक्तिकत्वेन स्वाभीष्टसम्पादनेऽसामर्थ्यं मे विचिन्त्य केवलं दुःखमेवाभूत्। अथ मदीयाचार्य्याणां पुरतो ममाभिलापप्रख्यापनानन्तरं तेषामुपदेशेन सर्वथाऽऽनुकूल्यदान-प्रतिश्रुत्या च सञ्जातसमाश्वासोऽहं निबन्धरचनायां प्रवृत्तोऽभवम्। तेषामेवानु-कूल्येन निबन्धोऽयं विद्वज्जनसमीपे समुपस्थापयितुं समर्थोऽस्मि।

एतदवसरे येषां येषां सहृदयानामाचार्य्यप्रवराणां कृपया, स्नेहेन, उपदेशेन चैतन्निबन्धरचने समर्थोऽहम्, तांस्तान् मान्यमान्यान् प्रति कृतज्ञतापूर्णं सश्रद्धं च भूयो भूयो नमस्कारपर्यायो विज्ञाप्यते। तत्रादौ **सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य** कुलपतीनां परितो विश्रुतकीर्त्तीनां परममान्यानां मदीयाचार्य्याणां **श्रीगौरीनाथशास्त्रि-महोदयानाम्** एतद्ग्रन्थप्रकाशनविषये बहुमूल्यं कृपामयमवदानं सप्रश्रयं स्मारं स्मारं तत्रभवतां चरणकमलयोर्निवेद्यते मामकाः सश्रद्धप्रणामाञ्जलयः।

तथैव च **कुरुक्षेत्रविश्वविद्यालयस्य** सुरभारतीविभागीयप्राक्तनप्रधानाध्यापकानां विद्वद्वृन्दसुगृहीतनामधेयानां **डॉ० गोपिकामोहनभट्टाचार्य्यमहोदयानां** सहृदयानु-कूल्यमृते ग्रन्थोऽयं कथमपि न लभेताणुमात्रमपि प्रकाशनसफलतामिति तेभ्योऽपि निवेद्यते हार्दिकश्रद्धार्घ्यम्।

अपि च मद्गुरुवर्याणां भारतीयदर्शने लब्धदर्शनानां पण्डिताग्रगण्यानां यादव-पुरविश्वविद्यालयसुरवाणीविभागीयप्राक्तनरीडरपदमलङ्कुर्वाणानां **श्रीमद्विधुभूषणभट्टा-चार्य्यमहोदयानां** सर्वदाऽनलसं समुपदेशं विना नैतस्य निबन्धस्य विरचनमेव सम्भावितमभवदिति तेभ्यः प्रदीयते सबहुमानमान्तरप्रणामः, प्रदीयते च प्रणामो हृदयश्रद्धाञ्जलिनिवेदनपुरस्सरं निर्मथितभारतीयदर्शनरत्नाकररत्नान् कलिकाता-राष्ट्रियसंस्कृतमहाविद्यालयस्थमहाचार्य्यविभागाध्यापकान् मदीयगुरुवर्य्यान् पण्डित-प्रवरान् **श्रीयुक्तश्रीमोहनभट्टाचार्यतर्कवेदान्ततीर्थमहोदयानुद्दिश्यापि**—ययोः सुदीर्घ-कालीनं निरालस्यमध्यापनमन्तरेण नाशक्यत महार्हतत्त्वरत्नान्वेषणकामेन मया संशयादिप्रत्यूहनिरसनपूर्वकं दुरवगाहभारतीयदर्शनग्रन्थरत्नाकरे सुखमवगाहनमित्यहो सानन्दमनुभवामि जन्मान्तरीणसुकर्मफलमिह जन्मनीति—

**कालिकातायाम्**
**वसन्तपञ्चम्याम्**
**वि० सं० २०४०**

आचार्य्यस्नेहधन्यः

**दीपकघोषः**

# विषयानुक्रमणी

## प्रथमोऽध्यायः



## द्वितीयोऽध्यायः

## तृतीयोऽध्यायः



## चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः

श्रीदीपकघोषप्रणीतः

# अभावविमर्शः

❋ ❋ ❋

## प्रथमोऽध्यायः

अध्यायवर्णिता मुख्या विषयाः—

(क) अभावचिन्तने बीजम्

(ख) अभावशब्दार्थविचारः

(ग) नञः प्रकारभेदकथनम्

(घ) अभावशब्दशक्यतावच्छेदकनिर्णयविचारः

### (क) अभावचिन्तने बीजम्

**१. मोक्षोपयोगिपदार्थतत्त्वनिर्धारणम् अभावोपजीवकम् इति अभावज्ञानं परमपुरुषार्थसाधनानुकूलम्—**

आस्तिक-नास्तिकभेदोपपन्नेषु लोकायतवर्जभारतीयदर्शनेषु मोक्ष एव परमपुरुषार्थतया निरूपितः। स च मोक्षो दुःखात्यन्ताभावो वा, नित्यसुखाभिव्यक्तिर्वा इत्यन्यदेतत्[1]; अपि तु परमपुरुषार्थतया मोक्ष एव सर्वेषां दर्शनशास्त्राणां चरमप्रतिपाद्यतया व्यवस्थितः। तत्र च तापत्रयदन्दह्यमानानां प्राणिनां मोक्षलाभः कथं भवेदित्येव दर्शनशास्त्राणां मौलचिन्तनम्। तत्र च अनुभूयमानानां सर्वेषां पदार्थानां तत्त्वज्ञानाद् मोक्षो भवेदित्यपि न कस्यचन दर्शनस्य विप्रतिपत्तिः। उक्तं तत्रभवता गौतमेन—**'प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क–निर्णय-वाद–जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानां निःश्रेयसाधिगमः[1]'**।

एवं चाभिहितं कणादपादैरपि—**'धर्मविशेषप्रसूताद् द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान् निःश्रेयसम्'** सांख्यकारिकायामपि तथैव उक्तम्—**'तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्[3]'**।

न केवलम् आस्तिकदार्शनिकैरेव एवमुक्तम्, अपि तु नास्तिकदार्शनिकप्रवरैरपि पदार्थानां तत्त्वज्ञानमेव मोक्षकारणमुक्तम्। तथा च सूत्रम्—**'सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिरिति तद् व्युत्पाद्यते[4]'**।

---

१. न्या० द० २।२।२।  २. वै० द० २।२।४।
३. सां० का० २।  ४. न्यायविन्दुः - २।२।

एवं स्थिते निर्बाधमिदं वक्तुं शक्यते यत् पदार्थानां तत्त्वज्ञानं मोक्षसाधनम् इति। अत एव मोक्षसाधनतत्पराणां दर्शनशास्त्राणां पदार्थतत्त्वज्ञानानुकूलतया पदार्थस्वरूपनिरूपणे विशेषतः प्रयत्नातिशयो दृश्यते।

**२. पदार्थस्वरूपज्ञानम् इतरव्यावृत्तिबुद्धिसापेक्षम्**

तत्र च किं तावत् पदार्थस्वरूपमिति चिन्तायां प्रधानतो विजातीयव्यावृत्ति-मुखेनैव पदार्थस्वरूपविचारो दर्शनशास्त्रेषु सम्यग् व्यवस्थितः। व्यावृत्तिर्नाम तदितरप्रतियोगिकभेदवत्त्वम्, यथा गोपदार्थस्य स्वरूपज्ञानं गवेतरमहिषादिप्राणि-व्यावृत्त्यैव सास्नादिमत्त्वेन बोध्यम्।

न च सास्नादिमत्त्वेनेव गोपदार्थस्वरूपसिद्धौ गवेतरव्यावृत्तिः नावश्यकीति वाच्यम्, गवेतरवैलक्षण्यमेव सास्नादिमत्त्वम् अवगमयति। यत्र च सास्नादिमानयम् इति बुद्धिर्जायते, तत्र न केवलम् अनुगतप्रत्ययहेतुरेव सास्नादिमत्त्वं भवेत्; अपि तु गवेतरेभ्यः व्यावृत्त्य तादृशधर्मयुक्तं गवादिपदवाच्यं वस्तु बुद्धिविषयी भवेत्, अन्यथा सास्नादिमत्त्वम् एवम्भूतेषु प्राणिषु यथा वर्त्तते, तथा अन्यत्रापि वर्त्तते न वेति सन्देह-निरसनं दुरुपपादनं स्यात्, तस्माद् इतरव्यावृत्तिमुखेनैव वस्तुगतं स्वातन्त्र्यं सर्वत्र बुद्धिस्थं भवेत्। व्यावृत्तिस्तु अभाव एव, स च अभावः स्वतन्त्रः पदार्थो वा किञ्चिद् भावान्तरं वा इति विप्रतिपत्तावपि वस्तुस्वरूपनिरूपणतत्परा बुद्धिः अभावमर्यादां नातिक्रमते इति अवश्यं स्वीकार्यम्।

**३. पदार्थस्वरूपज्ञानं लक्षणप्रमाणसाध्यम्, लक्षणं च स्वेतरव्यावृत्तिरूपम्**

किञ्च, वस्तुस्वरूपावगमो वस्तुलक्षणादेव सिध्यति। उक्तं च लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति। इदमप्यत्रावधेयं यद् वस्तुलक्षणप्रयोजनं वस्तुस्वरूपनिर्णयार्थमेव, न तु वस्तुस्वरूपनिर्माणार्थम्। तथा हि सिद्धवस्तुनः अपरस्मै व्यवहारोपयोगित्वेन प्रतिपादनार्थमेव लक्षणप्रयोजनम्। तद्यथा कश्चिज्जनः पृथिवीं स्वरूपतो जानन्नपि कुतश्चिद् व्यामोहात् पृथिवीति न व्यवहरति, तं प्रति विषयसम्बन्धाव्यभिचारेण व्यवहारसाधनार्थमेव पृथिव्याः असाधारणधर्मभूतं लक्षणं कथ्यत इति। उक्तं च न्यायकन्दलीकारेण—'**यो पृथिवीति लोके शृणोति, न जानाति च तस्याः स्वरूपं कीदृगिति, तं प्रति तस्याः स्वपरजातीयव्यावृत्तस्वरूपप्रतिपादनार्थम् असाधारणो धर्मः कथ्यते' इति**'[1]। न्यायकन्दलीकाराभिप्राय एवं समायाति यद् वस्तुलक्षणं सजातीय-विजातीयप्रतियोगिकभेदधीसापेक्षम् इति। तदुक्तम् उद्द्योतकारेण—'**लक्षणस्यतरव्यव-च्छेदहेतुत्वात्। लक्षणं खलु लक्ष्यं पदार्थं समानासमानजातीयेभ्यः व्यवच्छिनत्ति**'[2]। अतो व्यवहारसाधनं समानासमानजातीयव्यवच्छेदो लक्षणार्थं इति निष्कर्षः।

---

१. न्या० क० पृ० प्रकरणम्–पृ० ७०। २. न्या० वा० २।२।३।

### ४. व्यवहारोपपत्तये लक्षणावश्यकत्वम्

एवं स्थिते गोपदार्थस्वरूपस्य अन्यस्मै व्यवहारोपयोगित्वेन प्रतिपादनार्थं गोपदार्थलक्षणं सजातीयपदार्थगवयादिभ्यः, तथा विजातीयपदार्थगवेतरेभ्यश्च व्यवच्छिद्यैव क्रियते। अतो यदेतद् वस्तुनः प्रात्यात्मिकं स्वरूपम्, स एव भेदः, तच्च अपरदर्शनानपेक्षम् इन्द्रियसन्निकर्षादेव प्रतीयमानं प्रत्येकं विलक्षणमेव संवेद्यत इति युक्तमुक्तं न्यायकन्दल्याम्।

अत्रेदं बोध्यम्—सर्वत्रैव प्रत्यक्षेणाधिगतानां पदार्थानाम् इतरभेदान् परान् बोधयितुं लक्षणं प्रतिपादयेत् प्रमाता, स्वयमप्रतिपन्नस्य प्रतिपादकत्वासम्भवात्। भेदो नाम पदार्थानाम् अन्योन्याभावलक्षण इति न्यायवित्सिद्धान्तः, स चानुयोगिप्रतियोगिसापेक्षः। तथा हि यस्य अभावः, यत्र च अभावः, तदुभयग्रहणं विना अन्योन्याभावो न गृह्यते। न हि घटज्ञानं पटज्ञानं चान्तरेण घटप्रतियोगिकपटानुयोगिकभेदः प्रतिपादयितुं शक्यते। अतः प्रतियोग्यनुयोग्युभयोः ज्ञानं विना निषेधानुपपत्तिः। तस्माद् इतरव्यावृत्तिमुखेन पदार्थस्वरूपं प्रतिपादयल्लक्षणं सर्वथैव भेदम् अवगाहते। भेदश्च अवगाहतेऽन्योन्याभावम्। अतः परम्पराक्रमेण लक्षणाद् भेदः, भेदाच्च अभावसिद्धिः।

### ५. लक्षणान्तर्गतभेदज्ञानावश्यकत्ववर्णनम्

अत्रेदं विचार्यते—गोस्वरूपग्रहणकाले किं तदितरभेदगोस्वरूपयोः संकीर्णयोर्ग्रहणम्, आहोस्वित् परस्परविविक्तयोरुयोर्ग्रहणम्। तत्र आद्ये **'गौरश्वो न भवति'** इति प्रतीत्यसम्भव एव। यतो गवाश्वयोर्भेदे गोत्वं च यदि सङ्कीर्णतामापद्येत, तदा गोत्वम् अश्वभेदश्च इति पदार्थद्वयग्रहणासम्भवात् पदार्थद्वयावगाहिनी **'गौरश्वो न भवति'** इति प्रतीतिः नोपपद्यते। यदि पुनः विविक्तयोरेव ग्रहणम्, तदा अन्योन्याश्रयत्वं दुर्वारम्। तथा हि विविक्तयोर्ग्रहणे सति अभावग्रहणम्, अभावग्रहणे सति विविक्तयोर्ग्रहणमिति।

### ६. पदार्थस्वरूपतदितरव्यावृत्तिबोधविचारः

अत इतरभेदमुखेन वस्तुस्वरूपनिर्णयः कथं सम्भाव्यते इति चेत्, उच्यते—भिन्नयोर्वस्तुनोः इतरेतराभावः सिध्यति। भेदश्च वस्तुनिष्ठं यदसाधारणं रूपं तत्स्वरूप एव। तथाविधं स्वरूपम् अपरदर्शनानपेक्षं स्वेन महिम्ना इन्द्रियादिसंयोगद्वारा वस्तुस्वरूपस्य प्रतीतिसम्भवात्। तथा चोक्तं कन्दलीकृता—"यदेतद् वस्तुनः प्रातिस्विकं स्वरूपम्, स एव भेदः, तच्च अपर-दर्शनानपेक्षम् इन्द्रिय-सन्निकर्षमात्रादेव प्रतीयमानं प्रत्येकं विलक्षणमेव संवेद्यते" (न्या० क० पृ० ९२—जलप्रकरणे)। एतेनैतत् सिध्यति यद् गोस्वरूपदर्शनं न अश्वदर्शनादिकम् अपेक्षते, किन्तु यत्र गोस्वरूपं पश्यतोऽपि

प्रमातुः गोशब्दज्ञानं नास्ति, तत्र अश्वे गवि च स्वेन स्वेन आत्मना गृह्यमाणेन तत्तत्स्वरूपनियमार्थम् अन्योन्याभावप्रतीतिर्जायते। अतो वस्तुस्वरूपनिर्धारणार्थं यल्लक्षणं प्रयोक्तव्यम्, तत्रैव अभावचिन्तनं बलादापतितं दार्शनिकेषु।

### ७. पदार्थतत्त्वनिर्धारणम् अभावोपजीवकम्

न केवलं पदार्थतत्त्वविश्लेषणोपायेन अभावचिन्तनं दार्शनिकहृदयराज्यम् अधिरूढम्, अपि तु व्यवहारनिष्णातानां भ्रमप्रमाददोषरहितानां सज्जनानामपि लोकव्यवहारतोऽभावचिन्तनं सिद्धम्। तथा हि लोकानां व्यवहारः **'साम्प्रतम् इदं नास्ति', 'इदं च विनष्टम्', 'इदम् इदं न भवति'** इत्यादिः, तत्र च 'नास्ति' शब्देन किं प्रतीयत इत्येव विश्लेषणीयम्। यद् वस्तु यत्र देशे यत्र काले च विद्यते, तद् वस्तु तत्र तदानीं नास्तीति न केनापि व्यवह्रियते। एवं विद्यमाने वस्तुनि विनष्टप्रतीतिरपि न भवेत्। अत एव न तद्व्यवहारश्च। एवम् इदम् इदानीं न भवतीति, अत्रापि यद् वस्तु यन्न भवतोति व्यवह्रियते, तत्र तद् वस्तु न तत्स्वरूपम् इति सर्वैः प्रतीयते। एवं च सति इदं सर्वाभ्युपेयं यद् वस्तुनो विद्यमानदशायां नास्तीति व्यवहाराभावाद्। वस्तुनः अविद्यमानदशायां तद्व्यवहाराच्च नास्तिपदेन वस्तुसत्त्वं निषिध्यत एव। अयमेव निषेधोऽभावाख्य इति प्रसिद्धिः।

अत एव घटो नास्तीति प्रत्यये नास्तिपदाभिधेयघटप्रतियोगिकाभावस्य सर्वानुभवसिद्धत्वाद् अभावपदार्थस्य प्रतीतिसिद्धत्वं न केनापि वारयितुं शक्यते। किं पुनर्बहुना, न केवलं प्रेक्षावतामेव अभावव्यवहारः लोकप्रसिद्धः; अपि तु पांशुलचरणानां हालिकादिप्राकृतजनानामपि सति वस्तुनि तन्नास्तीति व्यवहाराभावात्, असति च वस्तुनि तन्नास्तीति व्यवहाराच्च वस्तुसत्त्वमेव अभावप्रतीतिम् अवगाहयति।

### ८. पदार्थव्यवहारस्थलेऽपि अभावोपजीवकत्वस्थापनम्

प्रसिद्धं चैतत्—क्षुधार्त्तस्य भोजनेन क्षुन्निवृत्तौ साम्प्रतं मे क्षुधा नास्तीति व्यवहारो बालमूकादीनामपि, अतः कथमपि लोकव्यवहारसिद्धोऽभावो नानङ्गीकर्त्तुं शक्यते। स चाभावः किंस्वरूपः? भावादन्यो वा, भावान्तरं वा इत्यन्यदेतत्, तदग्रे विवेचनीयम्, किन्तु आपामरसाधारणानां सर्वेषामभावः प्रतीतिसिद्धो व्यवहारानुविधायीति सर्वैरेव स्वीकर्त्तव्यम्।

### ९. शास्त्रीयविचारो लोकसिद्धानुभवं नातिक्रमेत्

अत एव अनुभवसाक्षिकस्य अभावस्य स्वरूपपर्यालोचनं शास्त्रकृतामपि सुतरामावश्यकीयम्। न हि लोकानुभवसिद्धपदार्थान् अतिक्रम्य शास्त्रयुक्त्या सर्वानु-

भवविरुद्धं किञ्चित् साधयितुं शक्यते, यतः पदार्थाः खलु स्वे महिम्नि प्रतिष्ठिता वर्त्तन्ते। न हि शास्त्रयुक्त्या पदार्थानां स्वरूपम् आविर्भवति, तिरोभवति वा, अतो ये ये पदार्था यथास्वरूपम् आश्रितास्तिष्ठन्ति, तेषां तेषां पदार्थानामनन्यसाधारणं तत्स्वरूपं प्रेक्षावदनुभवसिद्धं शास्त्रयुक्त्या व्यवस्थापनीयम्। यतः पदार्थानां स्वरूपम् अवलोक्यैव तत्पदार्थस्वरूपविधायिनी चिन्ता प्रवर्त्तते, न तु आदौ यथा यथा चिन्तितम्, तथैव वस्तुस्वरूपं पश्चाद् आविर्भूतमिति कथमपि युक्तिसिद्धम्। केवलं तु भगवान् एव मनसि सङ्कल्पं विधाय पश्चाद् विश्वं सृजति सङ्कल्पानुरूपम्, न तु दार्शनिकानां युक्तिविदां तथात्वं सम्भवति।

**१०. पदार्थस्वरूपनिर्धारणार्थं शास्त्रेषु अभावचिन्तनप्रयोजनम्**

न हि ते दार्शनिका नित्याः परमैश्वर्यमापन्नाः स्वतःसिद्धाः; अपि तु अस्मिन् जगति लब्धजन्मानो विविधविद्याविद्योतितचेतसो मनीषिणस्ते वैचित्र्यपूर्णं जगद् विलोक्य तत्रानुभूयमानानां पदार्थानां स्वरूपनिर्णये बद्धप्रयत्ना भवन्ति, अतः स्वभावतो ये पदार्था यथावस्थिताः, तेषां तेषां स्वरूपम् आलोक्य तत्स्वरूपोद्घाटनानुसन्धित्सा मनीषिणां मानसे पदं विदध्यात्। तद्वशादेव ते स्वकीयचिन्ताप्रसरवशाद् विविधैः भावैः परीक्ष्य तत्त्वनिर्णयं कुर्वन्ति। अत एव ये ये पदार्था लोकानुभवसिद्धाः, तांस्तान् पदार्थान् विहाय शून्यमूला दार्शनिकानां चिन्ता कथमपि न प्रसरति, न वा तच्चिन्ता-वशाद् लब्धजन्मानः पदार्थाः, तस्माद् लोकव्यवहारसिद्धं प्रतीतिसाक्षिकं अभाव-पदार्थम् अनुसृत्य दार्शनिकानां स्वाभीष्टसिद्धय एव अभावविषयको विचारः समापतित इति।

## (ख) अभावशब्दार्थविचारः

न भावः, अभाव इति अभावशब्दनिष्पत्तिः। तत्र नञ् इत्यर्थश्च संसर्गाभावः, अन्योन्याभावश्च इति नञ्वादे दीधितिकृता उक्तम्। संसर्गाभावादयोऽग्रे विचार-यिष्यन्ते। **'इदम् इह नास्ति', 'इदम् इदं न भवति'** इत्यादिप्रतीतिसिद्धपदार्थविशेषः अभावः। एवम्भूतश्च 'अभावः' अभावत्वप्रकारकप्रमाविषयः।

**११. लोकव्यवहारमाश्रित्य अभावशब्दार्थनिरूपणम्**

अत्रेदं बोध्यम्—इदमिह नास्ति, इदमिदं न भवतीति प्रतीतिवैलक्षण्याद् अभावपदशक्यतावच्छेदकं न अभावत्वम्, अपि तु संसर्गाभावत्वम् अन्योन्याभावत्वं च इति नञः शक्यतावच्छेदकम्।

**१२. अभावशब्दशक्यतावच्छेदकविचारः**

न च लाघवाद् अभावबुद्धिविषयीभूताभावत्वं सर्वाभावसाधारणम् अभाव-शब्दशक्यतावच्छेदकम् एकमेव, इति वाच्यम्, इह **'घटो नास्ति'** इत्यत्र यादृशाभावः

प्रतीतिविषयी भूतः, **'घटः पटो न'** इत्यत्र न तथाविधाभावः प्रतीयते, अपि तु अभाव-वैलक्षण्यमेव प्रतीयते। अन्यथा अभावविषयिण्या बुद्धेः द्वैविध्यं नार्हति। अभावत्वस्य सर्वसाधारण्येन अभावपदशक्यतावच्छेदकत्वे तदवच्छिन्नप्रतीतौ सर्वत्रैव प्रतीतेः एकविधत्वं युक्तम्। दृश्यते तु पुनः न तथा, यतः क्वचिद् अनुयोगिवाचकपदोत्तरं सप्तमीविभक्तिः, क्वचित् प्रतियोगिवाचकपदोत्तरं प्रथमाविभक्तिः। यथा **'भूतले घटो नास्ति', 'इह कपाले घटो ध्वस्तः'** इत्यादि। अन्यत्र च पुनः प्रतियोग्यनुयोग्युभय-वाचकपदोत्तरं प्रथमाविभक्तिरेव यथा घटः पटो नेति। यदि पुनः अभावत्वं अभाव-पदशक्यतावच्छेदकम् एकमेव स्यात्, तदा सर्वत्रैव अभावबोधे अनुयोगिप्रतियोग्यादि-पदानां तुल्यविभक्तिकत्वं सम्भाव्येत। न हि अर्थवैलक्षण्यं विना विभक्तिवैलक्षण्यं सम्भवेत्। अत एव अभावत्वं नैकम् अभावपदशक्यतावच्छेदकम्। तथा हि 'घटो नास्ति' इत्यादौ संसर्गाभावत्वस्य, 'घटो न भवति' इत्यत्र च अन्योन्याभावत्वस्यैव प्रकारतया आनुभविकत्वेन अभावपदशक्यतावच्छेदकं द्विविधम् इति सिद्ध्यति।

**१३. अभावत्वं संसर्गान्योन्याभावसाधारणं न भवेदिति मतप्रदर्शनम्**

केचित्तु नञ्पदजन्यप्रातिपदिकार्थे अभावान्वयबोधस्थले सप्तमीसमभिव्याहार-ज्ञानं कारणम्, अत एव 'भूतले घटो नास्ति' इत्यत्र भूतलपदोत्तरं सप्तमीविभक्तिर-पेक्ष्यते। यत्र पुनः नञ्पदजन्यभेदबोधः, तत्र समानविभक्तिकप्रातिपदिकार्थसमभि-व्याहारः कारणम्। अत एव व्युत्पत्तिभेदसूचनायैव क्वचित् सप्तमीविभक्तिः, क्वचिच्च प्रथमाविभक्तिः अनुयोगिवाचकपदोत्तरं प्रयोजनीया, किन्तु 'अभावः' इत्यनुभवाद् उभयाभावसाधारणम् एकमेव शक्यतावच्छेदकम् इति।

## (ग) नञः प्रकारभेदकथनम्

ननु नञर्थाः षड् इति प्रसिद्धिर्भवति। तथाहि—

**तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।**
**अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥**

१. तत्सादृश्यं यथा- अब्राह्मणः, ब्राह्मणसदृश इत्यर्थः।

२. अभावो यथा—अपापम्, पापाभाव इत्यर्थः।

३. तदन्यत्वं यथा—अघटः, घटभिन्नं द्रव्यम्।

४. तदल्पता यथा—अनुदरा कन्या, अल्पोदरी इत्यर्थः।

५. अप्राशस्त्यं यथा—अकार्यम्, अप्रशस्तं कार्यम्।

६. विरोधो यथा—असुरः, सुरविरोधी इत्यर्थः।

एवं च षडेव शक्यतावच्छेदकानि वक्तव्यानि–तत् कथं द्विविधमेव शक्यतावच्छेदकम् उक्तम् ? इति चेत्, उच्यते—संसर्गाभावत्वान्योन्याभावत्वरूपधर्मद्वयावच्छिन्ने अभावपदशक्त्यङ्गीकारेणैव निर्वाहसम्भवे गौरवात् षडवच्छेदकानि नाङ्गीकर्त्तव्यानि। यत्र च सादृश्यादिकं प्रतीयते, तत्र लक्षणयैव तथाविधप्रतीतिः सम्भवति।

**१४. तत्रैव रघुनाथशिरोमणेः मतोल्लेखः**

तथा चोक्तं गदाधरभट्टाचार्यपादैः नञ्वादव्याख्यानावसरे—लक्षणयैव सादृश्याद्यर्थप्रयोगनिर्वाहे तादृशार्थे शक्तिकल्पनम् अयुक्तम्; अपि तु अभावान्यत्वरूपार्थद्वय एव सादृश्यत्वाद्यपेक्षया अभावत्वभेदत्वयोः लघुतया तयोः प्रवृत्तिनिमित्तत्वे विनिगमकसत्त्वात्[1]।

## (घ) अभावशक्यतावच्छेदकनिर्णयविचारः

इदमत्रावधेयम्—यद्यपि 'भूतले घटो नास्ति', 'घटः पटो न भवति' इत्यादौ सर्वत्रैव अभावबुद्धिः सम्पद्यते, तथापि प्राचीनानां मते अभावत्वं न उभयाभावसाधारणम् अनुगतप्रतीतिनियामकम्, यतः सर्वत्रैव पदार्थाङ्गीकारे अनुगतप्रतीतिरेव नियमिका।

**१५. अभावशब्दशक्यतावच्छेदकविषये प्राचीनमतप्रदर्शनम्**

तथा चोक्तं न्यायकन्दल्याम्—'यथा भावस्य स्वाधारेषु द्रव्य-गुण-कर्मसु आत्मानुरूपः प्रत्ययः सत्सदिति प्रत्ययः द्रव्यत्वस्य स्वाश्रयेषु द्रव्येषु आत्मानुरूपः प्रत्ययः, द्रव्यं द्रव्यमिति प्रत्ययः, गुणत्वस्य स्वाश्रयेषु गुणेषु आत्मानुरूपप्रत्ययः गुण इति प्रत्ययः, कर्मत्वस्य स्वाश्रयेषु कर्मसु आत्मानुरूपः प्रत्ययः कर्मेति प्रत्ययः, तस्य कर्त्तृत्वाद् भावद्रव्यत्वादीनां स्वाश्रयादिभ्यः परस्परतश्च अर्थान्तरभावः, तथा समवायस्यापि पञ्चसु पदार्थेषु इहेति प्रत्ययदर्शनात् तेभ्यः पञ्चभ्यः पदार्थान्तरत्वम्[2]'।

एवं च सति अभावस्वीकारस्थलेऽपि अनुभव एव प्रमाणपदवीम् अधिरोहति, तथा च 'भूतले घटो नास्ति' इत्यत्र सप्तम्यन्तानुयोगिकप्रथमान्तप्रतियोगिताकाभावप्रतीतिः सर्वेषाम् अनुभवसिद्धा, 'घटः पटो न' इत्यत्र पुनः अनुयोगिप्रतियोगिवाचकपदयोः उभयोरेव प्रथमान्तत्वम् अनुभूयते, तस्माद् अनुभवभेदात्, संसर्गाभावान्योन्याभावयोः नैकत्वं सिध्यति, अतः संसर्गाभावत्वम् अन्योन्याभावत्वं च नञः शक्यतावच्छेदकम्, न च पूर्वोक्ताभावप्रतीतिद्वयस्थले समवायाद्यवच्छिन्नायास्तादात्म्यावच्छिन्नायाश्च प्रतियोगितायाः संसर्गतया भानादेव वैलक्षण्यसिद्धौ अभावत्वं लाघवात्

१. रघुनाथशिरोमणिः-नञर्थवादः—पृ० २०२२।
२. न्यायकन्दली -- ७७७–७७।

सर्वाभावसाधारणम् एकमेव शक्यतावच्छेदकं स्यादिति वाच्यम्, अपि च, अभाव-द्वयवैलक्षण्यं विना प्रतियोगितायाः सम्बन्धद्वारकभेदो न भवेत्, तादाम्यसम्बन्धा-वच्छिन्नघटत्वावच्छिन्नप्रकारताकबुद्धिं प्रति तादात्यसम्बन्धावच्छिन्नघटत्वावच्छिन्न-प्रतियोगिताकाभावबुद्धेरेव प्रतिबन्धकत्वम्, न तु तथाविधबुद्धिं प्रति समवायाद्यव-च्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावबुद्धेः प्रतिबन्धकत्वं सम्भवेत्। एवं समवा-याद्यवच्छिन्नघटत्वावच्छिन्नप्रकारताकबुद्धिं प्रत्यपि समवायाद्यवच्छिन्नघटत्वावच्छिन्न-प्रतियोगिताकाभावबुद्धेरेव प्रतिबन्धकत्वम्, न तु तत्रापि तादात्म्यसम्बन्धावच्छिन्न-प्रतियोगिताकाभावबुद्धेः प्रतिबन्धकत्वम्, अतः प्रतिबध्यप्रतिबन्धकभावस्थले स्पष्टत एव द्वयोः अभावयोः वैलक्षण्यम् अनुभवसिद्धम्।

न च पदार्थद्वयवैलक्षण्यं विना तथात्वं सम्भवति, अतः संसर्गाभावान्योन्या-भावयोः वैलक्षण्यात् शक्यतावच्छेदकमपि द्वयमेव स्यात्।

**१६. अभावशब्दशक्यतावच्छेदकविषये नवीनमतप्रदर्शनम्**

नवीनास्तु—अभावत्वम् अखण्डोपाधिरूपमेव। तथा हि संसर्गाभावत्वम् अन्योन्याभावत्वं च पृथग् इत्यत्र इयमेव युक्तिर्यत् यत्र संसर्गारोपपूर्वकप्रतीतिरभा-वस्य तत्रैव संसर्गाभावः, यथा अत्र यदि घटः स्यात् तर्हि घटवत्तया उपलभ्येत, इति प्रतियोग्यारोपपूर्वकमेव संसर्गाभावः प्रतीयते, अन्योन्याभावस्थले तु न तथा, एवम् अन्योन्याभावस्थले तादात्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वमेव, संसर्गाभावस्थले तु न तथा, अपि तु तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं संसर्गा-भावत्वम्।

**१७. अभावशब्दशक्यतावच्छेदकोपसंहारः**

एतच्च न युक्ततरम्, तथा हि यदि संसर्गारोपपूर्वकप्रतीतिविषयतात्त्वमेव संसर्गाभावत्वं स्यात्, तदा अतीन्द्रियाभावस्थले अभावे अव्याप्तिः दुष्परिहारा। अतः आरोपस्य अभावप्रत्यक्षे हेतुत्वं न प्रमाणसिद्धम्। एवं तादात्म्यातिरिक्तसम्बन्धावच्छिन्न-प्रतियोगिताकाभावत्वं संसर्गाभावत्वम् इत्यपि न वक्तुं युज्यते, संयोग्यन्योन्याभावे अतिव्याप्त्यापत्तेः, यतः संयोगितादात्म्यस्य फलतः संयोगरूपतया तथाविधाभावस्य संयोगावच्छिन्नप्रतियोगिताकत्वात् तत्र संसर्गाभावलक्षणस्य अतिव्याप्तिः स्यात्। अतः पूर्वोक्तरूपेण संसर्गाभावत्वं न निर्धारयितुं युक्तम्, नापि यथोक्तम् अन्योन्या-भावत्वमपि संगच्छते, तथा सति संयोग्यन्योन्याभावे अव्याप्त्यापत्तेः, पूर्वोक्तरीत्या अत्रापि संयोगस्यैव फलतः तथाविधाभावप्रतियोगितावच्छेदकसम्बन्धसम्भवात्। अतः अत्यन्ताभावादौ संसर्गाभावः इत्याद्यनुभवसाक्षिकम् अखण्डोपाधिरूपमेव तत्। एवम्

अन्योन्याभावत्वमपि तथैव प्रतीतिसिद्धम् अखण्डोपाधिरूपमेव वक्तव्यम्। तथा च उभयाभावानुगतम् अभावत्वमेव शक्यतावच्छेदकं वाच्यम्।

एवम् अभावाधिकरणकाभावस्थले अभावत्वस्य अनुयोगिताविशेषरूपत्वेन प्रतीयमानतया अनुयोगिताविशेष एव अभावत्वमिति वक्तुं शक्यते। अत एवोक्तं दीधितिकृता सिद्धान्तलक्षणं—'अभावत्वं चेद् इदमिह नास्ति—इदमिदं न भवति इति प्रतीतिनियामको भावाभावसाधारणः स्वरूपसम्बन्धविशेषः[1]'। तथा चोक्तं गदाधर-भट्टाचार्यपादैः नञ्वादव्याख्यानावसरे—'यदि अन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्न-प्रतियोगिताकाभावत्वरूपं भवेत्, तदेव न, संयोग्यादितादात्म्यस्य संयोगादिरूपतया संयोगसम्बन्धावच्छिन्नसंयोग्यत्यन्ताभावस्य अन्योन्याभावत्वापत्तेः, अपि तु अनुयो-गिताविशेष एव। एवं च तादात्म्यस्य अन्योन्याभावप्रतियोगितावच्छेदकसम्बन्धत्वमपि अप्रामाणिकम्। इह संयोगेन घटो नास्ति इत्यादिवद् अयं तादात्म्येन न घटः इत्याद्यप्रत्ययात्। एवं च तादृशानुयोगिताविशेषप्रकारकत्वमेव अभेदसम्बन्धेन प्रतियोगिप्रकारकधीविरोधित्वे तन्त्रम्। तथा च न तेन रूपेण पृथक्शक्तिकल्पनम् तत्प्रकारकबोधानुरूपेणावश्यकम्।'

भाषापरिच्छेदे अभावव्याख्यानावसरे दिनकर्याम् उक्तम्—'अत्र नव्याः—अभावत्वस्य अखण्डोपाधित्वे प्रमाणाभावः, किन्तु भावभिन्नत्वं समवायसामानाधि-करण्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताऽभावत्वम् इति; किन्तु नञ्वादे गदाधरभट्टाचार्य्येण प्रदर्शितरीत्या अखण्डोपाधित्वम् अभावत्वम् इति नव्यानां मतम्'—इत्युक्तम्।

दिनकरीकृतामाशयः—यत्र तु प्रकारान्तरेण उपपत्तिर्नैव सम्भवेत्, तत्रैव अखण्डोपाधित्वं स्वीकर्त्तव्यम्। अतो यदि प्रकारान्तरेण घटाभावादौ अभाव इत्यनुगत-प्रतीतिः सम्भवेत्, तदा अखण्डोपाधित्वं न स्वीकर्त्तव्यम्। प्रकारान्तरं तु दर्शितमेव भावभिन्नत्वम् इत्यादिना।

ननु एवमपि यस्य सत्तात्वेन सत्ताज्ञानं नास्ति, तस्य सत्तानुपस्थितिदशायां घटो नास्ति इत्यादिप्रतीतेरनुपपत्तिरेव इति चेत्, तत्रोच्यते, सत्ताऽभावस्य स्वरूपतो भानस्वीकारान्न दोषः। तथा चोक्तं दिनकर्याम्—'सत्ताऽत्यन्ताभावव्यक्तेः स्वरूपत एव प्रकारत्वोपगमात्'।

ननु तथापि सत्तोपस्थितिशून्यकाले 'घटो नास्ति' इत्यादिप्रतीतिरनुपपन्नैव, यतः अभावज्ञाने प्रतियोगिज्ञानस्य हेतुतया सत्ताज्ञानं विना सत्ताऽभावभानासम्भवाद् इति चेत्, उच्यते, अभावत्वप्रकारकप्रत्यक्षं प्रत्येव प्रतियोगितावच्छदकावच्छिन्न-

---

१. दीधीतिः–सिद्धान्तलक्षणम्–पृ० ३०६।

२

प्रतियोगिज्ञानं कारणम्, न तु घटो नास्ति इत्यादिप्रतीतिस्थले, सत्ताऽभावस्य अभाव-विषयकशाब्दज्ञानरूपतया तत्र प्रतियोगिज्ञानानपेक्षणात् । अन्यथा 'इदं तमः' इत्यादि-प्रतीतेरनुपपत्तिः । तथा हि तमस्त्वं तु न तेजोऽभावस्वरूपत्वम्, अपि तु तेजोऽभाव-निष्ठतत्तद्व्यक्तित्वमेव ।

ननु तथापि विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणज्ञानत्वेन हेतुत्वात् सत्ताऽभावस्य पूर्वानुपस्थितस्यापि प्रकारत्वोपगमे पूर्वोक्तकार्यकारणभावे व्यभिचार इति चेत्, तत्रोच्यते—'विशिष्टबुद्धित्वं हि विशिष्यैव वाच्यम् । तथा हि यदि सप्रकारक-बुद्धित्वं विशिष्टबुद्धित्वम्, तत्र विशेषणत्वमपि प्रकारतया भानाद् अतिरिक्तं वाच्यम्, अन्यस्य दुर्वचत्वात् । एवं च सति यदि सामान्येन विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वम् उच्यते, तदा घटज्ञानात् पटविशिष्टबुद्ध्यापत्तिर्दुर्वारा, यतः घटस्यापि क्वचित् प्रकारकत्वात् । अतो घटविशिष्टबुद्धिं प्रति घटज्ञानत्वेन तथा पटविशिष्टबुद्धिं प्रति पटज्ञानत्वेन इत्यादिरीत्या विशिष्यैव कार्यकारणभावो वक्तव्यः । एवं च सति कार्यकारणभावस्य प्रतिव्यक्तिभेदेन भिन्नतया अभावत्वविशिष्टबुद्धिस्थले विशेषणज्ञानस्य कारणत्वं नैव कल्प्येत, फलानुरोधित्वात् कल्पनायाः । अतः इदं तम इत्यत्र तेजस्त्वेन तेजोज्ञानं विनापि न अनुपपत्तिः, तथा च विशेषणज्ञानं विना यत्र विशिष्टबुद्धिः नोत्पद्यते, तत्रैव विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वं कल्प्यम् । अतो घटादिज्ञानं विना घटादिविशिष्टबुद्धेरनुदयात् तत्र पूर्वोक्तरीत्या कार्यकारणभावः कल्प्यते । अत एवोक्तं दिनकर्याम्—**'विशेषणभेदेन हेतुताया भिन्नत्वेन तत्र तद्धेतु-त्वानुपगमात् फलानुरोधित्वात् कल्पनाया इति'**[1] ।

वस्तुतस्त्वयं पक्षो न संगच्छते । जात्यखण्डोपाध्यतिरिक्तपदार्थस्य स्वरूपतः प्रकारत्वेन भानानुपगमात् । अपि च, यदि निरवच्छिन्नप्रकारताश्रयीभूतं 'घटो नास्ति' इत्यादिप्रतीतिविषयीभूतम् अभावत्वं स्यात्, तर्हि तस्य अखण्डत्वं कथं वार्यते ? यतः जात्यखण्डोपाध्यादेरिदमेव अखण्डत्वं यद् निरवच्छिन्नप्रकारताश्रयत्वम् । तथा च सति 'नास्ति' इति प्रकारीभूतधर्मस्य अखण्डोपाधित्वं सिद्धमेव इति दिक् ।

---

१. सि० मु० पृ० ९६ ।

• • •

# द्वितीयोऽध्यायः

## अभावस्वातन्त्र्यविचारः

### (क) प्रमेयतया अभावम् अनङ्गीकुर्वतां प्राभाकराणां मतम्

एतावता प्रबन्धेनानुभवसाक्षिकः कश्चित् पदार्थः अभावो नामास्तीति किञ्चिदालोचितम्। तत्र अभावस्य पदार्थत्वविषये केचित् पुनः वैमत्यमावहन्ति। तथा हि 'इदमिह नास्ति' इति प्रतीत्या इदन्तावच्छिन्ने धर्मिणि किञ्चिद्धर्मावच्छिन्नप्रतियोगिताकाभावः प्रकारविधया भासत इत्यत एव धर्मिणोऽतिरिक्तस्य प्रकारीभूतस्याभावस्य स्वतन्त्रतया पदार्थत्वं यद् अभाववादिभिरङ्गीकृतम्, तन्नैव युज्यते, यतोऽनुभवसाक्षिकतयैव यदि पदार्थानाम् अस्तित्वं स्वीकर्त्तव्यं स्यात्, तदा प्रणिहितेन मनसा चिन्तनीयं यत् 'भूतले घटो नास्ति'त्यादौ प्रतीतौ भूतलत्वावच्छिन्नधर्मिण एव ग्रहः स्यात्, न तु तत्र प्रकारविधया अभावोऽपि कश्चित् प्रतीयते, यतस्तत्र भूतलं पश्यन्नेव जनो घटो नास्तीति व्यवहरति। अत एव तत्र दृश्ये प्रतियोगिनि तदेकविषया या बुद्धिः, सैव तदभाव इति व्यपदिश्यते।

#### १. नास्तीत्यादिवाक्यानाम् अर्थप्रदर्शनम्

तथा चोक्तं प्रकरणपञ्चिकायां शालिकनाथेन—'भावानामवगतिर्द्विधा—एका तावद् भावान्तरसंसृष्टविषया, अपरा च तदेकविषया। यापि च सा तदेकविषया बुद्धिः, सापि च द्विधा—प्रतियोगिनि दृश्ये, अदृश्ये च। तत्र दृश्ये प्रतियोगिनि या तदेकविषया बुद्धिः, सैव तस्य प्रतियोगिनः अभाव इत्युच्यते'[1] इति।

#### २. घटाभाववद् भूतलम् इत्यादिप्रतीतेः अर्थप्रदर्शनम्

अपि च, अभावस्य पदार्थम् अङ्गीकुर्वन्तोऽपि दार्शनिका दृश्ये प्रतियोगिनि तदेकविषयां बुद्धिमेव अभावज्ञानार्थम् अनुमन्यन्ते। तथा हि अत्र यदि घटः स्यात्, तर्हि घटवत्तया उपलभ्येत—इति प्रतियोग्यारोपेण तत्र तेषाम् अभावज्ञानं सिध्यति। एवं च सति दृश्यस्य अदर्शनमेव अभावप्रतीतौ कारणम्, तर्हि अदर्शनं यदि कारणं स्यात्, तदा तत्र केवलं दृश्यादर्शनम् इत्येवास्तु, किं पुनः अभावाख्यस्य प्रमेयस्य स्वीकरणेन। यत्र भूतले घटो न दृश्यते, तत्र भूतलमात्रं दृश्यते—इत्यनेनैव उपपत्तौ भूतलातिरिक्तम् अभावाख्यं वस्तु प्रमेयतया कथं नाम अङ्गीक्रियते ? न हि भूतलप्रत्यक्षं

---

१. प्र० प० ६, पृ० २८६–२८७।

विना तत्र घटाभावप्रतीतिर्वादिनामपि आनुभविकी, अतस्तत्र भूतलज्ञानमात्रम् इत्येवमुच्यताम्, किं पुनः अभावस्वीकरणेन ?

**३. अभावप्रतीतिं प्रति दृश्यानुपलब्धेः कारणत्वनिराकरणम्, तत्रैव घटध्वंसवत् कपाल-प्रत्यक्षेण अभावस्वीकार आवश्यक इति पूर्वपक्षमतोल्लेखः**

अत एव तेषां मते भावान्तरमभावो हि कयाचित्तु व्यपेक्षया इति सिद्धान्तः सङ्गच्छते। अत एवोक्तं प्रकरणपञ्चिकायामपि—'तुल्योपलम्भयोग्यार्थान्तरदर्शनेन दृश्यानुपलम्भः अवधार्यते, अतो दृश्ये प्रतियोगिनि तदेकविषयोपलब्धिरेव वरम् अभावोऽस्तु'[1] इति।

ननु यदि अभावो नास्त्येव, तर्हि कपालादौ पूर्वं प्रतीयमानो घटो मुद्गरादि-प्रहारेण तस्य विनाशे कथं तत्र पूर्ववद् घटबुद्धिर्नाविर्भवति ? यतः प्राक् कपालादौ घटसंसृष्टबुद्धिरासीत्, मुद्गरप्रहारानन्तरं च न तथाविधा बुद्धिः। अतः पूर्वापरप्रत्यययोः प्रमेयवैलक्षण्यं विना कथं भिन्नविषयत्वम् ? अपि च यत्तु केवलं दृश्यादर्शनमात्रमेव अभावबुद्धौ कारणमित्युक्तम्, तदपि न युक्तम्, अनुमानादिभिरपि अभावस्यावगम-सम्भवात्।

तद्यथा—गगनं मेघाभाववत्, उज्ज्वलसौरालोकदर्शनात्। अत्र च मेघाभाव-वत्तया प्रतीयमानस्य गगनस्य प्रत्यक्षायोग्यत्वेन केवलम् अनुमानमेव मेघाभावनिर्णये प्रमाणम्। न च तत्र मेघादर्शनमेव इत्यपि वाच्यम्, गृहान्तर्वर्त्तिनो जनस्य गवाक्ष-जालनिपतितसूर्यकिरणदर्शनाद् मेघाभावानुमानं यत्र स्यात्, तत्र मेघस्य दर्शनादर्शनयो-स्तुल्यतया न तत्र मेघादर्शनमेव मेघाभावनिर्णायकं वाच्यम्, यतो गृहान्तर्वर्त्तिनो यथा मेघसन्दर्शनं न सम्भाव्यते। अतो विनापि मेघादर्शनं तत्र मेघाभावानुमानं परिनिष्पन्नं स्यात्। अतो न केवलम् एकदेशमात्रबुद्धिविषयतया तत्रत्यमेघाभाव उपपादयितुं शक्येत। अतोऽस्त्येव 'अभावः' स्वतन्त्रः पदार्थः प्रमेय इति चेत्, उच्यते—यत्र कपालादौ घटादिकं पूर्वं संसृष्टम् आसीत्, तत्रैव मुद्गरप्रहारादिकम् अभावबुद्धौ कारणमिति भवता स्वीकृतम्—एवं चेत् प्राभाकरैरपि वक्तुं शक्यते यद् यथायथकारणोप-निपातादेव तदेकविषया बुद्धिः सम्भवति। अत एव मुद्गरादिप्रहारानन्तरमपि कपालादौ केवलं तदेकविषया बुद्धिरेव प्रवर्त्तते, मुद्गरादिप्रहारात् पूर्वं घटादिसंसृष्ट-दशायां न केवलं कपालैकविषया बुद्धिः सुतरां जायते, मुद्गरप्रहारादिकारणाभावात्।

**४. प्राभाकरमतेन तत्खण्डनम्**

तथा चोक्तं प्रकरणपञ्चिकायाम्—'यस्य यत्र भाव आसीत्, कथं तस्य तत्राऽभाव इति। स चेत् पर्यनुयुक्तो ब्रूते यत् कारणोपनिपातवशेन तस्मिन्नेव अभावो

---

१. प्र० प०—६, पृ० २८७।

जायत इति, ततो वयमपि वदितुं शक्ताः कारणोपनिपातादेव तदेकविषया बुद्धिर्भवति'[1] इति। अतो यथा घटादिसंसृष्टदशायां तत्तत् कारणवशादेव संसृष्टबुद्धिरासीत् मुद्गरादिप्रहारानन्तरं च भावान्तरोदय एव कपालाद्येकविषयबुद्धौ कारणम्।

न च निरन्तरविनाशशालिनां प्रत्ययानां कस्य भावान्तरोदय इति वाच्यम्, धर्मिणः स्वरूपमात्रेण अवस्थानभेदस्यैव भावान्तरोदयत्वेन ग्राह्यत्वात्। न च कपालादिस्वरूपमात्रं तावद् घटादिसंसृष्टदशायामपि यथा स्थितम्, तथैव घटादिविनाशानन्तरं स्थितमेव इति अवस्थाभेदेऽपि स्वरूपस्य अवैलक्षण्यम्। अतो घटसंसृष्टदशायां यादृशं स्वरूपं घटविनाशानन्तरमपि कपालादेः, तथैव स्वरूपम् इति कुतो भावान्तरोदय इति। तस्माद् धर्मभाव एव तदानीं कपालादिधर्मिस्वरूपमात्रं अङ्गीकरणीयं वाच्यम्, पूर्वमेव दत्तोत्तरत्वात्।

### ५. भावस्य अवस्थाद्वयावगाहिप्रतीतिदर्शनम्

तथा हि भावातिरिक्तः अभावो नास्ति इत्येव प्राभाकरसिद्धान्तः। भावस्तु क्वचिदेकाकी, स क्वचित् सद्द्वितीयश्चेति अवस्थाद्वयं भजते। तत्र यदा एकाकी, तदैव भावस्वरूपमात्रमुच्यते। एष एव एकाकी भावः परैः विनाशादिशब्दैः अभिधीयते। तथा चोक्तं प्रकरणपञ्चिकायाम्—'न भावातिरिक्तः अभावः अङ्गीक्रियते, भाव एव तु एकाकी सद् द्वितीयश्चेति द्वयीमवस्थामनुभवति। तत्र एकाकी भावस्वरूपमात्रमुच्यते। योऽपि च अभावाख्यं तत्त्वान्तरम् अभ्युपैति, तेनापि तावद् एकाकिभावोपलम्भनमाश्रित्य अभावप्रमितिरङ्गीकरणीया, न ह्यप्रतीते भावे अभावः प्रतीयते'[2] इति।

### ६. प्रभाकरमतोपसंहारः

## (ख) अभावस्य प्रमेयत्वमङ्गीकुर्वतां भाट्टमीमांसकानां मतम्

अत्रोच्यते भाट्टमीमांसकैः—अत्र भूतले घटो नास्ति इति व्यवहारस्य यदि केवलं भूतलमात्रविषयकं ज्ञानं कारणं स्यात्, तदा पटादिवत्यपि भूतले घटो नास्तीति व्यवहारो न सम्भवेत्, तत्रापि भूतलातिरिक्तस्य पटस्य सत्त्वेन भूतलमात्रविषयकस्य ज्ञानस्य असम्भवात्। अथ यदि घटासमानकालीनभूतलमेव घटाभाववद् भूतलम् इति व्यवहारं प्रति हेतुः स्यात्, तत्रेदं पृच्छ्यते किमिदं घटासमानकालीनत्वं नाम ? यदि भूतलमात्रम्, तदा घटवत्यपि भूतले घटो नास्तीति व्यवहारः कथं वार्येत ? यदि तु भूतलातिरिक्तं घटसंयोगाविद्यमानत्वम्, तर्हि अभावः प्रमेयतया अनिच्छतोऽपि भवतो बलादापतितः।

---

१. प्र० प० ६, पृ० २२८। १. प्र० प० ६, पृ० २८९।

तथा चोक्तं शास्त्रदीपिकायाम्—'घटोऽत्र भूतले नास्ति इति व्यवहारस्य किं कारणम् ? दृश्ये घटे यद् भूतलमात्रविषयं ज्ञानम्, तदस्य कारणम् इति चेत्, तथा सति पटवद्भूतलोपलम्भे 'घटो नास्ति' इति व्यवहारो न स्यात्, भूतलमात्रोपलम्भाभावात्। घटविविक्तभूतलोपलम्भ इति चेत् कोऽयं घटविवेकः ? यदि भूतलस्वरूपमेव घटवत्यपि प्रसङ्गः, घटसंयोगाभावः चेद् अङ्गीकृत, तर्हि अभाव' इति।

७. दृश्यादर्शनस्यैवाभावोपलब्धिकारणत्वम्

ननु अभाववादिनां मतेनापि अभावज्ञानं प्रति किञ्चित् कारणं वाच्यमेव, तच्च प्रतियोग्यदर्शनादिकम् इति तदेव भूतलैकविषयबुद्धौ कारणमिति चेत्, तत्रोच्यते—दृश्यस्य वस्तुनो यद्दर्शनम्, तदेव अभावबुद्धौ कारणम्, अदर्शनं च दर्शनाभावो भवद्भिः नाङ्गीकृतः, अभावस्वीकारप्रसङ्गात्।

अपि तु भूतलैकविषयबुद्धौ यत् कारणम्, तच्च घटवद्भूतलबुद्धौ नास्ति इति भवता अङ्गीकृतम्, अन्यथा अत्र कारणम् अस्ति—अत्र कारणं न इत्यनयोः प्रत्यययोरवैलक्षण्यापत्तेः। एवं च सति कारणाभावस्वीकारात् प्रमाणाभावान्तर्गततया अभावो यदि स्वीकृत एव, तर्हि प्रमेयरूपेण प्रमेयाभावरूपेण वा अभावाङ्गीकारे कोऽपराधः ?

इदमत्रावधेयम्—यस्याम् अवस्थायां केवलं भूतलस्वरूपज्ञानम्, घटतदभावयोश्च अज्ञानम्, तादृशावस्था घटवद्ज्ञाने घटाभाववद्ज्ञाने वा वर्त्तते न वा ? वर्त्तते चेद् भूतलमिति, घटाभाववद् भूतलमिति च व्यवहाराणामविशेषप्रसङ्गः, तुल्यकारणत्वात्। अथ यदि अवस्थाभेदः स्वीक्रियेत, तदा स भेदः यद् वशात् सम्पद्यते, तदपि विलक्षणमेव स्वीकर्त्तव्यम्। तथा च भूतलमिति ज्ञानं यत्र स्यात्, तत्र यादृशं कारणं वर्त्तते, घटवद्भूतलमिति ज्ञानस्थले न केवलं तादृशमेव कारणम्, तथा सति भूतलमिति घटवद्भूतलमिति व्यवहारवैलक्षण्यं न सिध्येत्, एवं च घटाभाववद् भूतलमिति अत्रापि भूतलमिति घटवद्भूतलमिति व्यवहारकारणापेक्षाया किञ्चित् कारणान्तरं स्वीकर्त्तव्यम्, तच्च कारणान्तरं घटादिप्रमेयाभावं विना नान्यत् किञ्चिदपि भवितुमर्हति।

८. भूतलं घटवत्, भूतलं घटाभाववदिति प्रतीतिद्वयवैलक्षण्योपपत्तये अभावस्य प्रमेयत्वं स्वीकर्त्तव्यम् इति भाट्टसिद्धान्तप्रदर्शनम्

अतः प्रतियोग्यनुपलब्धिवशादेव अभावप्रतीतेः सर्वानुभविकतया न अभावम् अनङ्गीकर्तुं शक्यते। यत्र च चाक्षुषप्रत्यक्षकारणकलापसत्वेऽपि भूतलादौ पटाद्युप-

१. शास्त्रदीपिकायाम् १।२।५, पृ० ८४।

लब्धिदशायां घटो न उपलभ्यते, तत्र सुतरां घटाभावः पांसुलचरणैः हालिकैरपि निर्णेतुं शक्यः, अतस्तत्र घटाभावप्रतीतेः कथमपि अनङ्गीकरणं न प्रेक्षावतां युक्तम्। अत एव इदं परिनिष्पन्नं यन्न केवलं भूतलादिसत्तामात्रेणैव घटाभावबुद्धिः व्यवस्थापयितुं शक्यते, यतो घटसंसृष्टदेशेऽपि भूतलस्वरूपस्य सत्त्वेन, तत्र भूतलबुद्धौ सत्यामपि न घटाभावबुद्धिः, तस्माद् योग्यानुपलब्धौ एव अभावज्ञानम् इति अभावस्य ज्ञानविषयत्वं सिद्धमेव।

ननु योग्यानुपलब्धिरेव सर्वत्र अभावबुद्धौ कारणमिति कथं निर्णेतुं शक्यते, न हि स्फीतालोकवत्यपि भूतले पटादौ इन्द्रियसन्निकर्षे पटवद्भूतलमिति ज्ञानसत्त्वेऽपि घटाभाववद्भूतलमिति सर्वत्रावधारणं न भवेत्, तस्माद् योग्यानुपलब्धिर्न अभावाधिकरणमिति चेत्, तत्रोच्यते—'यत्र योग्यानुपलब्धिः कारणं भवेत्, तत्र तु योग्यत्वं विद्यमानमपि यत्र अज्ञातम्, तत्र नाभावधीः। एवमसत्यपि योग्यत्वे यदि भ्रान्तिवशाद् निश्चितं स्यात्, तत् तर्हि भ्रान्तिज्ञानविषयीभूतस्यापि योग्यत्वस्य अभावबुद्धिकारणत्वं भवत्येव, तस्माद् अभावाख्यं प्रमेयं स्वीकर्त्तव्यमेव'[1]।

## (ग) वैशेषिकमतानुसारेण प्राभाकरमतखण्डनम्

### ९. भूतलादिविशेष्यातिरिक्ततया विशेषणत्वेन घटाभावादीनां स्वीकारः कर्त्तव्यः

भूतलमस्ति, घटाभाववद्भूतलम्, घटवद्भूतलम् इत्येतेषां प्रत्ययानां वैलक्षण्यं प्राभाकरमेते नोपपन्नम्, तथा हि भूतले घटो नास्तीत्यत्र केवलं भूतलस्वरूपेणैव प्रतीतिः स्वीकर्त्तव्या, तद् घटशून्यत्वं विना नान्यत् किञ्चित् वक्तुं शक्यते। एवं भूतलं घटाभाववदित्यत्र विशेष्यतया भूतलस्य, विशेषणतया च घटाभावस्य प्रतीतिः अनुभवसिद्धा। तत्र यदि घटाभाववद् भूतलम् इत्यत्र घटाभावोऽपि भूतलस्वरूपमेव, तर्हि घटाभावे विशेषणतया अवगाहमाने यथा प्रतीतिविषयः तथैव भूतलस्यापि विशेषणत्वं तत्र युक्तम्। तच्च पुनर्न सम्भवति, न हि भूतले भूतलमिति प्रतीतिः सङ्गच्छते।

तथा चोक्तं प्रशस्तपादभाष्यसेतुटीकायाम्—'कैवल्यस्य घटशून्यत्वरूपतया अभावस्वीकाराद् भूतलस्य भूतलावृत्तितयाऽऽधाराधेयभावानुपपत्तेः'[2]।

---

१. पादटीका—'यत्तु सत्यामपि योग्यानुपलब्धौ अथवानवधारणम्, असत्यां च अवधारणम् इति, तत्तु योग्यत्वाज्ञानकृतम्, न सत्तामात्रेण, वतः सदेव योग्यत्वं कदाचित् अज्ञातम् अवधारयति, कदाचित्तु अविद्यमानमेव योग्यत्वं भ्रान्त्या निश्चित्य अभावम् अवधारयति, उपलब्ध्य भावस्तु सन्मात्रतया कारणम्—न ज्ञाततया। तेन न अनवस्थापत्तिरिति सर्वमवदातम्, अतः अस्ति अभावाख्यं प्रमेयम्' (शास्त्रदीपिकायाम्—२।२।२, पृ० ८६)।

२. प्रशस्तपादभाष्ये सेतुटीकायाम्—पृ० ८०।

**१०. प्रत्यक्षं प्रति कार्यकारणभावविचारेणापि अभावस्य उपयोगित्वव्यवस्थापनम्**

न च यत्र भूतले घटः प्रत्यक्षीक्रियते, तत्र भूतलातिरिक्तस्य घटस्यापि चक्षुःसंयुक्ततया केवलं भूतलमिति प्रतीतिर्न स्यात्, यत्र च पुनः घटे न चक्षुः सन्निकृष्टः, भवद्भिरभावविषयावगाहिनीति कल्प्यते। युक्तिप्रणीहितेन मनसा विचारीक्रियते तत्र भूतलातिरिक्तो नाभावः चक्षुःसन्निकृष्ट इति घटवद्भूतलभिन्नं भूतलमेव अभावत्वेन भवद्भिः उपकल्प्येत इति वाच्यम्, यस्मिन् भूतले पूर्वं घट आसीत्, पश्चात् च घटशून्ये तद् भूतले अपि घटवद्भिन्नत्वस्य अभावः, स्वरूपभेदस्य व्याप्यवृत्तित्वनियमात्। तथा हि घटे यः पटभेदः, स खलु सर्वेषु कालेषु, सर्वेषु देशेषु च वर्त्तत एव। अतो घटस्वरूप एव तत्र पटभेदसाधक इति स्वरूपभेदस्य व्याप्यवृत्तित्वमवश्यम् अङ्गीकर्त्तव्यम्।

अपि च, प्रतियोगिमद्भेदवत्त्वमेव अनुयोगिस्वरूपमिति स्वीकार एव दुःशकः, तथा सति गगनाभाववद्भूतलमित्यत्र कथमपि नोपपद्यते। तथा हि भवन्मते गगनवद्भूतलभिन्नत्वमेव गगनाभाववद् भूतलमिति वक्तव्यम्। तत्र गगनस्य अवृत्तेस्तद्वत्त्वमेव न प्रसिध्यति। तथा चोक्तं तत्रैव सेतु टीकायाम् (पृ० ८०)—'पूर्वं घटवति, पश्चाद् घटशून्ये घटवद्भिन्नत्वाभावात् स्वरूपभेदस्यापि व्याप्यवृत्तित्वाद् अवृत्त्यत्यन्ताभावे तद्वतः अप्रसिद्धेश्च' इति।

**११. प्रागभावभेदात्यन्ताभावप्रतीतीनां प्राभाकरमते नोपपत्तिरिति प्रतिपादनम्**

एवमत्र कपाले घट उत्पत्स्यते, कपालश्च घटभिन्नः, तथा कपाले घटो नास्तीति प्रतीतीनां वैलक्षण्यं प्राभाकरमते नोपपद्यते, यतस्तन्मते सर्वत्रैव कपालस्वरूपमेव प्रतीतिविषयः। कपालस्वरूपं च पुनः अविलक्षणम्, अतो विलक्षणप्रतीतिस्तत्र न सिध्यति।

**१२. अभावस्य कालविशेषस्वरूपत्वखण्डनम्**

ये च पुनः कालविशेषसम्बन्ध एव तेषामपि असम्यग्वस्तुस्थितिनिर्धारणम्। तथा कालविशेष इत्यत्र गतवैशिष्ट्यं घटसंयोगासंयोगाभ्यां निरूपणीयम्, तथा च सति यत्र काले घटो विद्यते, तथाविधस्य कालस्य घटासंयोगोऽस्ति। यस्मिन् काले पुनः घटो घटसंयोगोऽपि नैव विद्यत इति घटभावाभ्यामेककालगतवैशिष्ट्यं निरूपणीयम्, अतः अभावमनङ्गीकुर्वता कथङ्कारं कालविशेषोऽपि निर्णेतुं शक्यते ?

वस्तुतस्तु यस्मिन् भूतले घटोऽस्ति इति प्रतीतिः, तत्र घटो नास्तीति प्रतीतिः न स्यात्। अपि तु, घटाभावाभावोऽस्ति इति प्रतीतिः स्यादेव। अत्र यदि अभावाख्यः कश्चन पदार्थः प्रमेयतया नाङ्गीक्रियते, तर्हि अत्र घटाभावाभावोऽस्ति, अत्र च

घटाभावो नास्ति, अत्र च पुनः घटो नास्ति—इत्यादिप्रतीतीनां वैलक्षण्यं न कथमपि निर्धारयितुं शक्यते ।

## १३. प्राभाकरमते प्रतिबध्यप्रतिबन्धकभावानुपपत्तिप्रदर्शनम्

नापि प्रतिबध्यप्रतिबन्धकभावोऽपि प्राभाकरमते उपपद्यते । तथा हि भूतलत्वावच्छिन्नविशेष्यकसंयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकबुद्धिं प्रति भूतलत्वावच्छिन्नविशेष्यकसंयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावबुद्धिः प्रतिबन्धिका । अत्र यदि घटाभाववद्भूतलमित्यस्य केवलभूतलविषयकत्वमेव तत्र स्यात्, तर्हि घटवद्भूतलम् इति ज्ञानं घटाभाववद्भूतलम् इति ज्ञानं प्रतिबन्धकं न स्यात् । न हि प्रमेयपदार्थास्तित्वं विना अपरस्य प्रतिबन्धकत्वं सम्भवेत् । तस्माद् यदि अभावो नाम पृथिव्या विलुप्येत, तर्हि घटवद् भूतलमिति ज्ञानं कः प्रतिबध्नीयात् ? न हि आलोकपदार्थस्य असत्त्वे अन्धकारप्रतिबन्धक आलोक इति वचनीयं स्यात् । तस्मात् सर्वत्रैव वस्तुस्थितिद्वारा प्रतिबध्यप्रतिबन्धकभावः कल्पनीयः । अतो घटाभावस्य असत्त्वे घटवद्भूतलम् इति बुद्धिर्न केनापि प्रतिबन्धितुं शक्यते ।

अपि च अभावत्वावच्छिन्नप्रकारताकबुद्धेरनुव्यवसायकाले घटाभावं जानामि इत्यनेनैव अभावत्वप्रकारकप्रमाज्ञानानुसारिणी अनुव्यवसायबुद्धिः स्यात् । न तु घटशून्ये भूतले भूतलं जानामि इति प्रत्ययः ।

## १४. अनुव्यवसायतोऽपि अभावसिद्धिः

इदमत्रावधेयम्—कण्टकाद्यभाववति भूतले पादचारणादिव्यवहारः कण्टकाद्यभावावधारणपूर्वकमेव स्यात् । यदि तु अभावो नाम कश्चिन्नास्ति, तर्हि भूतलमात्रोपलम्भात् कण्टकादिज्ञानं न सम्भवेत् । सत्स्वपि कण्टकेषु तत्र 'नास्ति' इति बुद्धिः सम्भवति । न च भूतलमात्रधीरेव कण्टकाद्यभावावधारणबुद्धिरित्यपि साम्प्रतम् । तत्र 'मात्र'शब्देन किञ्चिद् व्यवच्छिद्यते न वा ? यदि न किञ्चिद् व्यवच्छिद्यते, तर्हि अनर्थकः 'मात्र'शब्दः । अथ व्यवच्छिद्यते—अस्ति तर्हि व्यावृत्तिविषयः । स च विषयः अभावादन्यो नैव स्यात् । न च अभावस्य कारणं कल्पनालाघवात् तन्मात्रधीरेव स्यात् इति वाच्यम्, न हि प्रामाणेन अवगतस्य अर्थस्य कल्पनालाघवात् परित्यक्तुं शक्यते ।

## १५. व्यवहारतोऽपि अभावस्वीकार आवश्यक इति प्रदर्शनम्

किं बहुना—यदि अभावस्य प्रामाण्यं नाङ्गीक्रियते, तर्हि सर्वं सर्वेण सङ्कीर्येत, तथा हि क्षीरे दधि नास्ति, दध्नि च क्षीरं नास्ति इति प्रमाणसिद्धव्यवहारः । तत्र यदि अभावो नैवाङ्गीक्रियते, तदा क्षीरे दधि, एवं दध्नि क्षीरमित्यपि स्यात् । किं

बहुना—शशे शृङ्गं नास्ति इति व्यवहारासम्भवेन शशे शृंगमित्यपि व्यवहारः स्यात्। तथा चोक्तं श्लोकवार्त्तिके—

वस्तुसंकरसिद्धिश्च तत्प्रामाण्यसमाश्रया।
क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ॥२॥
नास्तिता पयसो दध्नि प्रध्वंसाभाव इष्यते।
गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते ॥३॥
शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिता।
शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥४॥
क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः।
शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि[1] ॥५॥

**१६. अभावस्य प्रमेयत्वखण्डनार्थं पुनराशङ्का, तन्निरसनं च**

अथ यदि मन्यसे घटाभाववद् भूतलमित्यादौ घटादेः अप्रतीयमानतया घटो न प्रतीयत इत्येवमर्थो व्यवहारविषयतया सिध्यति। न च तेन भूतलसत्तातिरिक्तस्य अभावस्य प्रमेयत्वं युक्तिसिद्धम्, इति चेत्, तत्रोच्यते वैशेषिकैः—सत्यपि घटे कुतश्चित् प्रतिबन्धाद् न प्रतीयते घट इति व्यवहारः स्यात्। न तु पुनस्तत्र घटो नास्ति इति व्यवहारः सम्भवेत्। अतो घटो न प्रतीयत इत्यनेन घटाभाववद् भूतलमिति प्रतीतिसिद्धस्य पदार्थस्य न गतार्थत्वम्। किं बहुना—घटो भविष्यति इत्यनेन यः प्रागभावः प्रतीयते, तथा घटो विनष्ट इत्यनेन घटाध्वंसः, तथा घटो नास्ति इत्यनेन घटात्यन्ताभावः, तथा घटो न पटः इत्यनेन प्रतीयमानोऽन्योन्याभावः प्रतीतिभेदाद् वैलक्षण्यम् आवहति। अतः प्रतीतिसाक्षिकतया अभावस्य वस्तुत्वमङ्गीकरणीयम्।

तथा चानुमानम्—अभावो वस्तु चतुर्धा भेदाद् द्रव्यादिवत्। तथा चोक्तं श्लोकवार्त्तिके—

न चावस्तुनः एते स्युर्भेदास्तेनास्य वस्तुता।
कार्यादीनामभावः को यो भावः कारणादिना[2] ॥८॥

## (घ) अभावस्य तत्त्वान्तरत्वमनङ्गीकुर्वतां बौद्धानां मतम्, तत्र भाट्टमीमांसकानाम् उत्तरं च

**१७. स्वेतरव्यावृत्तस्यैव वस्तुस्वरूपत्वेन भावेतरव्यावर्त्तकाभावाद् अभावो न तत्त्वान्तरमिति पूर्वपक्षः**

अथ केचिदपरे एवं प्रत्यवतिष्ठन्ते—तथा हि वस्तूनि प्रत्यर्थनियतत्वेन स्व-स्वरूपात्मना परस्परं भिद्यन्ते, यथा नीलादयः। तथा च नीलमित्युक्तौ विजातीयेतर-

१. श्लोकवार्तिके—अभावपरिच्छेदे।     २. तदेव।

भेदमात्रमवगाह्यते—अनीलव्यावृत्तं नीलमित्यर्थः। तस्माद् येषां प्रत्यक्षादिप्रतीति-योग्यं सजातीयेतरभेदस्वरूपं किञ्चित् सिध्यति, तेषामेव स्व-स्वरूपेण स्वेतरव्यावर्त्तक-तया भेदः सम्भवेत्। अभावस्य च पुनः भावात् किञ्चित् भेदकं नोपलभामहे। यतः प्रत्यक्षयोग्यस्यैव स्वेतरव्यावर्त्तकत्वं प्रमाणसिद्धम्। अभावस्तु नैव प्रत्यक्षसिद्धः। प्रत्यक्षस्य सतत्त्वनियतत्वात्। अभावस्य तु तुच्छत्वाद् न प्रत्यक्षयोग्यत्वम्। तस्माद् अभावो न किञ्चित् तत्त्वान्तरम्। अभावव्यवहारस्तु नास्तीति विकल्पशब्दप्रयोगात्मा भावाश्रय एव कथञ्चिद् उपपादनीयः, न तु एकाकारप्रतिनियतादन्यासंसर्गिणी भावादन्योऽभाव इति। उक्तं च—'भावादन्यः अभावोऽस्ति न कश्चिदनिरूपणात्'। अत्र भाट्टैः प्रत्युच्यते—नास्तीति व्यवहारो विकल्पप्रयोगात्मा इति यदुक्तं भवद्भिः, तेनैव अभावस्य पदार्थस्य भवन्मतप्रक्रियया सिद्धिरापतिता, तथा भवन्मते विकल्पो नाम—अभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः कल्पना[1] इति।

**१८. शब्दप्रयोगस्य कल्पनात्मकत्वेन अभावाख्यवस्त्वभावे अभावशब्दानुपपत्तिरिति उत्तरपक्षः**

तथा हि वाचकेन शब्देन वाच्यस्य अर्थस्य सम्बन्धज्ञानमेव कल्पनासंज्ञां लभते। ततो यदि अभावो नाम कश्चिदर्थ एव नास्ति, तर्हि नास्तीति व्यवहारस्य विकल्प-प्रयोगात्मकत्वं नैव सङ्गच्छते। तस्माद् यदि नास्तीतिशब्देन किञ्चिदिह प्रत्याय्यते, तर्हि तथाविधः प्रत्ययो विकल्पो भवेत्, यस्य च न स्वरूपं किञ्चिदस्ति, तदेव निर्विकल्पकं शब्दाद्यविषयं सम्भवति। अत एव तत्तत्स्वरूपमाश्रित्य शब्दादिप्रयोगे कृते शब्दजन्यस्य तथाविधस्य बोधस्य कल्पनाप्रभवतया विकल्पत्वं सङ्घटते। अत्र यदि अभावस्य स्वरूपमेव किञ्चिन् नास्ति, तर्हि किमाश्रित्य कल्पना प्रवर्त्तते। अथ यद्येवमुच्यते यद् यथा जात्यादीनां असत्त्वेऽपि समारोपितविषयतया विकल्पविज्ञानं तत्र प्रवर्त्तते, एवम् अभावोऽपि स्यात्।

न चानेन अभावविकल्पो दुष्यति इति चेत्, तत्रोच्यते भाट्टैः—वस्तुतः स्वरूप-सिद्धावेव एकत्र स्थितस्य तस्य अन्यत्र समारोपः सम्भवेत्। दृश्यते तु रज्जुसर्पादि-समारोपस्थले अन्यत्र प्रसिद्धस्य वस्तुभूतस्यैव सर्पस्य रज्ज्वां समारोपः। अत्र च पुनः यदि अभाव एव वस्तुभूततया नाङ्गीक्रियेत, तर्हि आकाशकुसुमादीनामिव अभावाना-

---

१. सूत्रार्थः—अभिलप्यते उच्यते अनेन इति अभिलापः वाचकः शब्दः। स च संकेतकालेन दृष्टेन रूपेण ऐक्यम् आपादितः। अन्तर्जल्पाकारस्तथा प्रतिभासमानो वाच्योऽभिलापेन वाचकेन संसर्गः सम्बन्धः। अभिलापसंसर्गाय योग्य इति अथकथनमिदम्। अभिलाप-संसर्गाय योग्य अभिधेयाकाराभासो यस्यां प्रतीतौ, सा कल्पना इति सूत्रार्थः (न्यायबिन्दौ-२१५)।

मपि समारोपः कथङ्कारं स्यात् ? न च कल्पिताकारभेदानध्यवसायाद् एकत्वाध्यवसाय एव समारोप इत्यपि वाच्यम्, यदि पूर्वापरयोः एकत्वाध्यवसायः सम्भवेत्, तदैव पुनः एवं रीत्या समारोपोऽपि कल्पयितुं शक्येत । क्षणिकत्ववादिनां च बौद्धानां मते उत्पन्नविनष्टानां वस्तूनां पौर्वापर्याभावेन एकत्वप्रतिसन्धानमेव न सङ्गच्छते । तस्मात् तया रीत्या समारोपः कल्पयितुं न युज्यते । एवम् असति च विपर्यये समारोपत्वाभिधानमलीकमेव स्यात् । तस्मात् "नास्ति" इति एकशब्दोपसृष्टं किञ्चिद् भाववद् अभावाख्यमपि स्वरूपं किञ्चिदवस्थितं सिध्यति ।

**१९. मुद्गरादिप्रहारेण घटानुपलब्ध्यापि अभावः सिध्यतीति प्रदर्शनम्**

अपि च, यदि अभाव एव नास्ति, तर्हि मुद्गरादिप्रहारे कृते घटस्य अनुपलब्धिः कथम् ? न च विनष्टत्वाद् अनुपलब्धिरिति वाच्यम्, विनाशस्य अभावत्वानतिरेकात् । तथा हि मुद्गरादिप्रहारात् प्राक् कम्बुग्रीवादिमत्त्वावच्छिन्नस्य घटस्य जलाहरणाद्यर्थक्रियाकारित्वमुपलभ्यते । प्राहृते च मुद्गरेण नैव तथा इति घटस्य अनुपलम्भे विना विनाशं न किञ्चत् कारणमुपलभ्यते, विनाशस्तु अभाव एव ।

अत्र पुनरपि बौद्धानामाशङ्का—ननु भाव इत्यनेन सत्ता अवगम्यते । तथा च सति अभावो वस्तुत्वेन सन् इति न सम्भवति । अतो वस्तुत्वसमनियतसत्ताऽसम्भवाद् अभावोऽस्तु । इदमत्र सौगतानां विवक्षितम्—पदार्थत्वम् अस्तित्वसमनियतम् । अस्तित्वं च भावत्वानतिरिक्तम् । अत एव आकाशकुसुमादीनाम् अस्तित्वविरहेणैव न भावत्वम्, न वा पदार्थत्वमपि । तस्माद् भावः सत्ता इति फलितम् । सत्त्वं च अर्थक्रियाकारित्वम्, न च अभावानां किञ्चिदर्थक्रियाकारित्वं सिध्यति । यतः स्वलक्षणं वस्तु स्वेतरव्यावृत्तरूपेण स्वमहिम्नैव अर्थक्रियाकारि भवेत् । न हि आगन्तुकेन रूपेण अर्थक्रियाकारित्वं सिध्यति । दृश्यते च गुडादीनां माधुर्यं नागन्तुकम्, किन्तु स्वाभाविकमेव तत् सत् । अतोऽभावो यदि क्वचिदपि किञ्चिदर्थक्रियाकारी भवेत्, तदैव तस्य पदार्थत्वं सम्भाव्येत । नास्ति पुनरभावानां तुच्छत्वादेव अर्थक्रियाकारित्वम् । अभावो नाम किञ्चिद् वस्तु न सिध्यति । अपि च अभावः सन् असन् वा ? बन्ध्या पुत्रवती इतिवद् अभावः सन् इति व्याहतं वचः । अथ यदि असन् अभावः, तर्हि आकाशकुसुमादेरिव तुच्छस्य तस्य पदार्थत्वं ब्रुवाणः प्रेक्षावद्भिरुपहस्येत । अतो न कथमपि अभावस्य पदार्थत्वं विचारशीलानां युक्तिसिद्धं स्यात् ।

**२०. भावसत्तयोस्तुल्यार्थकतया भावभिन्नस्य अभावस्य अवस्तुत्वमिति पूर्वपक्षः । ज्ञानजननाख्यार्थक्रियाकारित्वेन अभावे गौणतया सत्त्वव्यवहारः, तथा विहिताकरणस्य प्रागभावरूपस्य पापजनकत्वेन वस्तुत्वमपि सिध्यतीति प्रतिपादनम्**

अत्रोच्यते भाट्टैः—अभावस्य च ज्ञानजननाख्यार्थक्रियाकारित्वदर्शनाद् अभावे गौणतया वस्तुत्वव्यवहारः । न तु मुख्यतस्तत्र वस्तुत्वं सिध्यति । अपि च विहितस्य

अकरणे तदकरणस्य विहितप्रागभावरूपतया प्रत्यवायहेतुत्वं शास्त्रेषु श्रुतम्। तस्मात् प्रत्यवायाख्यकार्यजनकत्वेन अभावस्य वस्तुत्वं वेदितव्यम्। तथा च विहितानां कार्याणां यः प्रागभावः, स एव पुनः कारणत्वेन वस्तुत्वमावहति। तस्माद् वस्तुस्वरूपस्यैव अभावस्य शशशृङ्गादीनामिव तुच्छत्वमनुपपन्नम्।

**२१. अभावस्यापि अस्तित्वव्यवहारास्पदत्वेन नालीकत्वम्, अर्थक्रियाकारित्वस्य सत्त्वानुपपादनं च**

एतत् पुनरिहावधेयम्—अस्तित्वेन व्यवहारानास्पदं यत्, तदेव अलीकम्। न हि शशशृङ्गमस्ति इति व्यवहारः क्वचिदपि सम्भवेत्। अभावस्तु पुनः अस्तित्वव्यवहारकक्षान्तर्गतः सर्वेषामनुभवसिद्धः। तेजसि गन्धाभावोऽस्ति, वायौ रूपाभावोऽस्ति, इत्यादिव्यवहारो भ्रमप्रमाद्यनास्कन्दिततया प्रमात्वसाधको भवत्येव। एवं विशेषाभावकूटानाम् अस्तित्वव्यवहारास्पदतया सुतरां सामान्याभावस्यापि अस्तित्वव्यवहारविषयत्वं सिध्यति। अतः 'अभावः' अस्ति इति व्यवहारस्य सिद्धतया आकाशकुसुमादिवत् तुच्छत्वम् अभावस्य न सम्भाव्यते।

यच्च पुनरुक्तम्—अर्थक्रियाकारित्वं सत्त्वं तदपि न संगच्छते, व्यभिचारात्। दृश्यते च घनान्धकाराच्छन्ने वर्त्मनि निर्विषेण सर्पेतरेण मूषिकादिना सन्दष्टस्य आशीविषेण सर्पेण दष्टोऽस्मि इति दृढनिश्चयवशात् शङ्कितविषप्रभावेणैव मरणम्। तत्र विषस्य अर्थक्रियाकारित्वं वर्त्तते, न पुनः विषसत्ताम्। एवं स्वप्नादिस्थलेऽपि भीषणाकृतिसिंहादिदर्शनेन महाभयं समुत्पन्नं भवेत्, न च तत्र भयार्थक्रियाकारिणां सिंहादीनां सत्त्वम्। अतः सत्त्वस्य अर्थक्रियाकारित्वव्यभिचारात् नार्थक्रियाकारित्वं सत्त्वम्, अपि च, अर्थक्रियाकारित्वस्य अर्थक्रियाकारित्वान्तरं वर्त्तते न वा ? वर्त्तते चेत् तस्यापि पुनः अर्थक्रियाकारित्वान्तरस्वीकारध्रौव्याद् अनवस्था दुष्परिहारा। अथ यदि अर्थक्रियाकारित्वान्तरविरहादपि अर्थक्रियाकारित्वं सत्त्वं भवेत्, तर्हि अभावस्यापि अर्थक्रियाकारित्वराहित्यात् सत्त्वं कथं नाङ्गीकर्त्तव्यम् ? अतः अर्थक्रियाकारित्वं सत्त्वम्, इत्येव रिक्तं वचः। अभावस्य च पुनरर्थक्रियाकारित्वं प्रदर्शितमस्माभिः।

**२२. भावाभावद्वयात्मकं वस्तुस्वरूपमिति भाट्टसिद्धान्तप्रदर्शनम्**

एतदपि न विस्मर्त्तव्यं यत् सर्वं वस्तु स्वेन रूपेण सदपि धर्मान्तरेण असदिति व्यवह्रियते। गोत्वेन रूपेण सन्नपि गौः अश्वत्वेन रूपेण न सत्, तस्माद् द्वयात्मकं वस्तु अवगम्यते भावाभावाभ्याम्।

नन्वेवं वस्तूनां द्वयात्मकत्वे भावाभावयोरभेद एव भवतामभिप्रेत इति चेत्, तत्रोच्यते—एवंभूतयोः भावाभावयोः धर्मधर्मिरूपतया भेदोऽपि कियानस्त्येव। तथा

हि यावद् घटो नोत्पन्नः, तावत् कपाले विद्यमानो घटप्रागभावः कपालधर्मितया प्रतीयते। तथा च व्यवहारः—घटप्रागभाववान् 'अयं कपालः', तस्माद् धर्मधर्मितया भावाभावयोः तत्र भेदोऽपि अस्त्येव। तथोक्तं भट्टपादैः श्लोकवार्त्तिके—

**न चावस्तुनः एते स्युः भेदस्तेनास्य वस्तुता।**
**कार्यादीनामभावः को यो भावः कारणादिना**[1] ॥ इति।

**२३. प्रागभावादिभेदेन चातुर्विध्यादपि अभावस्य वस्तुत्वं स्वीकर्त्तव्यमिति प्रदर्शनम्**

चतुर्विधेषु अभावेषु सर्वत्रैव अभावत्वावच्छिन्नप्रकारकबोधोदयात् तथा अयं प्रागभावः, स च ध्वंसाभावाद् व्यावृत्त इत्यादिरूपेण प्रत्येकमभावेषु व्यावृत्तबुद्धेरपि उदयाद् अभावस्य प्रमेयत्वं वस्तुभूतत्वं च सिध्यति। तथा चात्रानुमानम्--अभावो वस्तु, सामान्यविशेषात्मकत्वात्, गवादिवत्'। एवं प्रमेयत्वादिति हेतुनापि अभावस्य वस्तुत्वं सिध्यति।

**२४. अभावस्य भावाभावात्मकत्वे मीमांसकाभिमतमनुपलब्धिप्रमाणं नोपपद्यते इति पूर्वपक्षः**

नन्वेवं यदि भावाभावात्मकं वस्तु, तर्हि सर्वत्रैव प्रत्यक्षादिभिरपि वस्तुनि गृह्यमाणे द्वयात्मकत्वं प्रतिभातं भवतु, किं पुनः षष्ठप्रमाणाङ्गीकारेण इति चेत्, अत्रोच्यते—यद्यपि गवादिकं वस्तु गोत्वादिरूपेण सद्रूपम्, अश्वत्वादिरूपेण च न तथा इति द्वयात्मकमेव, तथापि चक्षुरादीन्द्रियसन्निकर्षेण केवलं सद्रूपतैव गृह्यते—न असद्रूपता, यतः सर्वत्रैव द्वयात्मकानां वस्तूनां किञ्चिदेव कदाचित् प्रतीयते, न तु सर्वात्मकमेव ग्रहीतव्यम्। तत्रेदं कारणं यद् उद्भूतं हि वस्तु गृह्यते, न अनुद्भूतम्। अतो यदैव सदसतोः उद्भूतं भवति—तेनैव बुद्धिव्यपदेशः। तत्र च प्रत्यक्षस्थले सद्रूपमेव उद्भूतमिति व्यवहारानुकूलतया तदेव रूपं प्रत्यक्षेण गृहीतम्। अत एव यत्र सत्यपि प्रत्यक्षकारणे विषयमन्तरेण तत्तत्कारणसमवधानेऽपि विषयस्य अनुपलब्धिः, तत्र प्रतियोग्यारोपक्रमेण अनुपलब्धिप्रमाणाद् अभावो गृह्येत। अतो न कश्चिद् दोषः।

तथा चोक्तं श्लोकवार्त्तिके—

**स्वरूपपररूपाभ्यां नित्यं सदसदात्मके।**
**वस्तुनि ज्ञायते कैश्चिद् रूपं किञ्चित् कदाचन॥**
**यस्य यत्र यदोद्भूतिर्जिघृक्षा वोपजायते।**
**चेत्यतेऽनुभवस्तस्य तेन च व्यपदिश्यते**[2] ॥ इति।

---

१. श्लोकवार्त्तिके, अभावपरिच्छेदे—९ श्लोकः।

२. श्लोकवार्तिके - अभावपरिच्छेदे— २२-२३।

अत इदमेव तत्त्वं यद् भावात्मकस्य प्रमेयस्य प्रमाणं भावरूपमेव। अत एव तत्र अभावस्य प्रमाणत्वं नास्ति। एवमभावस्य प्रमेयस्य अभावाख्यं प्रमाणमेव स्यात्। तथा हि—

**भावात्मके यथा मेये नाभावस्य प्रमाणता।**
**तथाऽभावप्रमेयेऽपि न भावस्य प्रमाणता[१]॥**

**२५. भावत्वं भावप्रमाणगोचरम्, अभावत्वं च अभावप्रमाणगोचरम् इति भाट्टसिद्धान्तः**

ननु प्रमाणमभावाख्यमिति कथम्? प्रत्यक्षादीनां भावत्वदर्शनादिति चेद् भावात्मकमेव प्रमाणम् इति नेयं राजाज्ञा। यत्र यादृशं वस्तु, तत्र तदनुरूपमेव प्रमाणं भवेत्। अतः अभावाख्यस्य प्रमेयस्य सिद्धौ तद्ग्राहकं प्रमाणमपि अभावाख्यं स्यादेव, यतः अर्थपरिच्छेदो हि प्रमाणफलम्। तच्च फलं यथा भावरूपेण प्रमाणेन, तथा अभावेनापि प्रमाणेन तुल्यमेव स्यात्। यथा—

**भावात्मकस्य मानत्व न च राजाज्ञया स्थितम्।**
**परिच्छेदफलत्वाद्धि प्रामाण्यं स्याद् द्वयोरपि[२]॥**

अतोऽभावाख्यं प्रमाणं तद्ग्राह्यं प्रमेयं च वस्तुतत्त्वानुसन्धिना प्रेक्षावता नैव अनङ्गीकर्तुं शक्यम्।

## ङ) अभावस्य पदार्थान्तरत्वे नैयायिकमतारम्भः

**२६. तत्र नास्तीत्यादिप्रतीतिसिद्धः अभाव इति स्थापनम्**

नैयायिकास्तु अभावस्य पदार्थान्तरत्वमङ्गीकुर्वन्त एवमाहुः—घटाभाववद्-भूतलम् इत्यत्र भूतलत्वावच्छिन्नविशेष्यतानिरूपितघटाभावत्वावच्छिन्नप्रकारताशाली बोधो जायते। तत्र अभावत्वावच्छिन्नप्रकारताशालिप्रमायाः अभावं विना नोपपत्तिः। यदि अभावः पदार्थान्तरं न भवेत्, तर्हि अभावत्वावच्छिन्नप्रकारताशालि-प्रमाज्ञानं नोपपद्यते।

**२७. अभावस्य देशकालादिभिः सम्बन्धासिद्धेः स्वतन्त्रपदार्थत्वाऽसम्भवशङ्का, तत्रैव बौद्धमतप्रदर्शनं च—**

अत्राहुः सौगताः—घटो नास्ति इत्यादिना प्रतीयमानः अभावो न घटाभाव-स्वरूपत्वेन स्वतन्त्रतया अनुभूयते; अपि तु देशकालप्रतियोगिविशिष्टत्वेन। अत एव इह इदानीम् इदं नास्ति इत्येवं प्रतीयते। नन्वेवं प्रतीयमानस्यापि स्वातन्त्र्यं कथं नाङ्गीक्रियते इति चेत्, तत्रोच्यते—एवं प्रतीयमानोऽपि यदि देशकालादिभिः सम्बद्धः

---

१. श्लो० वा० अ० प्र०–४६। २. तदेव-४७।

स्यादभावः, तदा तस्य स्वातन्त्र्यं सिध्यति। न तु पुनः देशेन कालेन वा सम्बध्यते अभावः, संयोगसमवायादीनामनुपपत्तेः। एवं च सम्बन्धराहित्येन अभावो विशेषण-मपि भवितुं नार्हति। विशेष्येण देशकालादिना सम्बन्धाऽसम्भवात्। न हि विशेष्येण असम्बद्धमपि विशेषणं स्यात्। तथा चोक्तं ज्ञानश्रीमित्रनिबन्धावलौ–'न चाभावो नाम विग्रहवान्, येन अन्वयव्यतिरेकिणा रूपेण साक्षात्कर्त्तव्यः, किन्तु व्यवहर्त्तव्यः[1]' इति।

ननु यदि अभावः स्वतन्त्रो नास्ति, तर्हि निषेधप्रतीतेः विषयः क इति चेत्, तत्रोच्यते सौगतैस्तत्रापि देशकालसम्बद्धस्य वस्तुस्वभावस्य अनुभूतिसिद्धतया तथा-विधसम्बन्धासिद्धेः अभावस्य वस्तुतया अगम्यत्वात्। उक्तं च ज्ञानश्रीमित्रपादैः— 'वेद्ये यत्र हि यन्मतिर्नियमतः स्याद् वा न वा तस्य धीरिष्टा नोऽनुपलब्धिरन्य-विरहज्ञानस्थितेराश्रयः[2]'।

अत्रेदं तात्पर्यम्—घटो नास्ति इत्यादौ प्रतीयमानस्य घटाभावस्य नास्ति कश्चित् प्रत्यक्षयोग्यो विग्रहः। अपि तु, सत्यपि प्रत्यक्षकारणे तत्र स्थितानां सर्वेषां प्रत्यक्षसत्त्वेऽपि घटस्य प्रत्यक्षाभावाद् घटो नास्तीति व्यवहारमात्रम्। तत्र च व्यवहारं प्रति किं कारणमिति चेत्, एकाकारनियम एव। तथा हि अभिज्ञेन जनेन घटादर्शनाद् एकत्र यथा घटो नास्तीति व्यवह्रियते, तथैव सर्वत्र प्रत्यक्षकारणकलापे सति घटा-दर्शनात् घटो नास्तीति निषेधात्मकव्यवहारस्तस्य प्रवर्त्तते। यश्च अपटुः जनः, स घटानुसन्धानेन तमनुपलभ्य तत्र घटो नास्तीति निषेधात्मकं व्यवहारं करोति, तत्सादृश्याद् अन्यत्रापि तथैव व्यवहरति। यश्च अतिशयमन्दमतिः, स घटानुपलम्भेऽपि तत्र सन्दिहानो घटो नास्तीति प्रवर्त्तते।

तथा चोक्तं ज्ञानश्रीपादैः—'न चाभावो नाम विग्रहवान्, येन अन्वयव्यति-रेकिणा साक्षात्कर्त्तव्यः, किन्तु व्यवहर्त्तव्यः। स च एकाकारनियमात् पटुना व्यवहर्त्तु-मध्यक्षेण शक्य एव। यः पुनः अपटुः आपातत प्रवृत्तेऽपि अभावनिश्चये संशेते सादृश्यमस्य अनुपलम्भनमात्रमनुसृत्य तद्व्यवहारं प्रवर्त्तयति, यस्तु ततोऽपि अपटुः, स दृश्यानुपलम्भेऽपि सन्दिहानो व्यापकानुपलम्भेन प्रवर्त्तते[3]'।

अत्रायमभिसन्धिः—यस्मिन् विद्यमाने यद् अवश्यं विद्यते, तस्य अभिन्नेन्द्रिय-ग्राह्यस्य अनिन्द्रियग्राह्यस्य वा बुद्धिरेव अनुपलब्धिः। सा च केवलं व्यवहारमात्रमेव साधयति, अन्यथा प्रत्यक्षसिद्धिः स्यात्। तदर्थमेव च अभावज्ञानस्य व्यवहारसाध-कत्वम्। न तु अभावः कश्चिद् विग्रहवान् इति निश्चयार्थम्। यथा नीलमिदम् इति

---

१. ज्ञानश्रीमित्रनिबन्धावल्याम्–पृ० २८६। २. तदेव–पृ० २८३।
३. ज्ञानश्रीमित्रनिबन्धावल्याम्–पृ० २८६।

निश्चये अनीलो न भवति इति व्यवहारः, न तु तेन नीले नीलेतराभावस्य विग्रहवतः कस्यचित् स्थितिर्बोध्यते ।

### (च) न्यायमतमाश्रित्य घटो नास्ति इत्यादिप्रतीतेः आधाराधेयभाव-घटितत्वेन अभावस्य देशसम्बन्धप्रतिपादनम्

अत्रेदमुच्यते—किञ्चिदधिकरणे यदा किञ्चिद् व्यह्रियते, तदा तस्मिन्नधिकरणे व्यवह्रियमाणेन वस्तुना भवितव्यम्, यतः अधिकरणेन सम्बन्धं विना आधेयतया प्रतीतिः नैव सिध्येत् । न हि घटेन सम्बन्धं विना 'भूतलं घटवत्' इति प्रतीतिः । एवं च सति भूतले घटो नास्ति इति व्यवहारस्तदैव सम्भवेत्, यदि भूतलाधिकरणे आधेय-तया प्रतीयमानस्य घटाभावस्य केनचित् सम्बन्धेन वैशिष्ट्यं सिध्येत् । तत्र यदि घटा-भावः कश्चिद् विग्रहवान् न भवेत्, तर्हि घटाभाववद् भूतलमित्यत्र भूतलस्य अधि-करणतया घटाभावस्य च आधेयतया प्रतीतिः न कथञ्चिद् उपपद्येत । अतो नास्ति अभावो विग्रहवान्, प्रतीयते च पुनः कस्मिंश्चिदधिकरणे व्यवह्रियमाणः इति परस्परं व्याहतं वचः । भूतलघटाभावयोः सुतरामेव नैक्यम्, एकत्वे तादात्म्यावागाहित्वेन आधाराधेयतया प्रतीतिः नोपपद्यते । तस्माद् यदि भूतले घटो नास्तीति व्यवहारः स्वीक्रियेत, तदा तत्र घटाभावाख्यस्य स्वतन्त्रस्य पदार्थस्य अस्तित्वमपि स्वीकर्त्तव्यम् । अतो बौद्धाभिमतं नैव ग्राह्यम् ।

### (छ) अभावस्य अधिकरणस्वरूपताविमर्शः, तत्र न्यायसिद्धान्तः

**२८. न्यायमते अभावस्य प्रत्यक्षग्राह्यतया तत्र इन्द्रियसन्निकर्षासम्भवाशङ्का, अतः अधिकरणेन्द्रियसन्निकर्षेणैव अभावप्रतीतिसिद्धौ अभावस्य अधिकरणात्मकत्व-मिति पूर्वपक्षः**

ननु घटाभाववद्भूतलमिति ज्ञानं प्रत्यक्षात्मकमेव न्यायनये इष्टम्, इन्द्रिय-सन्निकर्षातिरिक्तस्य कारणान्तरस्य तत्र असत्त्वात् । इन्द्रियसन्निकर्षस्तु तत्र सुतरा-मावश्यकः, ग्राह्येन्द्रियसन्निकर्षस्य सर्वत्र प्रत्यक्षप्रयोजनकत्वात् 'भूतलं घटाभाववत्' इत्यत्र तु पुनः भूतलातिरिक्तत्वेन अभावाख्येन सन्निकर्षश्चक्षुरादीनां नैव सम्भवेत् । तथा हि रूपवद् द्रव्यमेव चक्षुषा सन्निकर्षेण ग्राह्यम्, अभावस्तु न रूपवद् द्रव्यम् इति नैव तेन सक्षुःसन्निकर्षः सम्भवेत् । एवं स्पर्शविशिष्टद्रव्यस्यैव त्वगिन्द्रियग्राह्यतया अभावस्य च अतथात्वात् न त्वचापि अभावसन्निकर्षः सम्भवेत् । घ्राण रसन-श्रोत्राणां च यथाक्रमं गन्ध-रस-शब्द-ग्राहकाणां सुतरां न अभावग्राहकत्वम् । अत एव घटा-भाववद्भूतलम् इत्यादौ भूतलग्राहकसन्निकर्षेणैव अभावस्यापि ग्रहणात्, अभावः

भूतलाद् नातिरिच्यते। यदि हि अभावः भूतलातिरिक्तः स्यात्, तर्हि भूतलग्राहकसन्निकर्षातिरिक्तसन्निकर्षग्राह्यः स्यात्, स च नास्ति, तस्मात् भूतलग्राहकसन्निकर्षग्राह्यत्वाद् भूतलवृत्त्यभावस्य न भूतलातिरिक्तत्वम्।

**२९. घटाभावस्य भूतलादिस्वरूपत्वे सर्वत्रैव भूतले घटाभावप्रतीतिः कथं न स्यात्? इति प्रश्ने प्रतियोगिस्मरणं विना तदभावबुद्धिः न भवेत् इति पूर्वपक्षीणामुक्तिः**

न च घटाभावस्य यदि भूतलानतिरिक्तत्वम्, तर्हि यत्रैव भूतलज्ञानम्, तत्रैव घटाभावज्ञानं स्यात्। एवं भूतलं जानामि इति अनुव्यवसायस्य घटाभावं जानामि इत्याकारकत्वापत्तिर्दुर्वारा इति वाच्यम्, प्रतियोगिस्मरणं विना अभावज्ञानानुदयात्। तथा हि भूतलस्य घटाभावादिरूपत्वेऽपि यदा भूतलदर्शनेन घटाख्यप्रतियोगिनः स्मरणम्, घटेन च न इन्द्रियसंयोगः, भूतलस्य घटाभाववत्तया ज्ञानम्। भूतलस्य घटाभावरूपत्वेऽपि यावद् घटाख्यप्रतियोगिस्मरणं न भवेत्, न तावत् घटाभावरूपेण भूतलस्य ज्ञानमपि। या च पुनः अनुव्यवसाये आपत्तिः प्रदर्शिता, साऽपि न युज्यते, यतः अभावज्ञाने जाते तदनन्तरमेव अनुव्यवसाये घटाभावज्ञानं प्रतिभासेत। यावच्च भूतलस्य घटाभावत्वेन ज्ञानं न भवेत्, तावद् घटाभावं जानामि इत्यनुव्यवसायोऽपि सुतरां न सम्भवति।

**३०. नानाधर्मकस्यापि वस्तुनो यत्किञ्चिदेकेन धर्मेण प्रतीतिकाले सर्वधर्माणां भानं न आवश्यकम्**

अपि च, एकस्य वस्तुनो विभिन्नरूपत्वेऽपि एकरूपता ज्ञाने न सर्वप्रकारेण ज्ञानं भवेत्। दृश्यते च एकैव नारी, कन्या, पत्नी, माता, भगिनी चेति विविधेन रूपेण वर्त्तते। न हि तत्र व्यक्तिभेदः, तस्याः स्त्रिय एकत्वात्। न च पुनस्तत्र कन्यात्वेन ज्ञातेऽपि मातृत्वेन वा भगिनीत्वेन वा ज्ञानं तत्र नियतम्। एवं तत्र यया सम्बन्धव्यपेक्षया एकरूपेण भानम्, रूपान्तरं च तत्र नैव भातम्। एवमत्रापि भूतलत्वेन भानेऽपि सर्वदैव अभावत्वेन भानं नावश्यकम्।

यथा वा एकस्यैव घटस्य पदार्थत्वद्रव्यत्वघटत्वाद्यनेकधर्मावच्छिन्नत्वेऽपि घटत्वावच्छिन्नतया द्रव्यत्वावच्छिन्नतया भानं न आवश्यकम्, एवमत्रापि भूतलत्वावच्छिन्नज्ञाने न घटाभावत्वेन ज्ञानमावश्यकम्। अतो घटाभावस्य भूतलानतिरिक्तत्वेऽपि न कोऽपि दोषः।

अत्रेदमुच्यते—भूतलत्वावच्छिन्नविशेष्यकसंयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताकज्ञानं प्रति भूतलत्वावच्छिन्नविशेष्यकसंयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावज्ञानं ग्राह्याभावमुद्रया प्रतिबन्धकम्, तत्र प्रतिबध्य-प्रतिबन्धकतया

च परस्परविरोधित्वेनैव सम्भवेत् । विरोधित्वं चात्र सहानवस्थायित्वं बोध्यम् । अत्र यदि घटाभावो भूतलाद् नातिरिच्यते, तर्हि यत्र भूतलत्वं तत्रैव घटाभावस्य नियतत्वाद् भूतले घटावस्थानं न सम्भवेत् ।

**३१. अभावस्य अधिकरणातिरिक्तत्वव्यवस्थापनार्थं नैयायिकानामुत्तरं—तत्रादौ प्रतिबध्यप्रतिबन्धकभावविचारमुखेन अभावस्य स्वातन्त्र्यप्रतिपादनम्**

न हि यत्र अन्धकारो वर्त्तते, तत्रैव तद्विरोधिन आलोकस्यापि अवस्थानं सम्भवेत् । अतो 'भूतलं घटवत्' इति सर्वजनानुभवसिद्धप्रतीतेः भूतले घटस्यावस्थानं स्वीकर्त्तव्यम् । भूतलस्य घटाभावस्वरूपत्वे भूतलस्य तत्र अवस्थानेन च घटाभाव-घटयोः सहानवस्थायित्वलक्षणविरोधाभावाद् घटवद् बुद्धिं प्रति घटाभावज्ञानं प्रतिबन्धकं न भवेत् । तस्मादकामेनापि भूतलस्वरूपाद् घटाऽभावस्य व्यतिरिक्तत्वं वाच्यमेव ।

**३२. प्रतियोगिग्राहकेन्द्रियग्राह्यतया अभावस्य अधिकरणातिरिक्तस्वरूपव्यवस्थापनम्**

वस्तुतस्तु अभावस्य अधिकरणानतिरिक्तत्वे अभावप्रत्यक्षं दुरुपपादनीयं स्यात्, यतः प्रतियोगिग्राहकेनैव इन्द्रियेण अभावप्रत्यक्षमिति नियमः । न हि चक्षुषा गन्धाभावः प्रत्यक्षीकर्त्तुं शक्यते । न वा घ्राणेन रूपाभावोऽपि संवेद्यः स्यात् । एतन्नियमानङ्गीकारे अन्धस्यापि घ्राणेन्द्रियादिभिः नीलपीताद्यभावः प्रत्यक्षः स्यात् । न चैवमस्ति तस्मात् प्रतियोगिग्राहकेण इन्द्रियेण अभावानां प्रत्यक्षमित्यवश्यमङ्गीकर्त्तव्यम् । एवं च सति यदि अभावः अधिकरणाद् नातिरिच्यते, तदा जलाधिकरणस्य गन्धाभावस्य अप्रत्यक्षत्वापत्तिः, यतः तत्र भवन्मते गन्धाभावो जलस्वरूपाद् नातिरिक्तः । एवं च सति घ्राणेन्द्रियग्राह्यगन्धाभावस्य जलस्वरूपतया जलस्य च घ्राणेन्द्रियग्रहणात् सुतरामेव जलस्वरूपगन्धाभावोऽपि घ्राणेन्द्रियेण ग्रहीतुं नैव शक्यते । तथा च 'जलं गन्धाभाववत्' इति नोपपादनं सम्भवति ।

ननु 'जलं गन्धवत्' इति प्रत्यक्षाभावात् सुतरामेव जले गन्धाभावसिद्धौ जलं गन्धाभाववद् इत्यप्रत्यक्षेऽपि न कापि क्षतिरिति चेत्, तत्रोच्यते—यत्किञ्चिदधिकरणे घटादिप्रतियोगिताकाभावज्ञानं विना तत्र घटो नास्ति इति व्यवहारसम्भवे, तत्र घटप्रत्यक्षाभावः अनुपपन्नः, यतः 'भूतलं घटवत्' इति प्रत्यक्षं प्रति भूतलानुयोगिक-घटप्रतियोगिकसंयोगः सन्निकर्षो भवति । सन्निकर्षश्च सम्बन्धात्मक इति सम्बन्धिद्वय-सापेक्षः । अतो यत्र तथाविधः सन्निकर्षो नास्ति, तत्र भूतलस्य विद्यमानत्वेऽपि संसर्ग-प्रतियोगिनो घटस्य असत्त्वादेव तथाविधसन्निकर्षाभावः स्वीकर्त्तव्यः । अतो यत्र घटो नास्ति, तत्रैव 'भूतलं घटवत्' इत्याकारकप्रत्यक्षाभावः । तत्र 'भूतलं घटवत्' इत्याकारकप्रत्यक्षाभावं प्रति भूतलाधिकरणकघटाभावज्ञानं प्रयोजकं भवत्येव । तत्र अभावग्रहणं विना न तत्प्रयोज्यस्तथाविधप्रत्यक्षाभावः सम्भवेत् ।

### ३३. प्रतियोग्यसमानकालीनतत्तद्देशादिरूपविशेषणताविशेष्याख्यसन्निकर्षेण अभावग्रहणव्यवस्थापनम्

तत्र यदि भूतलं घटाभावस्वरूपमेव स्यात्, तर्हि भूतलग्राहकसन्निकर्षेण घटाभावोऽपि अवश्यमेव ग्राह्यो भवति, भूतलघटाभावयोरभेदात्। 'एवं च सति यत्रैव भूतलेन्द्रियसन्निकर्षः, तत्र सुतरां भूतलाभिन्नघटाभावादिग्राहकसन्निकर्षोऽपि भवत्येव। तथा सति सर्वत्र भूतलग्राहकसन्निकर्षग्राह्यभूतलस्वरूपमिव भूतलानतिरिक्तघटाभावादिस्वरूपमपि गृहीतं भवति'। एवं च सति भूतलं घटवत् इति प्रत्यक्षमेव नोपपद्यते। तस्माद् भूतलग्राहकसन्निकर्षातिरिक्तसन्निकर्षग्राह्यत्वं भूतलवृत्तिघटाभावस्य स्वीकर्त्तव्यम्।

एवं च सति यदि घटाभावज्ञानं प्रतियोगिग्राहिणा चक्षुरादिना इन्द्रियेण व्यवस्थापयितुं न शक्यते, तर्हि 'भूतलं घटवत्' इति प्रत्यक्षाभावोऽपि नोपपन्नः। अतो 'जलं गन्धवत्' इति प्रत्यक्षाभावप्रयोजकस्य जलाधिकरणकगन्धाभावस्य ग्रहणम् आवश्यकम्। तत्र अभावस्य अधिकरणात्मकत्वे तदनुपपत्तिः प्रदर्शिता। अतः 'जलं गन्धाभाववत्' इत्याद्यभावप्रतीतेः प्रमात्वरक्षार्थं जलाधिकरणकगन्धाभावग्रहणोपपत्तये घ्राणेन्द्रियेण तत्र गन्धाभावग्रहणमावश्यकम्। अतः अभावस्य अधिकरणातिरिक्तत्वमवश्यस्वीकार्यम्।

• • •

# तृतीयोऽध्यायः

## अभावलक्षणविचारः

### (क) नञर्थविचारेण अभावशब्दार्थनिर्धारणद्वारा अभावलक्षणपरीक्षारम्भः, तत्र अभावलक्षणे पूर्वपक्षः

अथ लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति नियमाद् लक्षणं यदि अभावस्य निर्धारयितुं शक्येत, तदैव अभावस्य पदार्थत्वं निर्धारितं स्यात्। वस्तुतस्तु लक्षणमेव अभावस्य न सम्भवेदिति केचिदाक्षिपन्ति। तथा हि न भावः अभाव इति व्युत्पत्त्या भावभिन्नत्वम् अभावत्वमित्यायातम्। नञश्च तदन्यत्वं तदभावत्वं तद्विरोधित्वं वा अर्थः सम्भवेत्। तत्र 'अभाव' इत्यत्र त्रिषु नञर्थेषु न कस्यापि अर्थस्य ग्रहणं सम्भवेत्, इत्येवम् आक्षेपकाणामाशयः। अतः प्रथमपक्षस्य ग्रहणं तावत् समीचीनं नवेति विचारः प्रथमः क्रियते। तथा हि यदि भावान्यत्वमेव अभावत्वं स्यात्, तदा घटाख्यस्य भावस्य पटाख्याद् भावाद् अन्यत्वेन तस्यापि अभावत्वं प्रसज्येत। तथा चोक्तं तत्त्वप्रदीपिकायाम्—'भावस्यापि भावादन्यत्वेन अतिव्याप्तेः'[1]।

अथ यदि भावत्वानधिकरणत्वम् अभावत्वम्, घटादीनां च भावत्वाधिकरणत्वेन न तत्रातिव्याप्तिरित्युच्येत, तदपि न सम्यक्। तथा हि अनधिकरत्वम् इत्यस्य यदि अधिकरणत्वाभाव अर्थः स्यात्, तर्हि आत्मश्रयदोषः स्यात्, अभावलक्षणस्य अभावघटितत्वात्।

### १. अभावस्वरूपनिरूपणप्रसङ्गे भावस्वरूपनिर्णयस्य अशक्यत्वप्रदर्शनम्

अपि च भावत्वानधिकरणत्वमित्यत्र किं नाम तावत् भावत्वम्? यदनधिकरणम् अभावः, तदेव भावत्वमिति यदि इष्येत, तर्हि अभावे अतिव्याप्तिः, यतः अस्तित्वं घटादिभावानां धर्मः, अस्तितावान् घटः इत्यादिप्रतीतेः। तस्मात् यदनधिकरणमित्यत्र यच्छब्देन अस्तित्वमेव ग्राह्यम्। तथा च सति घटाभावोऽस्ति इत्यादिप्रतीतिबलाद् अस्ति तावान् अभावः इत्यनुभवबलेन अभावोऽपि अस्तित्वाधिकरणं भवत्येव। अतः अभावेऽपि भावत्वलक्षणातिव्याप्तिः।

इदमत्रावधेयम्—समवायेन सत्तावत्त्वं भावत्वमिति न्यायाभिप्रेतं भवितुमर्हति। तथा सति सामान्यादौ अपि समवायेन सत्ताराहित्यात्, तत्रापि अभावत्वप्रसङ्गः। अतः सत्तावत्त्वं न भावत्वम्। नापि अर्थक्रियाकारित्वं भावत्वं वाच्यम्। अभावस्यापि

---

१. तत्त्वप्रदीपिकायां—२, पृ० ४३९।

अर्थक्रियाकारित्वेन भावत्वप्रसङ्गात् । भवति च निदाघे बहून्यभावस्य सुखसाधकत्वम्, तथा शिशिरे अतिशीतलहिमनिकरसम्पर्काभावस्य सुखकारित्वम् । तस्माद् अभावानामपि अर्थक्रियाकारित्वसत्त्वात् नार्थक्रियाकारित्वम् यदनधिकरणेत्यत्र 'यत्' पदग्राह्यम् । अतः केवलमस्तित्वमेव अत्रोक्तभावलक्षणान्तर्गत'यत्' पदग्राह्यं स्वीकर्त्तव्यम्, अन्यस्य असम्भवात् । अपि तु अस्तित्वस्य 'यत्' पद ग्राह्यत्वेऽपि न निस्तारः प्रागेव दूषितत्वात् । न च नास्तीति प्रत्ययाविषकत्वमेव वा भावत्वम्, भूतले घटो नास्तीति प्रत्ययविषयत्वेन घटादेरपि भावत्वानुपपत्तेः । तथा भावत्वलक्षणस्य च अव्याप्तिः ।

न च प्रतियोग्यनपेक्षनिरूपणविषयत्वमेव भावत्वमित्यपि वाच्यम्, ह्रस्वत्वदीर्घत्वादौ अव्याप्तेः । ह्रस्वत्वदीर्घत्वनिरूपणं च सर्वत्र प्रतियोग्यपेक्षम् । 'अयमस्माद् ह्रस्वः, अयमस्माद् दीर्घ' इत्येवं रूपेण प्रतियोगिसापेक्षतयैव तयोर्निरूप्यमाणत्वात् । नापि निर्विकल्पकबुद्धिबोध्यत्वं भावत्वम् । तथा हि—तद्विषयत्वात्यन्ताभावानधिकरणत्वं निर्विकल्पकबुद्धिविषयत्वम्, घटादौ च घटविषयकात्यन्ताभावानधिकरणत्वं वर्त्तते, अभावे च न तथेति, भावत्वं निर्बाधं सिध्यति, इत्यपि न युक्तम् । तदत्यन्ताभावे अतिव्याप्तेः । न हि घटात्यन्ताभावः घटात्यन्ताभावाधिकरणकनिर्विकल्पकबुद्धिविषयः[1] । तस्माद् घटात्यन्ताभावस्यापि यथोक्तलक्षणाक्रान्ततया भावत्वापत्तिः । एवं भावत्वस्यैव अभावभिन्नत्वे तथा अभावस्यापि पुनर्भावभिन्नत्वेनान्योन्याश्रयो दुष्परिहर एव स्यात् ।

## २. अभावस्वरूपनिर्णयाशक्यत्वाक्षेपः

अपि च अभावो यदि निरूपयितुं शक्यः, तदैव तस्य लक्षणपरीक्षणं सम्भवेत् । वस्तुतस्तु अभाव एव न निर्धारयितुं शक्यते । तथा हि भूतले घटो नास्ति इति अबाधितप्रत्यययोग्य अभाव इत्येवम् अभाववादिनामाशयः ।

अत्रेदं पृच्छयते—अभावः कुत्र वर्त्तते ? किं भाववति अभावो विद्यते, उत अभाववति । तत्र नाद्यः कल्पः । भावत्वावच्छिन्नाधिकरणेन सह अभावत्वावच्छिन्नाधिकरणत्वस्य विरोधाद् 'भाववान् अभाव' इति वक्तुं न शक्यते । नापि द्वितीयः कल्पः । आत्माश्रयदोषसमाश्रयणात् । तथा हि अभावत्वावच्छिन्नाधिकरणत्वस्य प्रसिद्धौ तत्र अभावः प्रतिपादयितुं शक्यते । अतोऽभावस्य अभावसापेक्षत्वेन आत्मश्रयदोषः ।

---

१. सर्वत्रैव 'अयं घटः' इत्यादिबुद्धेः विशिष्टज्ञानतया तत्पूर्वं घट-घटत्वे इत्याकारकं निर्विकल्पकज्ञानं जायत इति नैयायिकाः । पदार्थानां च बुद्धिग्राह्यत्वं विना अनुपपत्तेः, सुतरां घटादिबुद्धेः प्राक् तथाविधनिर्विकल्पकज्ञानं विना घटादिबोधासम्भवाद् घटस्य भावत्वं निर्विकल्पकबुद्धिविषयत्वम् । तच्च निर्विकल्पकज्ञानं तदत्यन्ताभावानधिकरणविषयकमिति घटादीनां सर्वेषां भावत्वसिद्धि इति पूर्वपक्षाशयः ।

## ३. अभावस्वरूपनिर्णयशक्यत्वप्रदर्शने नैयायिकमतम्

अत्रेदमुच्यते—अभावस्य यया रीत्या दुर्निरूपत्वम् आक्षिप्यते, तत्तु स्वव्याघातकत्वेन न युक्तम्। तथा हि भूतलं घटवत् इति प्रतीतौ भूतलत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताको बोधः सर्वत्रानुभवसिद्धः। तत्र घटो भावः, अभावो वा ? यदि अभावत्वेन घटस्य अङ्गीकरणम् तर्हि अभाववद् भूतलमित्येवम् आयातम्। तथा च सति अभावः सिध्यत्येव।

वस्तुतस्तु भूतले घटं पश्यामि, घटवद् भूतलं जानामि इत्याद्यनुभवाद् घटस्य अभावत्वं नैव वक्तुं शक्यते। अतो भाव एव घटः स्वीकार्यः। तथा च सति स भावः किं भाववति विद्यते, अथवा अभाववति विद्यते इत्यपि प्रश्नः समायाति। तत्र यदि आद्यः कल्पः तर्हि तत्रापि आत्माश्रयो दुष्परिहरः। यदि पुनः अन्त्यः कल्पः—तर्हि विरोधः समापतेत्। अभावत्वावच्छिन्नाधिकरणस्य भावत्वावच्छिन्नाधिकरणत्वेन अङ्गीकारात्। वस्तुतस्तु यद्धर्मावच्छिन्नसमभिव्याहृतपदोत्तरं विशेष्यतया यद् वस्तु प्रतीयते, विशेष्यीभूते तस्मिन् वस्तुनि तद्धर्मावच्छिन्नप्रकारताकत्वेनैव तस्यान्वयः, न हि तद्धर्माश्रयप्रकारकत्वेनापि। अन्यथा 'घटवद् भूतलम्' इति वाक्यादपि भूतलं द्रव्यम् इति शाब्दबोधापत्तिः, घटस्यापि द्रव्यत्वाश्रयत्वेन द्रव्यत्वाश्रयप्रकारताकबोधस्य तत्र निरङ्कुशत्वात्।

न च भवति तथा, यतस्तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टपदज्ञानस्यैव हेतुत्वम्। अतो भूतलं घटाभाववदित्यत्र भूतलत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकत्वेन शाब्दबोधो भवेत्। अन्यथा यदि घटो नास्ति इत्यत्रापि केवलमभावत्वावच्छिन्नप्रकारत्वेनैव बोधः स्यात्, तर्हि घटवद्भूतलेऽपि 'घटो नास्ति' इति प्रत्ययापत्तिः, यतस्तद्धर्मावच्छिन्नप्रतियोगिताकत्वेन यद्यभावस्य अन्वयो न भवेत्, अपि तु सर्वत्रैव केवलम् अभावत्वावच्छिन्नप्रकारताकत्वेनैवान्वयः स्यात्, तर्हि 'पटो नास्ति' इत्यस्यापि न पटत्वावच्छिन्नप्रतियोगिताकाभावत्वेन बोधः, अपि तु केवलमभावत्वावच्छिन्नप्रकारताकत्वेनैव बोधः स्यात्। तथा च सति घटवत्यपि भूतले पटाभावसत्त्वेन तत्राप्यभावत्वावच्छिन्नप्रकारताकत्वेन अन्वयः स्यात्।

एवं च सति घटाभावपटाभावयोः सर्वत्रैव अभावत्वावच्छिन्नप्रकारताकत्वेन बोधस्वाभाव्याद् घटाभावपटाभावयोरवैलक्षण्येन घटवत्यपि पटाभावसत्त्वेन घटाभावसत्त्वे बाधकाभावः। एवं च सति सर्वेषामभावानां सङ्करप्रसंगेन सर्वव्यवहारोच्छेदप्रसङ्गः। अतो न केवलमभावत्वावच्छिन्नप्रकारताकत्वेनान्वयः, अपि तु प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वेनैवान्वयो भवितव्यः। अतो भूतलत्वावच्छिन्ने वस्तुनि भावत्वधर्मसत्त्वेऽपि तत्र घटत्वादिविशेषधर्मावच्छिन्नप्रतियोगिताकाभावस्यान्वये न कापि बाधा।

न हि 'भावः अभाववान्' इति प्रत्ययो भवेत्, तथाविधप्रत्ययस्य आहार्यतया परोक्षत्वासम्भवात्। तस्माद् अभावस्य स्वतन्त्रपदार्थत्वनिरूपणे प्रदर्शिताभिर्युक्तिभिरत्रापि अभावस्य निर्णयः सम्भवत्येव। न हि कुत्रचिदपि केवलम् अभाव इति प्रतीतिः, तत्तद्विशेषधर्मावच्छिन्नप्रतियोगिताकाभावत्वेनैव प्रतीयमानत्वात्।

अत्रायमाशयः—'भूतले घटो नास्ति', 'भूतलं घटो न' इत्याद्यनुभवात् स्वप्रतियोगिकस्यैवाभावस्य अनुभवविषयत्वम्, न तु नञर्थमात्रम्। अतः अभाववित्तिवेद्यत्वं प्रतियोगिनः। प्रतियोगिज्ञानाधीनज्ञानत्वं चाभावस्य प्रतियोगिसाक्षिकं, गोसादृश्यवत्। अतः केवलमधिकरणं तद्ज्ञानं वा नाभावः; अपि तु किञ्चिद्धर्मावच्छिन्नाधिकरणे किञ्चिद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधेयताशलिज्ञानं सर्वानुभवसिद्धम्, एवं च सति अभावप्रतीतेर्निष्प्रत्यूहतया प्रतीयमानतया प्रतीयमानानां च पदार्थत्वेन सुतरां तल्लक्षणं निरूपणीयम्।

ननु भावभिन्नत्वम् अभावत्वम् इत्यत्र यदि भावविरोधित्वम् अर्थः स्यात्, तर्हि अन्योन्याभावे अव्याप्तिः—अन्योन्याभावस्य भावसमानाधिकरणत्वेन सहानवस्थानलक्षणविरोधासम्भवात्। अत्र सहानवस्थानमित्यत्रानवस्थानपदेऽपि नञः श्रवणात्, तत्रापि नञर्थः कः ? इति प्रश्ने पुनरपि अन्यत् किञ्चित् नञ्प्रतिपाद्यं वाच्यम्। एवं तत्रापि अन्यत् इति अनवस्था दुष्परिहारा।

### ४. अभावलक्षणविचारे वाद्यभिमतदोषोद्भावनम्

न च भावानात्मकत्वं भावभिन्नत्वम् इति वाच्यम्, तत्रापि नञर्थानिरुक्तेः। नापि निषेध्यनिरुप्यत्वमेव भावभिन्नत्वं वाच्यम्, तत्रापि निषेध्यस्य निषेधप्रतियोगित्वेन वक्तव्यतया तत्रापि निषेधार्थस्य अनिरुक्तेः पूर्वदोषप्रसक्तेः। अपि च, भावभिन्नत्वमित्यत्र यदि भावानाम् प्रातिस्विकरूपेण प्रतियोगिकुक्षौ निवेशः, तर्हि अननुगमः। न च नास्ति इति बुद्धिवेद्यत्वमेव अभावत्वम् इत्यपि वाच्यम्, विचारासहत्वात्। तथा हि अभावस्य सप्रतियोगिकत्वनियमात् नास्ति इति बुद्धेरालम्बलनं किञ्चिद् अनुगतं वाच्यम्, तच्च न किमपि उक्तम्, नापि भावप्रतियोगित्वं नास्ति इति बुद्धिवेद्यत्वम् इत्यपि वक्तुं शक्यते, प्रतियोगित्वस्य अभावविरहरूपत्वात् सादृश्यादौ अतिव्याप्तेः।

### ५. अभावलक्षणविचारे सिद्धान्तिनां समाधानम्

अत्रोच्यते सिद्धान्तिभिः—समवायसामानाधिकरण्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताऽभावत्वं भावभिन्नत्वं वाच्यम्, तथा चोक्तं न्यायलीलावत्याम्—'सत्ता सम्बन्धबोधविधुरस्य सत्ताविरहस्यैव अभावप्रत्ययहेतुत्वात्'[1]। इति।

---

१. 'अभावविरहात्मत्वं वस्तुनः प्रतियोगिता'—(न्यायकुसुमाञ्जलौ तृतीयस्तवके द्वितीयकारिका)।

अत्रायमाशयः—सत्ता द्रव्यगुणकर्मसु समवायेन अवस्थिता सामान्यरूपा, पुनस्तु सर्वत्रैव अस्तीति बुद्धिविषयत्वमपि सत्तात्वेन स्वीकर्त्तव्यम् । तथा चोक्तं न्यायकन्दल्याम्—'यत् प्रमाणेन प्रतीयते, तत्रास्ति व्यवहारो लोकानाम्, 'विपर्यये तु नास्तीति'[1] ।

## (ख) न्यायमतमाश्रित्य अभावलक्षणनिरूपणे उत्तरपक्षः

तस्माद् अस्तीति प्रयीयमानेषु पदार्थेषु अस्तित्वसमानार्थकसत्ताधिकरणत्वं सिद्धमेव । द्रव्यगुणकर्मसु समवायेन सामान्यरूपा या सत्ता वर्त्तते, सैव पुनः सामानाधिकरण्यसम्बन्धेन सामान्यविशेषसमवायेष्वपि वर्त्तते, सामानाधिकरण्यमपि स्वसमवायिसमवायरूपं बोध्यम् । अत एव अभावस्य द्रव्यगुणादौ विद्यमानत्वेऽपि पूर्वोक्तसामानाधिकरण्यसम्बन्धेन अवर्त्तमानत्वाद् न तत्र सत्तास्वरूपस्य भावत्वस्य अतिव्याप्तिः । अतस्तथाविधसत्ताऽभावत्वम् एव भावभिन्नत्वम् इति ग्राह्यम् ।

अत एव अनुयोगिताविशेषः अभावत्वम् इति पक्षोऽपि परास्तः, यतस्तत्र अभावत्वस्य अनुयोगितारूपत्वे अनुयोगिताया अभावभेदेन भिन्नत्वाद् अभावप्रतीतेरनुगतत्वं नैव स्यात् । अत्र च पुनः घटाभावपटाभावप्रतीतीनाम् एकधर्मप्रकारकत्वम् अभावांशे अनुगतत्वं युज्यते । ननु जातिभिन्नस्य सत्ताभावस्य स्वरूपतो भानासम्भवतः, जात्यखण्डोपाध्यतिरिक्तपदार्थानां किञ्चिद्धर्मावच्छिन्नत्वनियमात् । अतः अभावत्वेनैव तस्य प्रकारता वाच्या । तच्च अभावत्वं सत्ताऽभावरूपम्, तदपि च पुनः सत्ताऽभावरूपाभावत्वेन प्रकार इति अङ्गीकरणीयम् ।

### ६. अभावज्ञाने अभावत्वोपस्थितेः आवश्यकतया अनवस्था शङ्का

तथा च अभावप्रतीतौ अनवस्था विषयतानन्त्याद् इति चेत् तत्रोच्यते, अन्यत्र जात्यखण्डोपाध्यतिरिक्तपदार्थानाम् स्वरूपतो भानाऽसम्भवेऽपि अत्र सत्ताऽभावस्य एकस्यैव तत्र तत्र प्रकारत्वाद् विषयानवस्था । तथा च सत्ताऽभावस्य स्वरूपतः प्रकारत्वोपगमाद् न पूर्वोक्तदोषः ।

ननु एवमपि सत्तोपस्थितिशून्यकाले 'घटो नास्ति' इति प्रतीतेरनुपपत्तिः, अभावज्ञाने प्रतियोगिज्ञानस्य हेतुतया सत्ताज्ञानं विना सत्ताऽभावभानासम्भवादिति चेत् अत्रोच्यते—घटो नास्ति इत्यादिशाब्दबुद्धिं प्रति प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिज्ञानं न कारणम्, अपि तु प्रत्यक्षबुद्धिं प्रत्येव प्रतियोगिज्ञानं कारणम् । तथा चोक्तं दिनकर्याम्—'सत्तारूपप्रतियोगिज्ञानं विनापि घटो नास्तीति बुद्धौ स प्रकारः,

---

[1] न्यायकन्दल्यां उद्देश्यप्रकरणे, पृ० ३२ ।

अभावत्वप्रकारकप्रत्यक्षे एव प्रतियोगिधियो हेतुत्वात्। अन्यथा इदं तमः इति प्रतीत्यनापत्तेः[1]।

### ७. सत्ताऽभावस्य स्वरूपतः प्रकारविधया भानम् इति अभावज्ञाने न अनवस्था

इदमत्र तत्त्वम्—इदं तमः इत्यत्र इदमिति प्रत्यक्षविषयः, तमस्त्वं तु न तेजोऽभावत्वरूपम्, अपि तु तेजोऽभावनिष्ठतत्तद्व्यक्तित्वमेव। नातः तेजोज्ञानं विना तथाविधप्रतीतेः अनुपपत्तिः भवेत्। ननु सत्ताऽभावस्य पूर्वानुपस्थितस्यापि प्रकारत्वोपगमे विशिष्टबुद्धिविषयकस्थलीयकार्यकारणभावः भज्येत। तथा हि रक्तत्वविशिष्टरक्तज्ञानं विना रक्तदण्डवान् अयम् इत्यादिविशिष्टबुद्धेरनुदयाद् विशिष्टबुद्धित्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकविशेषणज्ञानत्वेन हेतुत्वम् इति कार्यकारणभावः सिद्धः। स चात्र व्यभिचरेत्। अतोऽकामेनापि पूर्वानुपस्थितस्य सत्तात्वावच्छिप्रतियोगिताकाभावस्य प्रकारत्वेन भानं परिहर्त्तव्यम् इति चेत्, अत्रोच्यते—सामान्यतो विशिष्टबुद्धिं प्रति विशेषणज्ञानत्वेन हेतुत्वम् इति कार्यकारणभावो नैव संगच्छते, यतो विशिष्टबुद्धित्वं नाम सप्रकारकबुद्धित्वम्, अन्यस्य दुर्वचत्वात्।

एवं विशेषणत्वमपि प्रकारत्वाद् अनतिरिक्तम्। एवं च सति सामान्यतः कार्यकारणभावाङ्गीकारे घटज्ञानादपि पटविशिष्टबुद्धिः सम्भवेत्। घटस्यापि क्वचित् प्रकारत्वात्। अतस्तद्धर्मावच्छिन्नतद्विशिष्टबुद्धिं प्रति तद्धर्मावच्छिन्नतद्ज्ञानत्वेन कारणत्वं वाच्यम्। अतो न प्रदर्शितापत्तिः सम्भवेत्। तथा हि घटत्वावछिन्नघटविशिष्टबुद्धिं प्रति घटत्वावच्छिन्नघटज्ञानत्वेन कारणत्वम्। एवं पटत्वावच्छिन्नपटविशिष्टबुद्धिं प्रति पटत्वाच्छिन्नपटज्ञानत्वेन कारणत्वम् इति विशिष्य पृथक पृथक् कार्यकारणभावो वाच्यः।

न च तत्र गौरवमिति वाच्यम्—फलमुखगौरवस्यादोषत्वात्। कार्यकारणभावादिकल्पनायाश्च फलानुरोधित्वात्। एवं च सति अभावत्वविशिष्टबुद्धौ अभावत्वज्ञानस्य हेतुत्वं नैव अभ्युपेतव्यम् प्रयोजनाभावात्। अतः सत्ताऽभावत्वेन सत्ताऽभावज्ञानं विनाऽपि 'घटो नास्ति' इत्यादौ घटाभावत्वेन घटाभावज्ञानं सम्भवेत्।

### ८. विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वकल्पने बीजम्

अत्रेदं तात्पर्यम्—विशेषणज्ञानं विना विशिष्टबुद्धेः अनुत्पादः फलम्, तदनुरोधित्वात् कार्यकारणकल्पनाया आवश्यकत्वम्। घाटदिज्ञानमन्तरेण घटादिविशिष्टबुद्धेरनुदयात् तत्र कार्यकारणभावः कल्प्यते। अनुपस्थिताभावत्वविशिष्टबुद्ध्युदयादत्र न तथाविधः अनुपस्थिताभावत्वविशिष्टबुद्ध्युदयादत्र न तथाविधः कार्यकारभावः

1. भाषापरिच्छेदे दिनकरीटीकायां–प्र० प्र० पृ० ९३।

कल्पनीयमिति तात्पर्यम् । तथा चोक्तं दिनकार्याम्–"विशेषणभेदेन हेतुताया भिन्नत्वेन तत्र तद्हेतुत्वानुपगमात् फलानुरोधित्वात् कल्पनाया इति प्राहुः[1]" ।

### ९. अभावबुद्धिषु अनुगतधर्मचिन्तनम्

वस्तुतस्तु पूर्वोक्तप्रकारेण सत्ताऽभावत्वेनैव अभावलक्षणे विवक्षणीये तत्र अभावत्वमेव अनिरूपितमिति न वाच्यम्, अभावानुगतबुद्धेरबाधितायाः सर्वसिद्धत्वात् । अत एव नात्माश्रयः । ननु सत्ताऽत्यन्ताभावस्य अभावेषु सम्बन्धाभावात् कथम् अनुगमकत्वम् इति चेत्, उच्यते—विशेषणतारूपसम्बन्धसत्त्वात् तत्र अनुगमकत्वं सम्भवति । घटे रूपसमवाय इत्यत्र तथा समवायः स्वरूपसम्बन्धेनैव विशिष्टव्यवहारं करोति, अत्रापि तथैव बोध्यम् । प्रत्यक्षसिद्ध एक एव अभाव इति बोधोऽनुगतधर्मापेक्षः । तथा चोक्तं न्यायलीलावत्याम्—'स च नञर्थनिरुक्तिमन्तरेणापि स्वग्राहकमानसामर्थ्यात् स्वेन रूपेणावभासमानस्वभावप्रत्यासत्त्या सर्वभावेष्वसम्बद्ध एव अभावप्रत्ययं करोति समवाय इव समवायिव्यवहारम्[2]' ।

ननु सत्ताऽत्यन्ताभावमादाय अभावेष्वनुगतव्यवहारः कथं सम्भवेत् ? आत्माश्रयदोषप्रसङ्गादिति चेत्, उच्यते—प्रमाणबलादत्र आत्माश्रयः अङ्गीकृत एव । यथा प्रमेयत्वं स्वस्मिन्नपि वर्तते, तथैव सत्ताभावोऽभावे वर्त्तते । प्रमेयत्वं यदि स्वस्मिन् न विद्यते, तर्हि केवलान्वयित्वं भज्येत । अतोऽभावोऽपि अभावे विद्यते ।

ननु प्रमेयत्वस्य केवलान्वयित्वात् प्रमाविषयत्वाच्च आत्माश्रयः स्वीकर्त्तव्यः, अभावे तु नात्माश्रयः समीचीनः, युक्तेरभावादिति चेत्, तर्हि भावबुद्ध्यविषयत्वमेव अभावत्वं वाच्यम् । तथा हि अनुगताया भावत्वबुद्धेर्यो विषयः, स एव भावः । अतो भावत्वप्रकारकबुद्धिविषयाऽभावत्वेनाविषयत्वेन इति यावद् यत् प्रतीयते, तदेव अभावत्वम् । तथा चोक्तं न्यायलीलावत्याम्, भावबुद्ध्यविषयत्वं वा अभावत्वम्—

> भिन्नरूपेष्वभावेषु स्वे च रूपे च कश्चन ।
> असम्बद्धोऽप्यभावात्मा तुल्यबोधप्रबोधकः[3] ॥

नन्वेवं यदि तावत् सर्वाभावव्यक्तीः न जानाति, तदा सर्वाभावानुगतः को धर्म इति प्रश्नावकाशः । अथ यदि अभाववृत्तीः जानाति, तदापि तन्निश्चयार्थम् अनुगतधर्मस्वीकारो व्यर्थ इति चेत्, अत्रोच्यते नास्तीति व्यवहारस्य व्यवहर्त्तव्यगतसामान्यविशेषात्मको यो विषयः तथाविधविषयाकाङ्क्षायां सम्भावितायां तत्र सामान्यव्यवस्थाया आवश्यकत्वम् । तथा हि व्यवहर्त्तव्ये अङ्गीभूतम् एकं सामान्यं यावद् नोच्यते, तावद् अनुगतव्यवहार एव नोत्पद्यते । अत एकं सामान्यं वाच्यम् । अभावे अनुगतो

१. दिनकर्याम्—पृ० ९४; २. न्यायलीलावत्याम्—पृ० ५६४ ।
३. न्यायलीलावत्याम्–पृ० ५६५ ।

यो व्यवहारः 'अभावोऽयम्' 'अभावोऽयम्' इत्याकारकः, तत्र भावत्वप्रकारकबुद्ध्य-विषयत्वमेव अनुगतो धर्मो वाच्य इति तात्पर्यम्। तथा चोक्तं न्यायलीलावत्याम्—'तस्य सामान्यविशेषविषयसाकाङ्क्षत्वे सामान्यव्यवस्थाया एव अपेक्षणात्[1]'।

## १०. अभावस्य इन्द्रियग्राह्यत्वपरीक्षणम्

अत्रेदं तात्पर्यम्—अभावत्वं प्रत्यक्षेण ग्रहीतुं यदि शक्येत, तदैव भावबुद्धि-विषयत्वाभावेन 'अभावः' निर्णेतुं शक्यते, किन्तु इन्द्रियसन्निकर्षाद् उपलभ्यमाने भावात्मके अधिकरणे प्रत्यक्षकारणीभूतेन्द्रियसन्निकर्षो यद्यपि सम्भवेत् - अभावेन च स नैव सम्भवति। अभावांशेनैवेन्द्रियस्य योग्यत्वात् सम्बन्धः। तस्माद्भावत्वग्रहणा-सम्भवाद् भावबुद्ध्यविषयत्वं कथं निर्णीयते इति चेत्, तत्रोच्यते—सर्वत्रैव योग्यता कार्यगम्या। दृश्यते च दाहोत्पत्तेः प्राक् वह्नेर्दाहकत्वयोग्यत्वं नैव गृह्यते, अपि तु दाहानन्तरमेव वह्नेर्दाहकत्वं निर्णीय अन्यत्रापि दाहयोग्यता वह्नेः स्थिरीक्रियते। एवमत्रापि यथा इन्द्रियान्वयिव्यतिरेकानुविधायि कार्यं भावे दृश्यते, तद्वद् अभावेऽपि।

तथा हि निमीलितनयनो घटाभावादिकं भूतलादौ स्थितमपि नैव गृह्णाति। पुनस्तु आलोकादिसत्त्वे उन्मीलितनेत्रो घटाभावादिकं प्रत्यक्षीकर्त्तुं शक्नुयात्। अतो भावानामिव अभावस्यापि इन्द्रियान्वयव्यतिरेकानुविधायित्वं सिद्धमिति फलदर्शनेनैव अभावानामपि इन्द्रियैर्ग्रहणयोग्यत्वं स्वीकर्त्तव्यम्।

तथा चोक्तं न्यायकन्दल्याम्—'कार्यगम्या हि योग्यता यथा इन्द्रियान्वयव्यति-रेकानुविधायि कार्यं भावे दृश्यते, तद्वद् अभावेऽपि इति भाववदभावोऽपि इन्द्रियग्रहण-योग्य एव। कार्यदर्शनादेव चास्य इन्द्रियसम्बन्धोऽपि कश्चित् कल्पयिष्यते[2]'।

## ११. पुनरपि अधिकरणेन्द्रियसंयोगेनैव अभावव्यवहारइत्याशङ्का

ननु सर्वत्रैव अभावः किञ्चिदधिकरणक एव प्रतीयते, निरधिकरणाभावप्रतीतेर-सम्भवात्। अत एव देशादिविशेषमधिकृत्य अभावविषयिणी प्रवृत्तिर्निवृत्तिर्वा सङ्गच्छते। एवं सति यस्मिन् अधिकरणे अभावः प्रतीयते, तस्य अधिकरणस्य प्रतीतावेव इन्द्रियव्यापार आवश्यकः। न त्वभावग्रहणेऽपि इन्द्रियव्यापारस्वीकारे युक्तिर्वर्त्तते। लोकव्यवहारेणापि सिध्यत्ययं पक्षः।

तथा हि कश्चिद् यथायथं स्वरूपेण विद्यालयादिकं प्रतीत्य स्थानान्तरगतः सन् विद्यालये देवदत्तोऽस्ति नास्ति वा इति केनचित् पृष्टः, तदानीमेव ज्ञातजिज्ञासो नास्तीति प्रतीत्या अभावं व्यवहरति नास्तीति। अतः प्रतिषेधस्वभावस्य अभावस्य स्वरूपमेव प्रतिषेधवाक्येन तत्र वक्ति। तस्माद् अधिकरणेन्द्रियसंयोगवशादेव अभाव-व्यवहारः सिध्यति, न तु अभावे इन्द्रियसम्बन्धयोग्यत्वं स्वीकर्त्तव्यम्।

---

१. न्यायकन्दल्याम्–पृ० ५६७। २. न्यायकन्दल्याम्–अनुमानप्रकरणे–पृ० ५४४।

ननु देवदत्तो नास्तीति व्यवहारात् प्रागेव विद्यालयादिदर्शनकाले देवदत्ताभावो निर्विकल्पकज्ञानेन सम्पन्नः। अतोऽभावस्य निर्विकल्पकज्ञानेन समुपस्थितस्य परत्र व्यवहारकाले स्मरणम्। तद्वशादेव देवदत्तो नास्तीति व्यवहारः। अतो नाधिकरणेन्द्रियसंयोगवशादेव अभावव्यवहार इति चेत् अत्रोच्यते वादिभिः—घटादीनां वस्तूनाम् इन्द्रियसंयोगानन्तरं तत्र विशिष्टज्ञानोपपत्तये निर्विकल्पकं ज्ञानं तत्तद्विषयाणां सम्भवति। न हि इन्द्रियसंयोगं विनापि घटादीनां निर्विकल्पकज्ञानं सम्भवति। अतोऽभावेन इन्द्रियसंयोगाभावे कथङ्कारं तन्निर्विकल्पकं ज्ञानं सम्भाव्येत ? भावस्तु प्रतिषेधस्वभाव इति यस्य प्रतिषेधः, तदधीनमभावज्ञानम्। अतः तर्कप्रतिषेधतामन्तरेण तदभावस्य स्वरूपान्तरं नैव सिध्यति।

**१२. अभावस्य निर्विकल्पकज्ञानानुपपत्तिः इति वादिमतम्**

एवं च सति प्रतियोगिस्वरूपनिरूपणमन्तरेणाभावस्यापि निरूपणम् अशक्यम्, यतो भावाभावयोरयमेव विशेषो यद् एकस्य विधिस्वरूपतया ग्रहणम्, अपरस्य च अन्यप्रतिषेधमुखेन। यदि तु अभावस्यापि स्वातन्त्र्येण ग्रहणमङ्गीक्रियते तर्हि भावाभावयोर्विशेषो न स्यात्। अतोऽभावस्य निर्विकल्पकज्ञानं नैव सम्भवति। अतोऽभावस्य प्रत्यक्षेण ग्रहणं दुरुपपादम्।

**१३. पूर्वोक्तशङ्कितविषये सिद्धान्तिनां समाधानम्**

अत्रोच्यते—यत्र देशान्तरं गतः कश्चिद् अपरेण पृष्टो विद्यालये देवदत्तो नास्तीति ब्रवीति—स किं तदानीन्तनानुपलम्भेन इदानीन्तनाभावं ब्रवीति 'इदानीं देवदत्तः नास्तीति' आहोस्वित् प्राक्तनानुपलम्भेन प्राक्तनाभावम् इदानीं वदति विद्यालये देवदत्तो नासीदिति। तत्र यदि पूर्वः कल्पः, तर्हि इदानीन्तनानुपलब्धिस्तावत् प्रत्यक्षयोग्यवस्तूनामनुपलब्धिरिति न सम्भवेत्, वक्तृदेवदत्तयोर्देशव्यवधानात्। अतो व्यवहिते देशे सतोऽपि देवदत्तस्य प्रत्यक्षोपलब्धेरसम्भवात् तत्र, तस्य प्रत्यक्षयोग्यत्वमेव नास्ति। अतो योग्यानुपलब्धेरनुपपत्तेः 'देवदत्तः इदानीं नास्ति' इति व्यवहारो न सम्भवेत्, अपि तु तदानीं देवदत्ताऽभावः सन्दिग्ध एव स्यात्। तदागमनस्यापि तत्र सम्भवात्।

नापि द्वितीयः कल्पः। पूर्वकालीनाभावपरिच्छेदयोग्या प्राक्तनानुपलब्धिः। सा च नेदानीमनुवर्तते, देवदत्तस्य तदानीमवस्थान्तरप्राप्तिसम्भवात्। अविद्यमानया च अनुपलब्ध्या अभावप्रतीतिर्न सम्भवेत्। अतोऽभावः प्रत्यक्षीभूत एव स्वात्मानं स्वातन्त्र्येण प्रतिपादयति।

यच्च पुनरुक्तम्—निधिकरणकाभावप्रतीतेरसम्भवाद् अधिकरणप्रतीत्यैवाभावप्रतीतिः सिध्यति, न तु अभावस्य तत्रापि स्वातन्त्र्यम् अङ्गीकर्त्तव्यम् इति, तत्रेदं

प्रत्युच्यते—इदं भूतलम् अस्ति, अत्र च घटो नास्ति इति प्रतीतेर्वैलक्षण्यं सर्वथैव-स्वीकर्त्तव्यम्। न हि 'भूतलम् अस्ति' इत्येव उक्तौ घटो नास्तीति प्रतीयते। तस्मात् घटो नास्तीति प्रतिषेधस्य किञ्चिद् आलम्बनं स्वीकर्त्तव्यम्। यदि वस्तूनां वैलक्षण्यं न भवेत्, तर्हि प्रतीतित्रैलक्षण्यं न सिध्यति। तथा चोक्तं न्यायकन्दलीकारेण—'घटादेरभावात् भूतलं च व्यतिरेच्यैकाकिशब्दस्यार्थः कः समर्थितः भवद्भिः। यो हि नास्तीति प्रतिषेधधिय आलम्बनम्? न हि विषयवैलक्षण्यमन्तरेण विलक्षणाया बुद्धेरभ्युदयः, नापि व्यवहारभेदस्य सम्भव इति[1]'।

## (ग) अभावलक्षणोपसंहारः

एवं क्रमेण अभावलक्षणासम्भवम् आशङ्कमानानां सर्वेषां वादिनां मतानि समासतः समालोच्य अभावलक्षणं नैयायिकरीत्या यथामति निरूपितम्। तेन लक्षणाभावाद् नास्त्यभाव इति प्रतिपक्षाणाम् आक्षेपः परिहृतः। ततश्च साम्प्रतं लक्षणेन निरूपितोऽपि 'अभावः' प्रमाणेनापि परीक्षणीय इति अभावसिद्धौ प्रमाणसद्भावासद्भावविषयिणी आलोचना कर्त्तव्या इति तत्रैव मतिर्दीयते।



---

१. न्यायकन्दल्याम्—पृ० ५५४।

# चतुर्थोऽध्यायः

## अभावविषये प्रमाणचिन्तनम्

### (क) आदौ वैदान्तिकैरभावस्य प्रत्यक्षाग्राह्यत्वप्रतिपादनम्, नैयायिकैस्तत्समाधानम्

एतावता प्रबन्धेन सपरिकरमभावलक्षणं निरूप्य लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायेन 'अभावः' प्रमाणसिद्धो न वेति विचार्यते। यद्यपि अभावलक्षणनिरूपणावसरे अभावस्य प्रत्यक्षगोचरत्वं न्यायमतसिद्धं प्रसङ्गात् प्रतिपादितमेव, तथापि अत्र वादिनां बहुधा विप्रतिपत्तिदर्शनात् तासां विप्रतिपत्तीनां विशेषतः परिहारः कर्त्तव्य इति पुनरपि स एव विषयो विदुषां पुरस्तात् समुपस्थाप्यते।

तत्रादौ वैदान्तिकानामाशयः प्रपञ्चयते। तत्र अभावानां प्रत्यक्षं यदि सम्भवेत्, तर्हि प्रत्यक्षसिद्धत्वादेव 'अभावः' नापलपितुं शक्यते, किन्तु अभावस्य प्रत्यक्षमेव न सम्भवेत्। यतस्तद्विषयकप्रत्यक्षत्वावच्छिन्नं प्रति तद्विषयेन्द्रियसन्निकर्षो व्यापारविधया कारणम्। अभावेन तु पुनर्न इन्द्रियसन्निकर्षः सम्भवेत्। तथा हि रूपग्राहिणा रूपवद्ग्राहिणा च चक्षुषा नाभावसन्निकर्षः, अभावस्य रूपाभावात्, अद्रव्यत्वाच्च। नापि त्वक्सन्निकर्षः, स्पर्शाभावात्। नापि घ्राणसन्निकर्षो गन्धाभावात्। नापि रसनासम्बन्धः, रसाभावात्, नापि श्रवणसन्निकर्षः, अशब्दत्वात्। नापि बहिरिन्द्रियनिरपेक्षमनः सन्निकर्षोऽभावस्य, बहिरिन्द्रियं विना ग्रहणासम्भवात्।

#### १. इन्द्रियसन्निकर्षाभावादभावस्य प्रत्यक्षत्वासम्भवशङ्का

अपि च संयोगः, समवायो वा नात्र सन्निकर्षः सम्भवति, तयोर्भावधर्मत्वात्। न च संयुक्तविशेषणतालक्षणः सन्निकर्षः सम्भवतीति वाच्यम्, विचारासहत्वात्। यतः केनचित् सम्बन्धेन सम्बद्धयोरेव विशेषणविशेष्यभावः सम्भवति। यथा दण्डदेवदत्तयोः संयोगसम्बन्धेन सम्बद्धयोरेव विशेषणविशेष्यभावः, यथा वा समवायसम्बन्धेन सम्बद्धयोः शुक्लपटयोर्विशेषणविशेष्यभावः। अतोऽभावेन यदि केनचित् सम्बन्धेन भूतलादिकं सम्बद्धं स्यात्, तदा तत्सम्बन्धमुपजीव्य विशेष्यभूते भूतले चक्षुःसम्बन्धमादाय चक्षुःसंयुक्तविशेष्यतानिरूपितविशेषणतासन्निकर्षेणाभावस्य चाक्षुषप्रत्यक्षत्वं सम्भवेत्, किन्तु भूतल एव केनचित् सम्बन्धेन अभावः स्थातुं नार्हति। अतः दूरमास्तां तथाविधविशेषतासन्निकर्षः। अतो विशेषणतादिस्वरूपेणाभावो ग्रहीतुं न शक्यते। तथा चोक्तं तत्त्वप्रदीपिकायाम्—'नापि विशेषणविशेष्यभावः, तस्यापि मूलसम्बन्धगर्भतया तन्निवृत्तौ निवृतेः[1]'।

---

१. पृ० ४३५।

यदि तु विनापि सम्बन्धं विशेषणविशेष्यभावः स्वीक्रियते, तर्हि तथाविध-विशेषणविशेष्यभावो न प्रत्यक्षोपयोगी, सम्बद्धं वर्त्तमानत्वं गृह्यते चक्षुरादिनेति नियमात्।

### २. विशेषणताविशेषः सन्निकर्षो भवितुं नार्हतीति शङ्का

वस्तुतस्तु सविकल्पकप्रत्यक्षस्य सर्वत्रैव विशिष्टवैशिष्ट्यावगाहित्वनियमाद् वैशिष्ट्यस्य च सम्बन्धं विना अनुपपत्तेरसम्बद्धयोः सुतरां वैशिष्ट्यविरहान्न सविकल्पकप्रत्यक्षग्राह्यत्वं सम्भवेत्। न चासम्बद्धस्यापि प्रत्यक्षत्वे को दोष इति वाच्यम्, अतिप्रसङ्गात्। तथा हि—तत्तदिन्द्रियासम्बद्धमपि वस्तु यदि तैस्तैरिन्द्रियैर्गृह्येत, तर्हि चक्षुषापि गन्धग्रहणम्, घ्राणेनापि रूपग्रहणं केन वारयितुं शक्यते। किं बहुना—अतीतानागतानां व्यवहितविप्रकृष्टानां तथा अतीन्द्रियाणां इन्द्रियासम्बन्धत्वेऽपि इन्द्रियग्राह्यत्वं प्रसज्येत। तस्मादकामेनापि इन्द्रियसम्बद्धमेव वस्तु तत्तदिन्द्रियैः प्रत्यक्षीक्रियत इति स्वीकर्त्तव्यम्। अभावस्य च इन्द्रियाग्राह्यत्वमुपपादितमधस्तात्।

ननु अतीन्द्रियाणामनागतानामतीतानां तथा व्यवहितविप्रकृष्टानां च प्रत्यक्ष-कारणाभावान्न प्रत्यक्षम्। अतस्तत्तत्कारणाभावरूपप्रतिबन्धकसत्त्वात् तेषां तेषां न प्रत्यक्षम्। अतो नैष दोष इति मन्येत, तथाप्यभावस्य चाक्षुषत्वमुपपादयितुं न शक्यते। अभावस्य महत्त्वोद्भूतरूपाद्यसम्भवात्। अतो नाभावः प्रत्यक्षयोग्य इति चेत्, तत्रोच्यते नैयायिकैः—निमीलितनयनस्य भूतलाधिकरणकघटाभावाद्यनुपलम्भात् भूतलादिभिश्चक्षुःसन्निकर्षे सति घटाभावाद्युपलम्भाच्च अन्वयव्यतिरेकबलादभाव-प्रत्यक्षं प्रति इन्द्रियाणां कारणत्वमस्त्येव।

### ३. अभावप्रत्यक्षार्थं विशेषणताविशेषस्य प्रत्यासत्तित्वव्यवस्थापनम्

ननु इन्द्रियस्य भावेन सहैव संयोगसन्निकर्षः सम्भवेत्, न तु अभावेनापि। इन्द्रियेण सन्निकृष्टं विना नान्यद् वस्तु गृह्यत इत्येवं नियमः। तस्माद् अभावेन सन्नि-कर्षाभावात् कथमभावस्य इन्द्रियग्राह्यत्वमिति चेत्, न विशेषणतया प्रत्यासत्तेरिहापि सम्भवात्।

अत्रायमाशयः—किञ्चिदधिकरणेऽभावोऽनुभूयते। न हि निरधिकरणाभाव-प्रतीतिः सम्भवेत्। तथा च—यस्मिन् देशे अभावः प्रतीयते, तेन देशेन सह विशेषण-विशेष्यभावः सम्बन्धः। तथा च भूतलं घटाभाववदित्युक्तौ भूतलत्वावच्छिन्नविशे-ष्यतानिरूपितघटाभावत्वावच्छिन्नप्रकारताशाली बोधोऽनुभूयते। एवं विशेष्यविषणता-भावसम्बन्ध एव अभावस्य ग्राहकः। न च विशेष्यविशेषणताभावसम्बन्धोऽपि सम्बन्धा-न्तरमूलकः, यतो विशेष्येण विशेषणस्य सम्बन्धं विना विशेष्यविशेषणभावो नैव सिध्यति। तथा च अभावग्रहणस्थले एवंविधविशेषणविशेष्यभावः केन सम्बन्धेन

सिध्यतीति वाच्यम् । भावस्थल एव विशेष्यविशेषणभावः सम्बन्धान्तरमपेक्षते । एवं भावस्थलेऽपि न केवलं सम्बन्धमात्रेणैव विशेष्यविशेषणभावः सम्पद्यते ।

**४. विशेषणताविशेषस्य सम्बन्धान्तरघटितत्वाशङ्का, तन्निराकरणं च**

यदि तु यत् सम्बद्धम्, तदेव विशेषणं स्यात्, तर्हि पादादिभिः कथञ्चिद् दण्डादिसंस्पर्शे 'दण्डी पुरुषः' इति प्रत्ययोत्पत्तिप्रसङ्गः । एवं यद् विशेषणं तदपि सम्बन्धान्तरसापेक्षमित्यपि न नियमः । अतो यथा प्रतिबध्यप्रतिबन्धकभावसम्बन्धः, यथा वा वाच्यवाचकभावसम्बन्धः, तथैव विशेषणविशेष्यभावोऽपि स्वतन्त्र एव कश्चित् सम्बन्धः, तथैव प्रतीतेः प्रसिद्धत्वात् । तस्माद् विशेषणविशेष्यभाव एव सम्बन्धः । स च भूतलादिना अभावस्य सम्बन्धः ।

**५. नास्तीति प्रत्यय एव अभावसिद्धौ हेतुः**

वस्तुतस्तु अस्तीति प्रतीतेरेव यथा भावः सिध्यति, तथैव नास्तीति प्रतीतेरपि 'अभावः' सिध्यत्येव । सर्वत्रैव च सकलप्राणिसाक्षिकमुपजायमानं संवेदनद्वयं प्रसिद्धम् । इह घटोऽस्ति, तथैव इह घटो नास्तीति । तत्र अस्तिताज्ञान इव नास्तिताज्ञानेऽपि अनुभव एव प्रमाणम् । अनुभवश्च प्रत्यक्षानुमित्युपमितिशाब्दानामन्यतमः । तत्र प्रत्यक्षबलेनैवात्र घटो नास्तीति व्यवहारः सर्वलोकप्रसिद्धः । चक्षुष्मता एव घटोऽस्ति इतिवद् घटो नास्तीति प्रत्यय आपादयितुं शक्यते, अन्धस्य तथा प्रत्ययानुदयात् ।

**६. अभावस्य प्रतियोगिग्राहकेन्द्रियग्राह्यत्वनियमः**

इदमत्र विशेषतो लक्षणीयं यत् प्रतियोगी येन इन्द्रियेण गृह्यते, अभावोऽपि तेनैवेन्द्रियेण गृह्यते । अतोऽनुभवप्रामाण्यानुरोधाद् अभावस्य प्रत्यक्षं कथमपलपितुं शक्यते ? अतएव भूतलं घटाभाववद् इत्यादौ भूतलघटाभावयोः सम्बन्धान्तरासम्भवेऽपि व्यवहारौपयिकतया विशेष्यविशेषणभावः सम्बन्धोऽवश्यं स्वीकार्यः ।

**७. अत्र न्यायमञ्जरीकारमतम्**

तथा चोक्तं न्यायमञ्जर्याम्—'क्रियया कर्तृस्थया वा गमनादिकया कर्मस्थया वा भेदनादिकया सह संयोगाद्यभावेऽपि विशेषणविशेष्यभावः सम्बन्धस्तद्वदभावस्यापि भविष्यतीति[1]' । एवं प्रतियोगिना सह विरोधाख्यः सम्बन्धोऽभावस्य ।

**८. अत्र लीलावतीकारमतम्**

न च अभावे गृहीते विशेषणता सिध्यति, विशेषणतासिद्धौ च अभावो गृह्यत इति अन्योन्याश्रय इत्यपि वाच्यम्, विशेषणता नाम स्वरूपसम्बन्धाख्यः पदार्थः । सा चोपलब्धेः पूर्वमपि अस्त्येव । उपलब्ध्या सा गृह्यत इत्येव मात्रम् । तथा चोक्तं न्यायलीलावत्यां कण्ठाभरणटीकायाम्—'तदुपलब्धेस्तु प्रत्ययजननस्वाभाव्यलक्षणाया विशेषणतायाः पूर्वमपि सत्त्वात्[2]' ।

१. न्या० म० पृ० ५६ । २. न्यायलीलावत्यां, कण्ठाभरणटीकायां पृ० ५५० ।

अपि चेन्द्रियेण अन्वयव्यतिरेकसत्त्वात् तदेव अभावोपलब्धौ करणम्। न चाधिकरणग्रहणेनैवोपक्षीणसामर्थ्यमिन्द्रियम्, तथा सति त्वगिन्द्रियेणोपनीते पीते अन्धस्यापि नीलभेदग्रहापत्तेः।

अत्रायमाशयः—अभावाधिकरणस्य ग्रहणेनैव यदीन्द्रियाणां सामर्थ्यं क्षीणं स्यात्, तर्हि अभावाधिकरणग्राहिणेन्द्रियेण अभावग्रहणं न सम्भवेत्, इति यदुक्तम् तत्रेदमुच्यते—अभावाधिकरणग्रहणादेवेन्द्रियस्य सामर्थ्यमवसितमिति न अधिकरण-ग्राहिणेन्द्रियेणाभावो गृह्येत, इत्येवमङ्गीकारे सति अभावाधिकरणमगृह्णतेन्द्रियेण अभावग्रहणं न भवेत्। न च तथा स्वीकर्त्तव्यम्। तथा सति अभावाधिकरणस्येन्द्रियेण ग्रहणं विनापि यत्किञ्चिद् वस्तुन उपनयादिसन्निकर्षेण भानेऽपि तत्र अन्धस्य अभाव-ग्रहणं प्रसज्येत।

एवं च सति अन्धस्य यद्यपि नीलाभावाधिकरणं पीतं न इन्द्रियग्राह्यम्, तथापि उपनीतभाने पीते नीलभेदग्रहणं स्वीकर्त्तव्यं स्यात्। अतो न केवलमिन्द्रियेण अभावा-धिकरणग्रहणमात्रं, स्वीकर्त्तव्यम्, अपि तु अभावग्रहणमपीन्द्रियेणैव स्यादिति अवश्य-मङ्गीकर्त्तव्यम्। न च प्रतियोगिग्राहकेणेन्द्रियेण अभावाधिकरणग्रहणं तन्त्रमित्यपि वाच्यम्, वायौ चक्षुषा रूपाभावानुपलम्भप्रसङ्गात्। तस्मात् प्रतियोगिग्रहणे यथेन्द्रि-यस्य सामर्थ्यम्, तथैव अभावग्रहणेऽपि तत्सामर्थ्यं कल्पनीयम्।

अत्रेदं पुनस्तत्त्वम्—यदा इन्द्रियैरभावप्रत्यक्षं सम्पादनीयम्, तत्र योग्यानुप-लब्धिः सहकारित्वेन कारणं भवति। अत एव योग्यानुपलब्धिरभावप्रत्यक्षे कारणमिति सिद्धान्तः। तथा चोक्तं—'यदि स्यादुपलभ्येत इत्येवं यत्र प्रसज्यते' इति।

तथा हि यद्वस्तु चाक्षुषप्रत्यक्षयोग्यम्, तद्वस्तु विहाय प्रत्यक्षकारणकलापे सति अन्यस्य प्रत्यक्षे सत्यपि प्रत्यक्षयोग्यं यद्वस्तु, तत्र नोपलभ्यते, तद्वस्तुन एव अभावश्चक्षुषा प्रत्यक्षीक्रियते। तथा हि यत्र आलोकसंयोगादिसत्त्वेऽपि चक्षुषा घटो नोपलभ्यते, तत्रैवात्र घटो नास्तीति घटाभावप्रत्यक्षं जायते। अत एव प्रतियोग्या-रोपोऽभावप्रत्यक्षे हेतुः। तथा चोक्तं—'भूतलादौ घटादि ज्ञाने जाते घटाभावादिकं न जायते। तेन अभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम्। तत्र च योग्यतापि अपेक्षिता[1]' इति।

तथा हि तदिन्द्रियजन्यतत्सम्बन्धावच्छिन्नतदभावप्रत्यक्षं प्रति तदिन्द्रियजन्याना-हार्यतत्संसर्गकतत्प्रकारकोपलम्भाभावः कारणम्। अत एकसंसर्गेण प्रतियोगिप्रकारक-ज्ञानसत्त्वेऽपि अन्यसंसर्गेण अभावप्रत्यक्षोत्पत्तौ न कापि बाधा।

---

१. न्या० सि० मु० पृ० २६२–२६४।

### ९. अभावप्रत्यक्षं प्रति कारणनिर्णयः

अत एव संयोगेन 'घटवद् भूतलम्' इति ज्ञानसत्त्वेऽपि भूतले समवायेन 'घटो नास्ति' इति प्रत्यक्षमुपपद्यते। एवं प्रतियोगिनः प्रत्यक्षयोग्यतां विना तदभावस्यापि प्रत्यक्षयोग्यता न भवेत्। अत एवातीन्द्रियाणामभावः प्रत्क्षेण ग्रहीतुं न शक्यते। प्रतियोगिनो योग्यता नाम प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वरूपा।

अत्रायमर्थः—यस्य घटादेः प्रतियोगिनः सत्त्वप्रसक्त्या प्रसञ्जितः=आपादित इति यावत्। उपलम्भरूपः प्रतियोगी यस्य सः अभावप्रत्यक्षे हेतुः। यथा भूतलादावालोकसंयोगादिसत्त्वे 'यद्यत्र घटः स्यात् तर्हि उपलभ्येत' इत्यापादनं सम्भवति। तत्र घटाभावादेः प्रत्यक्षं भवति।

### १०. अभावप्रत्यक्षे योग्यतानिरूपणम्

ननु जलपरमाणौ पृथिवीत्वाभावः कथं न प्रत्यक्षेण गृह्यते ? तथा हि जलादिविशेष्यकप्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितोपलम्भस्य विशेष्यतासम्बन्धेन योऽभावः, तस्याभावस्य जलपरमाण्वादौ सत्त्वेन तत्र पृथिवीत्वाभावस्य प्रत्यक्षत्वापत्तिः। एवं भूतलं यदि समवायेन घटवत् स्यात्, तर्हि तद्वत्तयोपलभ्येत, इत्याकारकोपलम्भाभावस्य घटवत्यपि भूतले सत्त्वेन तत्र विशेष्यतासम्बन्धेन घटाभावप्रत्यक्षापत्तिः।

न च संयोगसम्बन्धेन घटवति भूतले घटाभावे अभावप्रत्यक्षोपयोगिसन्निकर्षाभावादेव नेयमापत्तिः सङ्गच्छत इति वाच्यम्, अधिकरणान्तरान्तर्भावेन घटाभावे तथाविधस्य सन्निकर्षस्य सत्त्वादिति चेत्, तत्रोच्यते—तदधिकरणविषयकाभावप्रत्यक्षे तदधिकरणकतदापादकयोग्यतदुपलम्भस्य विषयतासम्बन्धावच्छिन्नप्रतियोगिताकाभावो हेतुः। उपलम्भे तदधिकरणतदापादकापत्तियोग्यत्वं च तत्प्रतियोगिसत्त्वनिष्ठव्याप्तिनिरूपकम्। तथा हि यत्राधिकरणे यस्य प्रतियोगिनो येन सम्बन्धेन अभावो ग्राह्यः, तेन सम्बन्धेन तदधिकरणे तत्प्रतियोगिसत्त्वमपादनयोग्यं यदि भवेत्, तदैव तदधिकरणे तत्सम्बन्धावच्छिन्नतत्प्रतियोगिकाभावो ग्रहीतुं शक्यते। जलपरमाणौ च समवायसम्बन्धेन पृथिवीत्वं नापादनयोग्यम्, यतोऽधिकरणस्य प्रत्यक्षयोग्यत्वं विना तदधिकरणे प्रत्यक्षेण अन्यस्यापादनं नैव सम्भवेत्।

उक्तं च सिद्धान्तमुक्तावलीव्याख्यानावसरे दिनकरीटीकायाम्—'अत्र च तदापादककापत्तिर्यत्र नोत्पन्ना, तत्र तदभावप्रत्यक्षानुपपत्तिरिति योग्यत्वनिवेशः[१]' इति। तथा च भूतलादौ चक्षुःसंयोगानन्तरमापादनं विनापि 'घटो नास्ति' इति प्रतीतेरानुभविकतयाऽत्र योग्यतानिवेश इति तात्पर्य्यम्।

---

१. दिनकर्य्याम्–पृ० २६४–२६५।

ननु भूतलादौ घटादिसत्त्वेऽपि चक्षुःसंयोगाद्यभावे घटोपलम्भानुदयात् तत्रापि योग्यानुपलब्धिसत्त्वेन घटाभावप्रत्यक्षापत्तिर्भवितुमर्हतीति, उपलम्भे न केवलप्रतियोगिसत्त्वस्य व्यापकता सम्भवेत् । अत उपलम्भे केवलप्रतियोगिसत्त्वस्य व्यापकत्वाऽसम्भवेन कुत्राप्यभावप्रत्यक्षं मा भूत् ।

यदि पुनः प्रतियोगिसत्त्वरिक्तप्रतियोग्युपलम्भसामग्रीविशिष्टप्रतियोगिसत्त्वव्यापकता विवक्ष्येत, तदा जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षवारणं न सम्भवेत्, तत्र पृथिवीत्वसत्तातिरिक्तपृथिवीत्वोपलम्भकारणसामग्रीविशिष्टप्रतियोगिसत्त्वव्यापकतायाः सम्भवादिति चेत्, तत्रोच्यते—तत्र योग्यताघटकीभूतव्याप्त्यंशे तदधिकरणकावृत्तिधर्मानवच्छिन्नत्वस्य निवेशः कर्त्तव्यः । तथा हि यदधिकरणविशेष्यकाभावप्रत्यक्षत्वं कार्यतकावच्छेदकं भवेत्, तदधिकरणावृत्तिरित्यर्थः । एवं च सति जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षापत्तिर्न भवेत् । तथा हि अत्र प्रतियोगिसत्त्वनिष्ठपरमाण्ववृत्तिमहत्त्वधर्मानवच्छिन्नव्याप्तिनिरूपकोपलम्भेऽप्रसिद्धः स्यात् । अतः तदभावरूपकारणविरहादेव न जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षत्वापत्तिः । अत एव गन्धवदणुभिन्नत्वस्य जलपरमाणुवृत्तित्वाच्च पुनरपि जलपरमाणौ पृथिवीत्वाभावप्रत्यक्षापत्तिर्न भवेत् ।

वस्तुतस्तु प्रतियोगिनिष्ठप्रकारतानिरूपितलौकिकविशेष्यताभावप्रयोजकीभूतो योऽभावः, तस्य प्रतियोगित्वमेव प्रतियोगिग्राहकत्वमिति नियमः । पृथिवीत्वनिष्ठप्रकारतानिरूपितलौकिकविशेष्यताया जलपरमाणावसत्त्वान्न तत्र कोऽपि दोषः ।

न चैवं पिशाचाभावप्रत्यक्षं न स्यात्, तत्र पिशाचत्वप्रकारतानिरूपितलौकिकविशेष्यत्वाप्रसिद्ध्या तद्घटितनिरुक्तयोग्यानुपलब्धिविरहादिति वाच्यम्, सर्वत्राभावप्रत्यक्षे निरुक्तयोग्यानुपलम्भस्य हेतुत्वं न विवक्षणीयम्. अपि तु योग्यस्यैवाभावप्रत्यक्षं प्रति निरुक्तयोग्यत्वं कारणम् । अयोग्यपिशाचाद्यभावप्रत्यक्षे तु तदधिकरणीयप्रसञ्जनप्रसञ्जितप्रतियोगिकतदधिकरणीयत्वोपलम्भस्य विषयतासम्बन्धावच्छिन्नाभाव एव तत्र प्रतियोगितिष्ठो हेतुः । अत एव न दोषः ।

इदमत्र तात्पर्यम्—तद्विषयकैन्द्रियिकप्रत्यक्षं प्रति यानि यानि कारणानि अन्वयव्यतिरेकनियमसिद्धानि, अभावप्रत्यक्षस्थलेऽपि प्रतियोगिव्यतिरिक्तानि तानि सर्वाणि कारणान्यपेक्ष्यन्ते । अत एव यद्वस्तु प्रत्यक्षायोग्यम्, तदभावोऽपि न प्रत्यक्षः । अत एव गुरुत्वाभावादिकं प्रत्यक्षेण ग्रहीतुं न शक्यते । एवं संसर्गाभावप्रत्यक्षस्थले प्रतियोगिनो योग्यता अपेक्षिता, अन्योन्याभावप्रत्यक्षस्थले चाधिकरणयोग्यता अपेक्षिता । तथा चोक्तं सिद्धान्तमुक्तावल्याम्—'संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता अन्योन्याभावप्रत्यक्षे अधिकरणयोग्यता अपेक्षिता'' इति ।

१. सिद्धान्तमुक्तावल्याम्, प्रत्यक्षखण्डे, पृ. (२७०, २७२ ।

ननु केयं योग्यता नाम ? न तावद् जातिर्योग्यतेति वक्तुं शक्यते, अभावावृत्तित्व-प्रसङ्गात्। नापि प्रत्यक्षप्रयोजकोपाधिरूपा, सप्तातिरिक्तस्य पदार्थस्यानङ्गीकारात्। तत्रोच्यते—'प्रतिबन्धकाभावत्वमेव योग्यत्वम्। अत एव घटादीनां प्रत्यक्षप्रतिबन्धकत्वाभावाद् योग्यत्वम् गुरुत्वादीनां च तथाविधप्रतिबन्धकत्वादेव न योग्यत्वमिति न्यायमतं समाप्तम्।

## (ख) अभावस्यानुपलब्धिप्रमाणगोचरत्वमङ्गीकुर्वतां भाट्टानां मतम्

केचित् पुनरनुपलब्धिनामकं षष्ठं प्रमाणम् अभावग्राहकं स्वीकुर्वन्ति। तेषामयमाशयः—सर्वत्रैव प्रमाणानां प्रमेयनिरूपणपरत्वं प्रसिद्धम्। तत्र किञ्चित् प्रमेयं सद् भावाख्यं किञ्चित् पुनरभावाख्यमिति। तत्र भावाख्यं प्रमेयं भावाख्यैः प्रत्यक्षादिभिः प्रमाणैर्गृहीतं भवति। यत्र च पुनरभावाख्यं प्रमेयम्, तत्र भावग्राहकप्रमाणानां व्यापाराभावात् सुतरामेव अभावग्राहकं स्वतन्त्रं प्रमाणं स्वीकर्त्तव्यम्।

## ११. वेदान्तमतेऽपि अभावस्य अनुपलब्धिप्रमाणगम्यत्वम्

तथा हि इह 'घटो नास्ति' इति यत्र प्रतीयते, तत्र घटं प्रति सदुपलम्भकप्रमाणवृत्तिर्नास्तीति गम्यते, यतो घटोपलम्भकप्रमाणासत्त्वे घटो नास्तीति प्रत्ययानुत्पत्तेर्घटाख्यसदुपलम्भकप्रमाणाभाव एव तत्र घटाभावं निर्धारयति। अत एव तत्र घटविषयकज्ञातृव्यापारानुत्पाद एव दृश्यघटाद्यदर्शनाख्यं प्रामाणम्, नास्तीति बुद्धिः फलं च।

तथा चोक्तं शास्त्रदीपिकायां—'न च तदैन्द्रियकम्, इन्द्रियव्यापाराभावेऽपि तद्ज्ञानोत्पत्तिदर्शनात्। योऽहनि प्रातःकाले गृहे अवस्थितः, मध्यन्दिनसमये पृच्छ्यते किमस्मिन् गृहे प्रातःकाले माथुरः कश्चित् पुरुषः शुक्लवासा दीर्घतमो लोहितवर्णः समागत इति, स तदानीमेव योग्यस्मरणानुदयात् तस्याभावं प्रातःकालीनमवधारयति विनैव इन्द्रियव्यापारेण[1]' इति।

एवं श्लोकवार्त्तिकेऽप्युक्तम्—

> प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
> वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता[2]॥ इति।

एवं शबरस्वामिनापि भाष्ये उक्तम्—'अभावोऽपि प्रमाणाभावो नास्तीत्यर्थस्य असन्निकृष्टस्य[3]' इति।

अत्र च प्रमाणाभावः स्वरूपत एव चक्षुरादीन्द्रियवत् प्रमाणम्, न तु ज्ञायमानः, ज्ञानद्वारा न अभावहेतुकानुमानस्यापि अनुपलब्धित्वमिति वेदान्तिकानामभिप्रायः।

---

१. शास्त्रदीपिकायां—१।१।५; २. श्लो० वा०, अ० प० १;
३. शा० भा० १।१।५।

## १२. अभावस्य प्रमाणत्वपरीक्षणम्

ननु प्रमाणाभावो न प्रमाणम्, प्रत्यक्षेणैवाभिप्रेतार्थसिद्धिसम्भवात्। दर्शितं च प्रागेव विशेषताविशेष्यसन्निकर्षेणेन्द्रियद्वारा अभावग्रहणमिति चेत्, तत्रोच्यते—सम्बद्धयोर्हि दण्डपुरुषयोः, पटरक्तयोर्वा विशेषणविशेष्यभावः सम्भवेत्। अतो यत्र संयोगसमवायादिसम्बन्धगर्भितविशेष्यविशेषणभावः सम्भवेत्, तत्रैव विशेषणताविशेषाख्यः सन्निकर्षो भवितुमर्हति। अभावस्थले तु विशेषणविशेष्यघटकतत्तसम्बन्धाभावात् सुतरामेव विशेषणविशेष्यभावनिवृत्तौ विशेषणताविशेषाख्यसम्बन्धस्यापि निवृत्तिः।

## १३. वृत्तिनियामकसम्बन्धरूपसन्निकर्षाभावस्थले न प्रत्यक्षमित्यत्र वैशेषिकाणां सम्मतिः

अत्रेदं तात्पर्यम्—यद् वस्तु स्वयं केनचित् सम्बन्धेन प्रत्यक्षविषयीभूतं भवेत्, तदेवान्यत्रापि तत्सम्बन्धविशेषबालाद् विशेष्यं वा विशेषणं वा भवितुमर्हति यथा दण्डपुरुषयोः। तत्र दण्डः पुरुषश्च स्वतन्त्रेण संयोगादिसन्निर्षवशात् प्रत्यक्षविषयीभूतो भवेत्, अत एव तयोर्विशेष्यविशेषणभावोऽपि सङ्गच्छते, अत एव वृत्तिनियामकसम्बन्धेनाधाराधेयभावसिद्धौ तेनैव सम्बन्धेन सम्बद्धानां प्रत्यक्षकालेऽपि स एव सम्बन्धः सन्निकर्षतया व्यवस्थितः स्यात्, एतस्मादेव कारणाद् वैशेषिकनये वृत्तिनियामकसम्बन्धरूपसन्निकर्षाभावात् समवायस्य प्रत्यक्षत्वं नाङ्गीकृतम्।

तथा चोक्तं प्रशस्तपादभाष्ये—'एवम् अविभागिनो वृत्त्यात्मकस्य समवायस्य नान्या वृत्तिरस्ति, तस्मात् स्वात्मवृत्तिः, अत एवातीन्द्रियः, सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात्, स्वात्मगतसंवेदनाभावाच्च इति।

व्याख्यातं च कन्दलीकारेण—कृतको हि संयोगस्तस्य वृत्त्यात्मकस्यापि वृत्त्यन्तरमस्ति, कारणसमवायस्य कार्यलक्षणत्वात्, समवायस्य वृत्त्यन्तरं नास्ति, तस्मादस्य स्वात्मना स्वरूपणैव वृत्तिर्न वृत्त्यन्तरेणेत्यर्थः। अत एव अतीन्द्रियः सत्तादीनामिव प्रत्यक्षेषु वृत्यभवात्। यथा सत्तादीनां प्रत्यक्षेष्वर्थेषु वृत्तिरस्ति, तेन ते संयुक्तसमवायादिन्द्रियेषु गृह्यन्ते, नैवं समवायस्य वृत्तिसम्भवः। अतोऽतीन्द्रियोऽयम्, संयोगसमवायापेक्षस्यैवेन्द्रियस्य भावग्रहणसामर्थ्योपलम्भात्[1] इति।

अपि च, अभावो न केनचित् संयोज्यते, अद्रव्यत्वात्। न वा क्वचित् समवेति गुणादिवैलक्षण्यात्। यदि च संयुक्तविशेषणभावसन्निकर्षवशात् चक्षुः अभावं गृह्णाति, तर्हि तदविशेषात् संयुक्तद्रव्यसम्बन्धिनो रसादीनपि गृहणीयात्, तदभावमपि मा

---

१. न्यायकन्दल्यां—पृ० ७८५।

ग्रहीत्, अयोग्यत्वाविशेषात् । अपि च, यदि योग्यायोग्यत्वकृतग्रहणाग्रहणनियमाङ्गीकारे योग्यतैव सन्निकर्षो भवेत्, किं तर्हि षट्सन्निकर्षप्रख्यापनेन ?, तस्मात् कथमपि न घटाभावज्ञानं चाक्षुषम् ।

**१४. सन्निकर्षाभावाद् अभावस्य न प्रत्यक्षमिति पूर्वपक्षोपसंहारः**

ननु भूतलप्रदेशं घटाभावं च विस्फारितेन चक्षुषा निरीक्षेत्, निमीलितनयनेन तस्मिन् तयोरन्यतरमपि द्रष्टुं न शक्नुयाज्जनः, तत्र च समाने तद्भावभावित्वे प्रदेशज्ञानं चाक्षुषम्, अभावज्ञानं च न चाक्षुषमिति कुतो विशेषोऽवधार्येत, इति चेत्, उच्यते—प्रत्यक्षस्य सन्निकर्षनियतत्वादसन्निकृष्टं वस्तु चक्षुषाग्रहीतुं नैव शक्येत, अतोऽभावो न प्रत्यक्षेण ग्राह्यः ।

नापि अनुमानयोग्योऽपि अभावः, तत्र लिङ्गानुपपत्तेः । अनुमानं हि लिङ्गज्ञानं विना नैव सम्भवति, लिङ्गं च साध्याव्यभिचारि साध्यमनुमापयेत्, तत्र तु अभावाख्येन साध्येन कस्यापि लिङ्गस्य व्याप्तिर्नैव घटते । तथाहीदं घटाभाववदित्यनुमाने भूप्रदेशादिकं लिङ्गं भवितुं नार्हति, भूप्रदेशेन अभावस्य सम्बन्धग्रहणासम्भवात्, सम्बन्धाग्रहणं च सम्बन्धाभावादेव सम्पद्यते, सम्बन्धाभावश्च प्रागेवोक्तः । अग्रहीत सम्बन्धस्यापि भूप्रदेशस्यानैकान्तिकत्वाद् नाभावसाध्यकानुमानलिङ्गत्वम् ।

**१५. भूप्रदेशादेर्लिङ्गत्वानर्हत्वात् कस्यापि लिङ्गस्याभावे अभावसाधकमनुमानं न सम्भवति**

न च घटादर्शनमेव लिङ्गमित्यपि वाच्यम्, यतो घटादर्शनं घटवृत्तिर्दर्शनाभावः, स च घटस्यैव धर्मो भवति न तु तदभावस्य, अतः साध्यासम्बद्धतया घटाभावसाधकं लिङ्गं न घटदर्शनाभावः, न च घटाभावप्रतीतिं प्रति घटदर्शनाभावस्य व्याप्रियमाणत्वात् सुतरामेव तल्लिङ्गं भवितुमर्हतीति वाच्यम्, इतरेतराश्रयप्रसङ्गात्, तथा च तद्धर्मत्वे सति लिङ्गप्रतीतिजनकत्वम्, प्रतीतिजन्मनि सति तद्धर्मताज्ञानमदर्शनस्य दुर्घटमेव, सिद्धायां तु प्रतीतौ किं पक्षधर्मताज्ञानेन प्रागेव साध्यप्रतीतेः सिद्धत्वात् ।

**१६. घटधर्मत्वाद् घटादर्शनस्य साध्यासम्बद्धतया लिङ्गत्वानुपपत्तिः**

तथा ह्युक्तं श्लोकवार्त्तिके—

> **गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।**
> **मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षणात्[1] ॥**

---

१. श्लो० वा० अ० प० २७ ।

### १७. दृश्यादर्शनासिद्धिप्रदर्शनम्

इदमत्र तात्पर्यम्—दृश्यादर्शनं यदि अदर्शनमात्रम्, तर्हि आश्रयभूतं भूतलादिकमपि तत्र दृश्यतया प्रतीयमानत्वाददर्शनमेव न सिध्यति, यत् आश्रयभूतं भूतलादिकं वस्तु येन गृहीतं स्यात्, तस्यैव घटो नास्तीति प्रतीतिरपि सम्भाव्येत, नान्यस्य। अतो दृश्यादर्शनं नैव सिध्यति। अपि च व्याप्तिग्रहणं साध्यहेतूभयधर्मिग्रहणपूर्वकम्। तत्र व्याप्तिग्रहणवेलायामेव कुतोऽभावाख्यधर्मिग्रहणं सम्भाव्येत? तदपि धर्मिग्रहणं यदि पुनरनुमानपूर्वकम्, तर्हि अनवस्था दुर्वारा। एवम् अदर्शनाख्यलिङ्गमपि दर्शनाभावत्वस्वरूपमिति तत्तत्स्वरूपपरिच्छेदचिन्तायामपि इयमेव पद्धतिः समापतति। तस्माद् दूरमपि गत्वा अभावग्रहणार्थं प्रमाणान्तरं व्यवस्थापयितु नैव शक्नुयात। अतो योग्यानुपलब्धिर्नाम अभावग्राहकं प्रमाणान्तरमस्थेयम्।

### १८. योग्यानुपलब्धिप्रमाणान्तरेणैवाभावग्रहणमिति भाट्टसिद्धान्तवर्णनम्

इदमत्र तात्पर्यम्—ये हि मीमांसका अभावस्य अधिकरणात्मकत्वं मन्यन्ते, तेषां भावस्यैवाधिकरणस्य रूपान्तरेण असद्रूपस्यैव अभावपदेन व्यवहारः। तदेवोक्तं श्लोकवार्त्तिके—

> **स्वरूपपररूपाभ्यां नित्यं सदसदात्मके।**
> **वस्तुनि ज्ञायते कैश्चिद् रूपं किञ्चित् कदाचन[1]॥**

एवं चाभावतिरक्तस्य धर्म्यनङ्गीकारेऽपि भाव एव रूपान्तरेण अभावतया अङ्गीक्रियते। तथा च सति भूतलत्वरूपेण चक्षुरिन्द्रिययोग्यस्यापि भूतलस्य घटाभावादिरूपेण तद्योग्यत्वं न भवति। अन्यथा घटवत्त्वदशायामपि घटाभावप्रत्यक्षतापत्त्या सर्वसंकरप्रसङ्गः। तस्माद् अभाववद् भूतलमित्यादौ भूतलाभावयोः सम्बन्धस्य प्रमाणान्तरेण ग्रहणासम्भवाद् अभावप्रमाणग्राह्यत्वमेव सिद्धम्। अतस्तथाविधविशिष्टज्ञानमभावप्रमाणकमेव।

वस्तुतस्तु ज्ञानकरणाजन्यत्वादभावस्यानुभवसिद्धत्वाच्च तत्र प्रत्यक्षासम्भवेनानुपलब्धिप्रमाणं तत्र स्वीकर्त्तव्यम्।

### १९. अतीन्द्रियस्यानुपलब्धिगम्यत्वं न वेति विचारः

नन्वभावस्येन्द्रियायोग्यतया तद्ग्राहकमनुपलब्धिनामकं प्रमाणान्तरं यदि अङ्गीक्रियेत, तर्हि अतीन्द्रियाणामनुमानस्थलेऽपि अनुपलब्धिनामकं प्रमाणान्तरमेव स्वीकर्त्तव्यमिति चेत्, तत्रोच्यते—व्याप्तिज्ञानादिसम्भवस्थलेऽनुभवसिद्धस्यातीन्द्रियस्य ग्राहकमनुमानं यद्यपि सम्भवेत्, तथापि ज्ञानकरणाजन्यत्वेनैव अभावग्रहणस्थलेऽनुपलब्धिनामकं प्रमाणं विलक्षणमेव स्वीकर्त्तव्यम्, व्याप्तिग्रहणादेरसम्भवात्। अत एव

---

१. श्लो० वा० अ० प०-२२।

'ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणम्' इत्युक्तं वेदान्त-परिभाषाग्रन्थे[1]।

**२०. अनुपलब्धिगम्यस्याभावस्यानुभवविषयत्वव्यवस्थापनम्**

अत्रेद तात्पर्यम् यथा घटानुभवजन्यं घटज्ञानमनुभवात्मकम्, एवं घटानुपलम्भ-जन्यं घटाभावज्ञानमपि अनुभवात्मकमेव। तथा हि यदा क्वचिज्जनस्तत्र व्याघ्रादिकम-दृष्ट्वा तदस्मरणाच्च तदभावमगृहीत्वैव तद्देशमात्रं दृष्ट्वा देशान्तरं गतः केनचित् पृष्टः—भवद्दृष्टे तस्मिन् देशे कश्चित् व्याघ्रः समागतः किम्? स तदा तं देशं स्मरन्नपि तत्र व्याघ्रादीनामभावं प्राग् गृहीतम्, तदैव गृह्णाति। तत्र च न मध्यन्दिने प्रातःकालिकस्याभावस्येन्द्रियसन्निकृष्टस्य प्रत्यक्षेण ग्रहणं सम्भवति, तत्र च मध्यन्दिनसमयजातं व्याघ्रादिस्मरणाभावजन्यज्ञानमनुभवात्मकमेव स्वीकर्त्तव्यम्, न तु स्मरणात्मकम्, व्याघ्राभावसंस्कारादीनां पूर्वमसत्त्वात्। एवं च तस्य ज्ञानस्य प्रमात्मकतया स्मृत्यन्यत्वौचित्यात्। प्रमालक्षणे अनधिगतार्थकेति विशेणात्। अत एवाभावस्मरणासाधारणहेतुभूते संस्कारे अतिव्याप्तिवारणार्थमनुपलब्धिलक्षणेऽनुभवेति पदमपि उपात्तम्।

### (ग) प्रत्यक्षादिप्रमाणपञ्चकैर्नाभावोपलब्धिरिति वैशद्येन भाट्ट-सम्मतयुक्तिप्रदर्शनम्

वस्तुतस्तु प्रमाणपञ्चकाभावोऽनुपलब्धिः। तथा चोक्तं श्लोकवार्त्तिके—

**प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।**
**वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता[2]॥** इति।

**२१. अनुपलब्धेः षष्ठप्रमाणत्वव्यवस्थापनम्**

तथा च प्रमाणपञ्चकाभावस्य प्रमाणाभावपदार्थत्वकथनादनुपलब्धिप्रमाण-स्यापि प्रमाणत्वेन ग्रहणे न दोषः। एवं च सति यस्य प्रतियोगिनो यत्प्रमाणविषयत्व-योग्यता तादृशप्रमाणाभावेनापि तज्जातीयतदभावानुभवो जायते। एवं च अनु-मानादिप्रमाणाभावेन यद्यपि प्रथमतो धर्माभावादिज्ञानम्, तथापि धर्माभावाद्यनु-मितिरपि न दोषाय। तदुक्तं श्लोकवार्त्तिके—

**न चात्राप्यनुमेयत्वं लिङ्गाभावात् प्रतीयते।**
**काव्यस्य स्यात् प्रमाणत्वं लिङ्गत्वेन विना ध्रुवम्[3]॥**

---

१. वेदान्तपरिभाषायां—पृ० २४३। २. श्लो० वा० अ० प० १।

३. तदेव—२९,४२।

नन्वेवं चेत् स्यात् प्रमाणाभावजन्यातीन्द्रियाभावानुमितिस्थलेऽपि अनुपलब्ध्या एव अभावो गृह्यतामिति चेत्, उच्यते—योग्यानुपलब्धिरेवाभावग्राहिका। सुतरां धर्माधर्मादीनां योग्यत्वाभावादेव न तत्रानुपलब्धिप्रसंगः। तत्र अनुपलब्धेर्योग्यत्वं नाम तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम्। तथा हि तर्कितेन प्रतियोगिसत्त्वेन प्रसञ्जितस्तर्कित उपलब्धिरूपप्रतियोगी यस्याः सैव योग्यानुपलब्धिः।

## २२. योग्यानुपलब्धेः स्वरूपनिरूपणम्

तथा हि—अत्र भूतले यदि घटः स्यात् तर्हि घटवत्तया उपलभ्येत। एवं यत्र प्रतीतिस्तत्रैव अनुपलब्ध्या घटाभावो गृह्यते। एतेनैतदपि सिद्धं यच्चाक्षुषप्रत्यक्षोपयोगिनाम् आलोकसंयोगादीनां वर्त्तमानतायामेव तर्कितस्य प्रतियोगिनः सत्त्वमापादयितुं सम्भाव्येत। न हि अन्धकारे स्थितानापि घटानामुपलब्धिर्जायते। अतः प्रतियोग्युपलब्धिं प्रति यानि यानि कारणानि, प्रतियोगिनं विहाय तेषां तेषां कारणानां वस्त्वन्तरप्रत्यक्षेण प्रमाणितानां विद्यमानतायामेव प्रतियोगिनः सत्त्वमापादयितुं शक्नुयात्। तस्माद् अन्धकारादौ नानुपलब्ध्या घटाभावादिग्रहः। तथा च प्रतियोगितद्व्याप्येतरयावत्प्रतियोग्युपलम्भकसमवहितत्वमेवानुपलब्धेर्योग्यत्वम्।

अथवा योग्ये अधिकरणे प्रतियोग्यनुपलब्धिर्योग्यानुपलब्धिः। तत्रैव योग्यत्वं नाम प्रतियोगिसत्त्वप्रसञ्जनप्रयोज्यप्रतियोग्युपलब्धिप्रसञ्जनविषययोग्यत्वम्, योग्यतावच्छेदकं चात्र अधिकरणस्य तादृशप्रतियोग्युपलम्भकसमवधानम्, तेन अन्धकारे घटाभावः, आत्मनि धर्माद्यभावश्च नानुपलब्धिगम्यः। अत एव स्तम्भे तादात्म्येन पिशाचसत्त्वे तत्र सम्भवत्प्रत्यक्षतापत्त्या तदभावोऽनुपलब्धिगम्य इति वेदान्तपरिभाषोक्तमपि सङ्गच्छते।

ननु यदि प्रतियोग्युपलम्भकनिखिलकारणसमवधानदशायामेव घटादिप्रतियोगिनोऽभावोऽनुपलब्धिगम्यः, तर्हि अनुपलब्धेः प्रमाणान्तरत्वाङ्गीकारो निष्फल एव, क्लिप्तेन इन्द्रियेणैव संयुक्तविशेषणतादिसन्निकर्षादभावस्य ग्रहणसम्भवात्। घटवत्त्वदशायां च तत्र घटस्यैव ग्रहाद् घटाभावग्राहकसन्निकर्षाभावाच्च न घटाभावग्रहणम्, यतो घटासमानकालीनतत्तद्भूतलादिकमेव घटाभावग्राहकसन्निकर्षत्वेन विवक्षितम्। अतोऽधिकरणेन्द्रियसन्निकर्षस्थलेऽनुपलब्धिप्रमाणस्य स्वीकारात् क्लिप्तेनेन्द्रियादिनैव तत्र अभावग्रहणं युक्तम्, इन्द्रियान्वयव्यतिरेकसत्त्वादिति चेत्, तत्रोच्यते वैदान्तिकैः—प्रतियोग्यनुपलब्धेरपि अभावग्राहककारणशरीरे निवेशादिन्द्रियजन्यभावप्रत्यक्षस्थले च तथात्वाभावाद् न ऐन्द्रियिकज्ञानमनुपलब्धिग्राह्यम्। इन्द्रियान्वयव्यतिरेकयोरधिकरणज्ञानार्थमेवावश्यकतया न तत्र अभावज्ञानार्थमपीन्द्रियस्य कारणत्वम्।

**२३. इन्द्रियेणान्वयव्यतिरेकसत्त्वाद् भूतलादिकस्य च सन्निकर्षत्वादभावस्य नानुपलब्धिप्रमाणान्तरगम्यत्वमिति अनुपलब्धिप्रमाणान्तरत्वखण्डनम्**

ननु अभावस्याधिकरणस्वरूपत्वाङ्गीकारपक्ष एवानुपलब्धेः प्रमाणान्तरत्वेन स्वीकारात्, तत्राधिकरणस्य चाक्षुषत्वाङ्गीकारे सुतरामेव तदात्मकस्याभावस्यापि चाक्षुषत्वमेव सिद्धम्। अतः फलीभूतस्याभावज्ञानस्य चाक्षुषत्वानपायात् सुतरां तत्करणतयाऽनुपलब्धेरपि प्रत्यक्षकरणान्तर्भाव एव समुचितः। अतोऽनुपलब्धेः प्रमाणान्तरत्वं न सिध्यति, इति चेत्, तत्रोच्यते वैदान्तिकैः--करणवैजात्येनैव अभावज्ञानवैजात्यं सिध्यति। अभावस्य इन्द्रियग्राह्यत्वाऽसम्भवात् तत्र अनुपलब्धिप्रयोजनमवश्यं स्वीकर्त्तव्यम्। अत एव फलीभूतज्ञानस्य प्रत्यक्षत्वेऽपि सर्वत्र करणस्यापि प्रत्यक्षप्रमाणत्वमिति न सिध्यति।

**२४. तत्रैव वैदान्तिकमतप्रदर्शनम्**

वेदान्तनये 'दशमस्त्वमसि' इत्याद्यनुरोधेन शब्दजन्यस्यापि प्रत्यक्षज्ञानस्य स्वीकारात्। अतोऽनुपलब्धाभावस्य वस्तुत इन्द्रियग्रहणायोग्यत्वाद् अभावज्ञानमिन्द्रिय ग्राह्यप्रत्यक्षज्ञानाद् विलक्षणमेव। अधिकरणस्य अभावस्वरूपत्वेऽपि अभावत्वेन रूपेण यद्ज्ञानं जायते, तत्तु अधिकरणज्ञानाद् विलक्षणमेव। तथा हि 'भूतलं घटाभाववत्' इत्यत्र भूतलत्वावच्छिन्नविषेष्यकघटत्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारकं यद्ज्ञानं सम्पद्यते, तत्तु भूतलत्वप्रकारकज्ञानाद् भिन्नमेव। अतः फलीभूतज्ञानस्यापि अधिकरणज्ञानविलक्षणतया तज्ज्ञानकरणत्वेनानुपलब्धेः प्रमाणान्तरत्वं सिध्यतीति अनुपलब्धेः प्रमाणान्तरत्ववादिनामाशयः।

## (घ) न्यायमतमाश्रित्य अनुपलब्धेः प्रमाणान्तरत्वखण्डनम्

अत्रेदमुच्यते नैयायिकैः--अनुपलब्धिशब्दार्थविचारेण कस्तावदर्थो लभ्यते, तदेवादौ विचारणीयम्। तत्र विचारितानामर्थानां मध्ये न कस्यापि भवदभिमतप्रमाणान्तरमिह सिध्यति। तथा हि उपलब्धेरभावोऽनुपलब्धिरित्यत्र कोऽयमभावः? न तावत् उपलब्धेः प्रागभाव एव अनुपलब्धिशब्दार्थः, तथाविधेन अर्थेन यदि सर्वत्रैवाभावग्रहणमिष्येत तर्हि घटोपलब्धिप्रध्वंससमयेऽभावप्रमितिर्न सम्भवेत्, तत्र उपलब्धिप्रागभावस्यासत्त्वात्। भवति च पुनः घटोपलब्धिप्रध्वंसकाले घटोपलब्धेरभावज्ञानम्।

अथ यद्युपलब्धेः प्रध्वंस एव अनुपलब्धिशब्दार्थः स्यात्, तर्हि घटप्रागभावस्य घटात्यन्ताभावस्य च प्रमितिर्नैव सम्भाव्येत, यतो यस्य घटस्य प्रागभावस्तत्र वर्त्तते, स घटः कदाचिदपि नैवोपलब्धः। अतस्तस्या उपलब्धेः प्रध्वंसः कथं सम्भाव्येत? न हि वन्ध्यापुत्रस्य मरणं विद्यते। अथ यदि उपलब्धेरन्योन्याभाव एव अनुपलब्धिशब्दार्थः स्यात्, तर्हि घटोपलब्धिकालेऽपि तदभावप्रतीतिर्दुर्वारा। अथ यदि उपलब्धेर-

त्यन्ताभाव एवानुपलब्धिशब्दार्थः स्यात्, तत्रापि न निस्तारः, अत्यन्ताभावस्य त्रैकालिकत्वेनोपलब्धिदशायामपि तदत्यन्ताभावसत्त्वात् पूर्ववदेव घटोपलब्धिदशायामपि घटाभावोपलब्धिप्रसङ्गात् ।

## २५. 'अनुपलब्धि' शब्दान्तर्गतनञर्थविचारेण तत्र चतुर्विधाभावानुपपत्तिप्रदर्शनम्

न च यद्देशे यत्काले येन सम्बन्धेन घट उपलभ्यते, तद्देशे तत्काले तत्सम्बन्धावच्छिन्नघटात्यन्ताभावस्य ग्रहणं भवन्मतेऽपि सम्भवत्येव । अत्यन्ताभावस्य नित्यत्वाङ्गीकारात् । अत एव तत्र घटासमानकालीनतत्तद्देशादिकं घटाभावग्राहकसन्निकर्षरूपेण भवताङ्गीकृतम् । तत एव नित्यस्यापि घटाभावस्य घटवति भूतले स्थितस्यापि ग्रहणं न भवेत् ।

एवं वेदान्तिकमतेऽपि उपलब्धेरत्यन्ताभावस्यानुपलब्धिस्वरूपत्वे प्रतियोग्यारोपेण तत्र प्रयोजनं वर्त्तते । अतो घटवति भूतले यद्यत्र घटः स्यादित्यादिप्रतियोग्यारोपासम्भवेन न घटाभावज्ञानमिति चेत्, अत्रोच्यते—तथापि अनुपलब्धेः करणत्वासम्भवात् प्रमाणत्वं नैव सिध्यति । तथा हि व्यापारवत् कारणमेव करणमिति सर्वप्रसिद्धम् । अत्र चानुपलब्धिकरणत्वपक्षे कस्तावद् व्यापार इत्येवादौ विचारणीयम् ।

## २६. व्यापाराभावादनुपलब्धेर्न करणत्वम्

न च 'अत्र यदि घटः स्यादित्यनेन यद्घटस्मरणं भूतलाद्यधिकरणग्रहणं वा स एव व्यापारः' इत्यपि वाच्यम्, तत्र व्यापारलक्षणासमन्वयात् । तथा हि तज्जन्यत्वे सति तज्जन्यजनको हि व्यापारः । अत्र चानुपलब्धिजन्यत्वे सति अनुपलब्धिजन्यस्याभावज्ञानस्य जनक एव व्यापारो भवितुं युक्तः । तत्र प्रतियोगिस्मरणस्याधिकरणज्ञानस्य वाऽनुपलब्धिजन्यत्वाभावात् सुतरामनुपलब्धेर्व्यापारत्वं तयोर्नैव स्यात् ।

ननु न केवलमनुपलब्धिमात्रमेवाभावग्राहकं प्रमाणम्, अपि तु योग्यताविशिष्टानुपलब्धिरेव प्रमाणम् । अनुपलब्धिगता योग्यता च अभावप्रतियोगिभूतं यत् किञ्चिद् वस्तु, तथा तद्वस्त्विन्द्रियसन्निकर्षं च विहायान्यानि भूतलादीनि यावन्ति कारणानि तानि योग्यतापदेन ग्राह्यानि । अत एवम्भूतयोग्यतान्तर्गततया तद्भूतलाद्यविनाभूतेन्द्रियसन्निकर्षस्यापि तत्रान्तर्भुक्ततया तज्जनकत्वादनुपलब्धेस्तज्जन्यत्वमपि सुतरां सिध्यति । अतो व्यापारलक्षणसमन्वयः स्यादेवेति चेत्, तत्रोच्यते—ग्राह्येन्द्रियसन्निकर्षस्यैव ग्राह्यज्ञानजनकतयाऽधिष्ठानात्मकभूतलादिसन्निकर्षेण अभाववत्वावच्छिन्नाभावज्ञानं नैव सम्भवति । व्यापारलक्षणान्तर्गतसन्निकर्षमादाय यद्यभावस्यानुपलब्धेः करणत्वमभिप्रेतं स्यात्, तर्हि ग्राह्यतावच्छेदकावच्छिन्नविषयानुयोगिकचक्षुःप्रतियोगिकसन्निकर्षस्यैव तत्र चक्षुर्जन्यप्रत्यक्षज्ञानजनकत्वेन ग्रहणं समुचितम्, अन्यथा

व्यापारलक्षणायोगात् । अत्र योग्यताघटकीभूततत्तदधिकरणादिसन्निकर्षस्य तथा-विधाधिकरणादिज्ञानजनकत्वमेव, न त्वभावज्ञानजनकत्वम् । अतोऽभावज्ञानकरणशरीरे अभावानुयोगिकसन्निकर्षस्य व्यापारत्वेन ग्रहणौचित्याद् अधिकरणसन्निकर्षेण अभाव-ज्ञानकरणत्वं प्रत्यक्षस्यैव भवति, न तु अनुपलब्धेः ।

## २७. अनुपलब्धिप्रमाणत्वखण्डनम्

अपि तु 'कुण्डे दधि' इति वदिह 'भूतले घटो नास्ति' इत्यत्रापि व्यापारेऽनुपर-तेन्द्रियस्यैव भवति । तत्र च भूतलत्वावच्छिन्नविशेष्यतानिरूपितघटाभावत्वावच्छिन्न-प्रकारताशालिन्येकस्मिन् ज्ञाने विशेष्यांशस्य चाक्षुषम्, विशेषणांशस्य प्रमाणान्तरजनितं ज्ञानमिति कथमुच्येत ?

न चानुमानस्थले प्रत्यक्षदृष्टेन धूमेन अदृष्टस्य वह्नेर्ज्ञानं यथा भवति, तथैवा-त्रापीन्द्रियसन्निकृष्टेन भूतलेन प्रतियोग्यनुपलम्भसहकृतेन यद्ज्ञानम्, तत्तु प्रत्यक्षाद् भिन्नमित्यपि वाच्यम्, तत्र धूमेन वह्नेरनुमानस्थले धूमदर्शनेन व्याप्तिबलात् वह्नेर्ज्ञानं सम्पद्यते । अत्र चाधिकरणदर्शनेनाभावज्ञानं न तथाविधनियमबलसिद्धम् । न हि सर्वत्रैव भूतलाद्यधिकरणज्ञानेऽपि तद्वृत्तिघटाभावादिज्ञानमपि समुपजायते । अतो भूतलाद्यधिकरणेन सह घटाभावादेः अविनाभावसम्बन्धग्रहणासम्भवादनुमानवदत्रापि ज्ञानं न सम्भाव्यते । अत एकेनैवेन्द्रियेण युगपद् धर्मधर्मिभावापन्नयोर्भूतलघटाभावयो-र्द्वयोरेव ज्ञानं सम्भवेदित्यनुपलब्धेः प्रमाणान्तरत्वं नास्त्येव ।

वस्तुतस्तु अनुमितिस्थले पक्षेन्द्रियसन्निकर्षे सत्यपि तत्रावस्थितं साध्यमप्रत्यक्ष-मेव तिष्ठति । न हि पर्वतेन्द्रियसन्निकर्षेण पर्वते स्थितस्यापि वह्नेः प्रत्यक्षं भवेत् । अभावप्रत्यक्षस्थलेत्वधिकरणेन द्रष्टुरबाधितचक्षुःसंयोगं विना ज्ञानं नोत्पद्यते इति वादिभिरपि स्वीकृतमेव । एवं च सति भूतलाद्यधिकरणेन चक्षुःसन्निकर्षे सति तद्वृत्तिघटाभावादीनामप्रत्यक्षतयाऽवस्थानं नैव सम्भवेत् । तस्मादधिकरणप्रत्यक्षकाल एव तद्वत्यभावप्रत्यक्षोदयाद् अभावज्ञानं प्रत्यक्षात्मकमेव ।

न चाभावज्ञानस्थलेऽपि अधिकरणप्रत्यक्षानन्तरमेव प्रतियोग्यनुपलम्भवशात् तदभावप्रतीतिरपि नाधिकरणाभावयोर्युगपद् ज्ञानमित्यपि वाच्यम्, अधिकरणप्रत्यक्षा-नन्तरक्षणे यदि पृथगेव अभावज्ञानमभ्युपेतव्यं स्यात्, तर्ह्यभावज्ञानं प्रति चक्षुरादीन्द्रि-याणामन्वयव्यतिरेकौ न सिध्यतः । भवतापि च पुनस्तत्रान्वयव्यतिरेकौ चक्षुरादीनाम-भावज्ञाने स्वीकृतौ । तस्मादिन्द्रियान्वयव्यतिरेकानुविधायित्वादभावज्ञानं चाक्षुषमेव इति वाच्यम् ।

ननु नीरूपस्य चक्षुषा सम्बन्धासम्भवाच्चक्षुरसम्बद्धविषयत्वेनाभावज्ञानं चाक्षुष-मिति कथमुच्यते, इति चेत्, उच्यते--न हि सर्वत्र रूपवतां चाक्षुषत्वमिति नियमः ।

रूपवतामपि परमाणूनामचाक्षुषत्वात्। अतश्चक्षुर्जनितस्याभावज्ञानस्य न रूपवत्त्वेन चाक्षुषत्वम्, अपि तु चक्षुर्जनितज्ञानविषयत्वाच्चाक्षुषत्वम्। एवं चक्षुःसम्बद्धमपि सर्वत्र न चाक्षुषम्। आकाशस्य विभुत्वेन तत्रापि चक्षुःसम्बन्धः अस्त्येव, विभुत्वादाकाशस्य। सर्वमूर्त्तसंयोगानुयोगित्वमेव विभुत्वम्।

**२८. चक्षुषाऽसम्बद्धस्याप्यभावस्य चाक्षुषत्वव्यवस्थापनम्**

ननु चक्षुषाऽसम्बद्धस्यापि अभावस्य चक्षुर्ग्राह्यत्वाङ्गीकारे दूरव्यवहितानामपि विषयाणां चक्षुषा ग्रहणमस्तु इति चेत्, अत्रोच्यते—भावे खल्वयं नियमो यद् असम्बद्धं चक्षुषा न गृह्यते। अभावस्थले तु नायं नियमः। फलबलवशादेव एवं विधो नियमोऽङ्गीकर्त्तव्यः।

तथा चोक्तं जयन्तभट्टपादैः—'भावे खल्वयं नियमः—यदसम्बद्धस्य चक्षुषाऽग्रहणम्। अभावस्तु असम्बद्धोऽपि चक्षुषा ग्रहीष्यते[1]' इति।

अत एव षड्विधानां लौकिकसन्निकर्षाणां वर्णनमपि भावाभिप्रायिकमेव। तथा हि सम्बद्धं यच्चक्षुषा गृह्यते, तत्रैव षण्णां सन्निकर्षाणामन्यतमेन वर्त्तितव्यम्। एवमिन्द्रियाणां प्राप्यकारित्वस्वीकरणमपि भावाभिप्रायिकमेव। तस्माद् अवस्तुत्वादभावस्य तेन सन्निकर्षमलभमानमपि चक्षुःअभावविषयज्ञानं जनयतीत्येवं सिद्धम्।

**२९. चक्षुरसम्बद्धस्यापि व्यवहिताभावस्याप्रत्यक्षत्वोपपादनम्**

इदमत्र तात्पर्यम्—'इन्द्रियाणां प्राप्यकारित्वं भावपदार्थे पक्ष एव युज्यम्। अभावानां च भावभिन्नत्वात् तत्रेन्द्रियाणां प्राप्यकारित्वं नैव समादरणीयम्। तस्माच्चक्षुषा अभाव्रत्यक्षं न दोषाय।

नन्वेवमसम्बद्धस्यापि चक्षुषा ग्रहणाद् देशान्तरस्थितानामप्यभावानां चक्षुषा ग्रहणं भवतु अविशेषादिति चेत्, तत्रोच्यते—अधिकरणग्रहणसापेक्षत्वादभावप्रतीतेः। आश्रयस्य च सन्निहितस्यैव चक्षुषा ग्रहणसम्भवाद् दूरस्थानामधिकरणानां प्रत्यक्षासम्भवेन सुतरां तदधिकरणकाभावप्रत्यक्षोऽपि न भवेत्। संयुक्तविशेषणतासन्निकर्षेण वा अभावस्य प्रत्यक्षत्वं यथा प्रागेव प्रतिपादितम्, अत्रापि तदेव ग्राह्यम्।

**३०. तत्तदिन्द्रियजन्यप्रत्यक्षं प्रति तत्तदिन्द्रियसंयोगस्य विशेषतो हेतुत्वम्**

वस्तुतस्त्वभावेन भूतलाद्यधिकरणानां संयोगसमवाययोः सम्बन्धयोरसम्भवेऽपि तत्र विशेष्यविशेषणताभावाख्यसम्बन्ध एव अभावग्राहकः। न च संयुक्तविशेषणताख्यसन्निकर्षो यथा रूपाभावे वर्त्तते, तथा रसाभावेऽपि तुल्य एव वर्त्तते। अतश्चक्षुषापि

---

१. न्या० म० प्र० प्र० पृ० ४८।

रूपाभावाद् रूपाभावप्रत्यक्षं भवतु इत्याशङ्का जायेत, साऽपि चक्षुःसंयुक्तसमवाय-सन्निकर्षस्थलेऽपि तुल्यैव वर्तते। तथा हि चक्षुःसंयुक्तं द्रव्यं तत्समवायो रूपे यथा वर्त्तते, तथैव चक्षुःसंयुक्ते द्रव्ये समवेतो यो रसः तत्रापि चक्षुःसंयुक्तसमवायस्तुल्य एव इत्यहो भावप्रत्यक्षस्थलेऽपि अयं दोष आपद्यते। तत्र च येनोपायेन स दोषः परिहर्त्तव्यः, अत्रापि स एवोपायः समुद्भावनीयः[1]। तथा हि द्रव्यप्रत्यक्षं प्रति इन्द्रिय-सन्निकर्षत्वेन हेतुत्वे त्वक्प्रभासंयोगात् चाक्षुषत्वापत्तिः स्यात्।

एवमन्धकारे घटचक्षुःसंयोगाद् घटस्पार्शनप्रत्यक्षापत्तिः। अत एव तत्तदिन्द्रि-येण विशिष्यैव कार्यकारणभावो ग्राह्यः। तथा च द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणम्। द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणमिति, अनया रीत्या कार्यकारणभावो वाच्यः। तेन द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव चक्षुःसंयोगस्य कारण-त्वाच्चक्षुःसंयुक्तसमवायसन्निकर्षेण चक्षुर्ग्रहणयोग्यस्यैव प्रत्यक्षं भवति, न त्वयोग्य-स्यापि। अत एव सन्निकर्षस्थले तत्तदिन्द्रियग्रहणयोग्यतापि वस्तुनिष्ठा स्वीकर्त्तव्या। तथा चोक्तं न्यायमञ्जर्याम्—'तस्मात् षट्प्रकारा सन्निकर्षानुगामिनी योग्यता वक्तव्या[2]' इति। तस्माद् रसादीनां चक्षुरयोग्यत्वान्न चक्षुषा रसग्रहणम्।

इदमत्र तात्पर्यम्—यत्र योग्यता वर्त्तते, तत्रैव सन्निकर्षः स्वीकर्त्तव्यः। न तु सन्निकर्षवशादेव योग्यता स्वीकर्त्तव्या। अत एव न चक्षुषा रसग्रहणाशङ्का। तथा चोक्तं जयन्तभट्टेन—'यत्र योग्यता, तत्र सन्निकर्षोऽप्यस्ति, न तु यत्र सन्निकर्षोऽस्ति, तत्रावश्यं योग्यता'[3] इति।

### ३१. अभावप्रत्यक्षस्थलेऽपि सन्निकर्षोपपत्तिप्रतिपादनम्

अत एव चाभावस्यापि चक्षुर्ग्रहणयोग्यत्वात् तत्र सन्निकर्षस्तद्बलादेव स्वीकर्त्तव्यः। न च योग्यत्वं भावनिष्ठमित्यपि वाच्यम्, यतोऽभावस्यापि प्रमेयत्वमभि-

---

१. न केवलं सन्निकर्षमात्रेणैव प्रत्यक्षम्, अपि तु नियतेन्द्रियनिमित्तं प्रत्यक्षम्। अत एव तत्र रसग्राहकेण रसनेन्द्रियेणैव रसो ग्राह्यः, न तु चक्षुषा। तथा चोक्तं प्रशस्तपादभाष्ये – 'रूपरसगन्धस्पर्शेषु अनेकद्रव्यसमवायात् स्वगतविशेषात् स्वाश्रयसन्निकर्षाद् नियतेन्द्रिय-निमित्तमुत्पद्यते'। तत्रैव न्यायकन्दलीकारेणाप्युक्तम्—'स्वाश्रयसन्निकर्षाद् रूपादीनां य आश्रयः, तस्य ग्राहकैरिन्द्रियैः सन्निकर्षाद् नियतेन्द्रियनिमित्तं चक्षुर्निमित्तं रूपे, रसन-निमित्तं रसे, घ्राणनिमित्तं गन्धे, त्वगिन्द्रियनिमित्तं स्पर्शे ज्ञानम् उत्पद्यते' (न्या० क० प्रत्यक्षपरिच्छेदे—पृ० ४५९)।

२. न्या० म० प्र० प्र० पृ० ४९; ३. तदेव—पृ० ४९।

धेयत्वं वाच्यत्वं चेति भावनिष्ठानां धर्माणां स्वीकारात् तत्र योग्यतायाः सत्त्वे का हानिः ? अतः प्रतियोगिग्राहकेणैवेन्द्रियेणाभावप्रत्यक्षनियमाद् रसादेश्चक्षुर्ग्रहणायोग्यत्वेन तदभावोऽपि सुतरां चक्षुरगोचर एवेति स्थितम् ।

**३२. अतीतकालीनाभावस्मरणमपि न अनुपलब्धिप्रमाणकम्**

यच्चुक्तं वर्त्तमानकालीनमस्मरणमतीतकालीनस्य असन्निकृष्टदेशविशेषगतस्य च व्याघ्रादेरभावः प्रतिपाद्यते इति अभावोऽनुपलब्धिप्रमाणकः, तदपि न युक्तिसहम्, यतः वस्तुविशेषशून्यानां तत्तद्देशविशेषाणां स्वरूपप्रत्यक्षकाल एव तत्रानवस्थितानां वस्तूनामभावोऽपि प्रत्यक्षेण गृहीत एव । दृश्यते चालोकसामान्याभावरूपस्य तमसोऽनुभवकाले तत्रानवस्थितानामन्येषामालोकानामपि अभावः प्रत्यक्षगोचरः स्यात् । अत एवासावालोक आसीन्न वेति पृष्टस्तथाविधतमःप्रत्यक्षकारी जनस्तत्तदालोकविशेषाणामभावस्य स्मरति । इयमेव हि मेचकबुद्धिरिति प्रसिद्धं लोके । अत एव साम्प्रतं तस्मिन् पत्तने तदानीमनवस्थितस्य देवदत्तस्य तदभावस्मरणम्, तस्याभावस्य परोक्षत्वादेव न प्रत्यक्षविषयत्वम् ।

तथा हि तत्र तदानीं देवदत्तो नासीदिति केवलमेतदेव जिज्ञासितो जनः स्मरति । अत एव साम्प्रतं तत्र देवदत्तो वर्त्तते न वेति तत्र संशय एव जिज्ञासितस्यापि तस्य जनस्य वर्त्तते । तथा चोक्तं न्यायमञ्जर्याम्—'वस्त्वन्तरविविक्तगौरमूलकस्वरूपग्रहणसमय एव तत्र असन्निहितसकलपदार्थाभावग्रहणस्य मेचकबुद्ध्या सिद्धत्वाद् इदानीं तद्गतगर्गाभावस्मरणं न तस्य परोक्षस्य अनुभवः[१]' इति ।

न च तत्रान्धकारबुद्ध्या सकलाभावग्रहणे सहसैव सकलाभावस्मरणं जायतामिति वाच्यम्, यत्रैव प्रश्नादिस्मरणकारणमस्य समुपस्थितं स्यात्, तदैव स्मरति । न तु केवलमविद्यमानत्वं स्मरणनिमित्तम् । अत एव सर्वेषां स्मरणं न भवेत्, प्रश्नादिकारणाभावात् ।

**३३. आप्तवाक्यादपि अभावनिश्चयः**

अपि च आप्तवाक्यादपि क्वचिदभावनिश्चयो भवेत् । यथा घनान्धकारे विविक्तेन यथा गच्छन् केनचिदाप्तेन नास्त्यस्मिन् देशे व्याघ्र इत्युक्तो व्याघ्राभावं तद्देशे निश्चिनोति ।

**३४. अभावज्ञानं सम्बद्धमेव जायते**

वस्तुतस्तु यत्र अभावप्रतीतिस्तत्र तु स्वातन्त्र्येणैव अभावो नानुभूयते, किन्तु घटाभावादिवद् देशकालप्रतियोग्यादिभिर्विशिष्ट एव प्रत्यक्षगोचरः स्यात् । तथा हि

---

१. न्या० म० प्र० प्र०–पृ० ५० ।

'इह इदानीं घटो नास्ति' इत्येवमभावप्रतीतिः। न चैवम् इत्थमवगम्यमानोऽपि अभावो देशकालादिभिर्यदि सम्बद्धः, तदैव देशकालादिविशिष्टरूपेणाभावः प्रतीयते। वस्तुतस्तु देशेन कालेन प्रतियोगिना वा नास्य सम्बन्धो वर्त्तते, इति चेत्, एतत्तु प्रागेवलोचितम्। यतो विशेषणविशेष्याख्यसम्बन्धस्तत्र वर्त्तत एव। अपि च प्रतियोगितासम्बन्धेन प्रतियोगिविशिष्टोऽभावः। अत एव घटाभावपटाभावादिवैलक्षण्यं सिध्यति। तथा हि प्रतियोगितासम्बन्धेन घटविशिटोऽभावो घटाभावः। देशकालादिभिरपि प्रतियोग्य-समानकालीनतत्तद्देशादिस्वरूपसम्बन्धो घटत एव।

## ३५. बौद्धमतेऽभावस्य सम्बद्धित्वनिरसनम्

अत्राहुर्बौद्धाः—यद्यभावः स्वातन्त्र्येण प्रतीयमानः स्यात्, तदैव तद्ग्राहकं प्रमाणं चिन्तनीयम्। वस्तुतस्त्वभावस्य स्वातन्त्र्येण प्रतीतियोग्यतैव नास्ति, यतो देशकालप्रतियोगिविशिष्टत्वेनैव तस्य प्रतीतिर्भवद्भिरपि अङ्गीकृता। 'इदम् इदानीं नास्ति' 'इदम् इह नास्ति' इत्यादिप्रकारेण प्रतीयमानोऽभावो यदि देशकालादिभिः सम्बद्धः स्यात्, तदैव देशकालातिरिक्ततया विशेषणीभूतस्याभावस्य ग्रहणं सम्भाव्येत।

वस्तुतस्तु देशेन कालेन प्रतियोगिना वा अभावस्य कश्चित् सम्बन्धो नैव सिध्यति। न च विशेषणविशेष्यभावसम्बन्धोऽभावस्य पूर्वं प्रतिपादित इत्यपि वाच्यम्, भूतले कश्चित् सम्बन्धो यदि विद्यते, तदैव तेन सम्बन्धेनानुयोगिप्रतियोगि-विधया सम्बद्धयोर्विशेष्यविशेषणभावः सङ्गच्छते, न त्वभावस्य तथाविधः कश्चित् सम्बन्धो विद्यते।

वस्तुतस्तु विशेषणविशेष्यभावः सम्बन्धः स्वतन्त्रो न कश्चिद् विद्यते; किन्तु पुरुषेच्छया विशेषणविशेष्यभावो घटते। तथा हि विशेषणमपि विशेष्यीभवति। यथा वह्निमत्पर्वतबोधेच्छया 'वह्निः पर्वते' इत्यत्र पर्वते विशेषणीभूतस्यापि वह्नेः विशेष्यतया प्रतीतिः, विशेष्यस्य पर्वतस्य चाधेयत्वसम्बन्धेन विशेषणतया भानम्। अतः काल्पनिक एव विशेषणविशेष्यभावः, न तु वस्तुधर्मः। प्रतियोगिना सार्धमप्य-भावस्य सम्बन्धो नैव घटते, अतुल्यदेशकालत्वात्। न हि यद्देशे यत्काले वा प्रतियोगी तिष्ठति, तस्मिन् देशे तस्मिन्नेव च काले अभावोऽपि तिष्ठति। अतोऽसमानदेशकाल-त्वात् प्रतियोगितदभावयोः कथं सम्बन्धः? न च विरोधाख्यः सम्बन्धस्तत्र कल्पनीय इत्यपि वाच्यम्, विरोधपदार्थस्यैवात्रावधारणासम्भवात्। तथा हि घटाभावो यदि पूर्वं सिद्ध एव, तर्हि देशान्तरादागत्य घटं विरुन्ध्यात्। तथा सति यथा मुद्गरादीनां घटविरोधित्वम् तथैव घटाभावस्यापि घटविरोधित्वं कल्पयितुं शक्यम्।

वस्तुतस्तु असमानदेशकालत्वाद् घटतदभावयोर्मुद्‌गरादिवद् घटविरोधित्वं न सम्भवति। अपि च घटाभावो घटस्य किञ्चित् करोति न वा ? न करोति चेत् तस्य घटविरोधित्वं न सिध्यति। न हि अकिञ्चित्करत्वेऽपि विरोधित्वं सम्भवति। तथा सति सर्वैः सर्वं विरुध्येत। असमानदेशकालत्वाद् अभाव प्रतियोगिनः किञ्चित् कर्त्तुं न शक्नुयात्।

न च मुद्‌गारादिभिर्नाशकैर्घटविनाशे कृते घटाभावः सिध्यतीति घटतदभावयोः सहानवस्थायित्वरूपं विरोधित्वं सिध्यतीत्यपि वाच्यम्, सर्वेषां भावनां जन्यत्वेन स्वतो विनाशशीलत्वात् तत्र विनाशहेत्वन्तराभावात्। तथा चोक्तं तत्त्वसङ्ग्रहे—

> तत्र ये कृतका भावास्ते सर्वे क्षणभङ्गिनः।
> विनाशं प्रति सर्वेषामनपेक्षतया स्थितेः॥
> यद्भावं प्रति यन्नैव हेत्वन्तरमपेक्षते।
> तत् तत्र नियतं ज्ञेयं स्वहेतुभ्यस्तथोदयात्[1]॥

अत्रेदं तात्पर्यम्—जन्यानां भावानां विनाशशीलत्वमस्ति, नास्ति वा ? अस्ति चेत् स्वत एव विनाशशीलानां भावानां विनाशस्वाभाव्याद् विनाशार्थं हेत्वन्तरं नैवावश्यकम्। अथ यदि विनाशशीलत्वं नास्ति, तर्ह्यविनाशित्वाद् विनाशहेतुरनुपपन्नः।

### ३६. विनाशस्य प्रतियोग्येककारणत्वम्

यत्र तु मुद्‌गरादिप्रहारेण घटो विनश्यतीति प्रतीतिः, तत्र तु केवलं कपालादीनी जायन्ते मुद्‌गरादिभ्यः, न तु घटाभावः। यतो भावानां विनाशस्वाभाव्यात् स्वभावस्य निर्हेतुकतया तत्र मुद्‌गरादीनां व्यापाराभावाद् न नाशकत्वं तेषाम्। यदि तु विनाशस्य स्वाभाविकत्वं नानुमन्यते, तर्ह्यविनाशिनां तेषां भावानां नित्यत्वेन तत्रापि मुद्‌गारादीनां न किञ्चित् करणीयमस्ति। तस्मात् मुद्‌गरादीनां कार्यकारित्वमङ्गीक्रियते चेत् कपालादिसृष्टावेव तेषामुपयोगित्वम्, न त्वभावपक्षे किञ्चित् कारित्वमस्ति। यदि तु मुद्‌गरादीनां वस्त्वन्तरोत्पादकसामग्र्यन्तर्गतत्वम्, तदाऽभावं विना प्रकारान्तराणामेव वस्तूनां समुत्पत्तिः सम्भाव्येत।

न तु अभावोत्पत्तिरपि कल्पनीया, शशविषाणादिवदवस्तुत्वेनाभावस्योत्पत्तेरसम्भवात्।

न च मुद्‌गरेण यानि कपालादीनि जायन्ते, तान्येव घटाभावत्वेन गृह्यन्तामिति वाच्यम्, कपालभङ्गेऽपि कपालात्मकस्य घटाभावस्यापि नाशात् पुनः घटादीनामा-

---

१. तत्त्वसङ्ग्रहे-का० ३५३–३५४।

विर्भावप्रसङ्गः। अपि च, यदि अकिञ्चित्कुर्वाणानां कपालादीनां घटाभावत्वम्, तर्हि तेषां पटाभावत्वं वा कथं न स्यात् ? अपि च, कपालादीन्यपि स्वभावतो जायन्ते न वा ? जायन्ते चेत् तत्रापि मुद्गरादीनामकिञ्चित्करत्वम्, स्वभावस्य कारणानपेक्षणात्। अथ यद्यनुत्पत्तिस्वभावाः कपालादयः स्युः, तदा मुद्गरादिभिः प्रयत्नसहस्रैरपि तेषामुत्पादं कर्त्तुं न शक्यते। अपि च, अभावस्योत्पत्तिः स्वीक्रियते न वा स्वीक्रियते चेदुत्पत्तिमत्त्वादभावस्यापि शशविषाणादिवैलक्षण्येन घटादिवद् भावत्वप्रसङ्गः। अथ यदि उत्पत्तिर्नाङ्गीक्रियते, अभावस्य अस्तित्वं च पुनः इष्टम्, तदा अनुत्पन्नभावानां नित्यत्वनियमादभावस्यापि नित्यत्वमेवेति तत्र मुद्गरादिभिः किं क्रियते ?

### ३७. प्रकारान्तरेणाभावस्य सकारणत्वनिरसनम्

अपि च, योऽयमभावो भवद्भिरङ्गीकृतः, स एकपदार्थसम्बन्धी, अनेकपदार्थसम्बन्धी वा ? तत्र यदि एकभावपदार्थसम्बन्धी अभावः स्वीक्रियते, तदा यस्य नियतकारणं किञ्चिद् भवितुं नार्हति, यतः स्वभावत एवैकपदार्थसम्बन्धिनोऽभावस्यैकपदार्थसम्बन्धित्वे स्वभावं विना किञ्चित् कारणं नास्तीत्येवमङ्गीकर्त्तव्यम्। तथा च सति घटाभावः स्वभावत एव येन केनचिदेकेन वस्तुना नियतसम्बन्धो वर्त्तत एव, अतस्तस्य कारणं किञ्चिन्नैव सिध्यति।

अपि च, यदि घटाभावो नियतैकपदार्थसम्बन्धो भवेत्, तर्हि स पदार्थो घटो वा अन्यो वा ? यदि घट एव घटाभावेन नियतं सम्बध्यते, तर्हि यत्र घटस्तिष्ठति, तत्र तन्नियतसम्बन्धी घटाभावोऽपि अवश्यं वर्त्तत इति स्वीकर्त्तव्यम्। तथा च सति 'अत्र घटो नास्ति' इति व्यवहारदशायां घटोऽस्तीत्यपि व्यवहारः प्रसज्येत। एकसम्बन्धिसत्त्वे तन्नियतसम्बन्धिनोऽपरस्यापि विद्यमानत्वध्रौव्यात्। अथ यद्यभावः सर्वपदार्थसम्बन्धी स्यात्, तर्हि सर्वदैव जगति सर्वैः पदार्थैः सम्बद्ध अभावोऽपि तिष्ठतीति सर्वं जगद् अभावमयं स्यात्। एवमभावस्य तथात्वेन नित्यतया कदाचित् किञ्चित् प्रतियोगिकत्वमपि न सिध्यति। अपि तु सर्वप्रतियोगिकत्वमभावस्य सिद्धं भवेत्। अपि च, सर्वप्रतियोगिकत्वेऽभावस्य सर्वपदार्थप्रातिकूल्येन नित्यतया च नित्यानित्यानां भावानामस्तित्वमवलुप्येत, तथा चोक्तं तत्त्वसङ्ग्रहे—

**असत्त्वे सर्वभावानां नित्यत्वं स्यादनाशतः।**
**सर्वसंस्कारनाशित्वप्रत्ययश्चानिमित्तकः[1] ॥ इति।**

---

१. तत्त्वसङ्ग्रहे—का० ३७२;

## ३८. सौगतनये अभावानभ्युपगमेऽपि भेदव्यवहारोपपत्तिप्रदर्शनम्

ननु यद्यभावो नाङ्गीक्रियेत तर्हि अभावरूपस्य भेदस्याप्यनङ्गीकारः समापतेत्, एवं च सति भेदाभावेन व्यवहारवैलक्षण्यं विलुप्येत, तथा ह्ययं घटः, अयं पट इत्यादि-व्यवहारो घट-पटयोः पारस्परिकभेदप्रयुक्तः। तत्र भेदस्यानस्तित्वे प्रयोजकाभावात् तत्प्रयोज्यस्य विलक्षणव्यवहारस्यापि असङ्गतिर्दुर्निवारा।

तथा हि न्यायमञ्जर्यां श्लोकवार्त्तिकीयः श्लोकः—

> क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः।
> शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्त्तिरात्मनि[1] ॥ इति।

अभावाभ्युपगमे तु भावानामितरेतराभावादसङ्कीर्णस्वभावत्वात् परस्पर-वैलक्षण्यं सिध्यतीति चेत्, तत्रोच्यते—अभावानङ्गीकर्तृभिर्यदित्वभावेनैव भावानां परस्परवैलक्षण्यं साधनीयं स्यात्, तर्हि येन भावाख्येनाभावेन वस्तुनिष्ठेन अपरवैलक्षण्यं भावानामिष्टम्, तस्य भेदस्यापि भाववैलक्षण्यं केनचिद् अभावान्तरेणैव कल्पनीयं स्यात्। एवं तत्रापि तुल्ययुक्त्याऽभावान्तरकल्पनप्रसक्तिर्वारयितुं न शक्येत, इति अनवस्था। अतो भावानां परस्परवैलक्षण्यं स्वत एव अन्यनिरपेक्षमिति स्वीकारे न कोऽप्यपराधः।

अपि च, यदि अभावेनैव भावानां पृथक्स्वभावः स्वीक्रियेत, तर्हि, तत्र पृथक् स्वभाव एव नोपपद्यते, यतो घटात् पटस्य पृथक् स्वभावत्वोपपत्तये घटगतपटभेदस्यैव तत्प्रयोजकत्वं वाच्यम्। एवं च सति तत्र योऽयं घटगतः पटभेदः, तस्य घटस्वरूपत्वे-नाभावस्य पृथक्स्वभावप्रयोजकत्वं सिध्यति। घटस्वरूपानतिरिक्तस्य पटभेदस्य घटवदेव भावत्वात्। यदि पुनः घटगतपटभेदो घटादपि भिन्न एव, तर्हि पूर्ववदेवान-वस्था दुष्परिहारा।

ननु यद्यभावोनाङ्गीक्रियेत, तर्हि 'घटो नास्ति', 'घटो न' इत्यादिस्थले नञः कोऽर्थः स्यात्? शब्दस्य वाच्यार्थनियतत्वाद् नञोऽपि केनचिदर्थेन भवितव्यम्। स चार्थो भावात्मकाद् घटाद् भिन्नजातीय एव कल्पनीयः। स एव अभावः।

## ३९. नञो वाच्यार्थतयाऽभावः स्वीकर्त्तव्य इति नैयायिकप्रश्नस्य वाच्यवाचकभाव-खण्डनमुखेन सौगतैर्निरसनम्

अत्रोच्यते सौगतैः—न हि शब्दस्य वाच्यार्थनियतत्वे किञ्चित् मानमस्ति, यतोऽर्थेन यदि शब्दस्य कश्चित् स्वाभाविकः सम्बन्धः स्यात्, तदैव शब्दो वाच्यार्थ-नियतो भवेत्।

---

१. न्यायमञ्जर्याम् – पृ० ५२।

न च पुनः विद्यते कश्चित् सम्बन्धः। तथा हि तादात्म्यं जन्यजनकभावश्चेति द्वावेव सम्बन्धौ युक्तिसिद्धौ वर्त्तेते। तत्र शब्देनार्थस्य तादात्म्यसम्बन्धो नास्ति। न हि य एव शब्दः, स एव तदर्थ इति वक्तुं शक्यते। तथा सति वह्नितदर्थयोरैक्याद् वह्निशब्दोच्चारणे मुखदाहः कथं न स्यात्? न वा जन्यजनकभावसम्बन्धोऽपि तत्र कल्पयितुं शक्यः। तथा सति शब्दस्यार्थजनकत्वात् सिंहशब्द उच्चार्यमाण एव सिंहं जनयतु। तत्तु नास्ति, तस्माद् न हि शब्देनार्थस्य नियतः कश्चित् सम्बन्धः, अपि तु परत्र स्वबोधसंक्रान्तये अर्थेन शब्दस्य कश्चित् सम्बन्धः कल्पित एव।

**४०. प्रतिषेधेनैवाभावसिद्धिरिति न्यायमतम्**

नैयायिकैरत्रोच्यते—अभावो यदि नाङ्गीक्रियते, तर्हि प्रतिषेधसिद्धिः कथङ्कारं सम्भाव्येत? यतोऽत्र 'घटो नास्ति' इति प्रतिषेधव्यवहारो भवद्भिरपि स्वीक्रियेत। तत्र चानुपलब्धेरेव प्रतिषेधसिद्धिः बौद्धैरिष्टा। तथा च सूत्रम्—'प्रतिषेधसिद्धिरपि यथोक्ताया एव अनुपलब्धेः[1]' इति। अतो दृश्यानुपलब्धिवशात् प्रतिषेधव्यवहारः स्वीकृत एवेति प्रतिषिद्धस्याभावस्य अस्तित्वं बलादापतितम्, असतो व्यवहारायोगात्।

**४१. बौद्धाभिमतस्यैकादशधा अनुपलब्धिप्रकारस्याभावं विना नोपपत्तिरिति न्यायमतम्,तत्र बौद्धाभिमता स्वभावानुपलब्धिः**

अत एवायं प्रदेशो घटाभाववान् घटानुपलब्धेरिति अनुमानं स्वीकृतम्। तत्र यदि प्रतिषेध्यं घटादिकं स्यात्, तर्हि प्रतिषेधासम्भवात् प्रतिषेध्यप्रतियोगिकोऽभावोऽनुपलब्धिहेतुकः साध्यो वा कथं भवेत्?

तथा चोक्तम्—'सति वस्तुनि तस्यासम्भवात्[2]' इति। सत्यपि वस्तुनि अनुपलब्धिलक्षणाऽप्राप्तिः। अतोऽभावः स्वीकर्त्तव्यः।

एवमनुपलब्धिरपि एकादशविधा भवद्भिरिष्टा[3]। तथा हि स्वभावानु-

---

१. न्या० बि० २।२५। २. न्यायबिन्दौ-२।२६।

३. तथा च सूत्रम्—'सा च प्रयोगभेदादेकादशप्रकारा' (न्यायबिन्दौ-२।३०)।
प्रकारभेदान् आह--
(क) स्वभावानुपलब्धिर्यथा--'नात्रधूमोपलब्धिलक्षणप्राप्तस्य अनुपलब्धेरिति'
(न्या० बि०-२।३२)
(ख) कार्यानुपलब्धिर्यथा—'नेहाप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति धूमाभावादिति'
(न्या० बि०-२।३२)

पलब्धिः, यथा अत्र न घटः, अनुपलब्धेरिति। सूत्रम्—'नात्र धूमोपलब्धिलक्षण-प्राप्तस्यानुपलब्धेरिति[1]।

**४२. कार्यानुपलब्धिः**

यत्र च कार्यस्यानुपलब्ध्या तदविनाभावसम्बद्धस्य कारणस्याभावोऽनुमीयते, तत्र कार्यानुपलब्धिः। तथा हि अयं देशो धूमविशेषासम्बद्धः, वह्न्यभाववान् धूमाभावात्। सूत्रं यथा—'नेहाप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति, धूमाभावात्[2]' इति।

अत्रेदं बौद्धैरभिप्रेतं यत् कारणानि सर्वत्रैवावश्यं कार्यवन्ति न भवेयुः। सत्यपि सामन्यकारणे विशेषकार्यानुत्पत्तिदर्शनात्। अतो येन कार्येण यस्य कारणस्याविनाभावसम्बन्धो नास्ति तस्य कारणस्य अभावोऽनुमातुं न शक्यते। तथा चोक्तं धर्मोत्तरटीकायाम्—'कारणानि च नावश्यं कार्यवन्ति भवन्तीति कार्यादर्शनात् अप्रतिबद्धसामर्थ्यानामेव अभावः साध्यः। न तु अन्येषाम्[3]'। तथा हि यत्र कारणमदृश्यम्, तत्रैव कार्यानुपलब्धिः प्रवर्त्तते, यत्र तु दृश्यं कारणम्, तत्र दृश्यानुपलब्धिरेवाभावसाधिका।

**४३. व्यापकानुपलब्धिः**

यत्र च व्यापकस्याभावेन व्याप्याभावः साध्यते, तत्र व्यापकानुपलब्धिः। यथा—नात्र वटः, वृक्षाभावात्। सूत्रं यथा—'नात्र शिंशपा, वृक्षाभावात्[4]', अत्रापि

---

(ग) व्यापकानुलब्धिर्यथा—'नात्र शिंशपा वृक्षाभावात्' इति (न्या० बि०-२।३२)

(घ) स्वभावविरुद्धोपलब्धिर्यथा—'नात्र शीतस्पर्शः अग्नेः' इति ( न्या० बि० २।३४)

(ङ) विरुद्धकार्योपलब्धिर्यथा—'नात्र शीतस्पर्शः धूमात्' इति (न्या० बि०—२।३५)

(च) विरुद्धव्याप्तोपलब्धिर्यथा—'न ध्रुवाभावी भूतस्यापि भावस्य विनाशो हेत्वन्तरापेक्षणात्' इति (न्या० बि०—२।३६)

(छ) कार्यविरुद्धोपलब्धिर्यथा—'नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्ति अग्नेः' इति (न्या० बि०—२।३७)

(ज) व्यापकविरुद्धोपलब्धिर्यथा—'नात्र तुषारस्पर्शो वह्नेः' इति (न्या० बि०—२।३८)

(झ) कारणानुपलब्धिर्यथा—'नात्र धूमोऽग्नयभावात्' इति (न्या० बि०—२।३९)

(ञ) कारणविरुद्धकार्योपलब्धिर्यथा—'न रोमहर्षादिविशेषयुक्तपुरुषवान् अयं प्रदेशो धूमात्' इति (न्या० बि०—२।४०)

(ट) कारणविरुद्धोपलब्धिर्यथा—'नास्य रोमहर्षादिविशेषाः' इति (न्या० बि०—२।४१)

१. न्या० बि० २।३१।    २. न्या० बि० २।३२।

३. तदेव—धर्मोत्तरटीकायाम्—२।३२।    ४. तदेव—२।३३।

व्याप्यस्यादृश्यत्वे एवेयमुपलब्धिः प्रयुज्यते। दृश्ये तु व्याप्ये दृश्यानुपलब्धिरेव साधिका भवेत्।

**४४. स्वभावविरुद्धोपलब्धिः**

स्वभावविरुद्धोपलब्धिर्यथा—नात्र शीतस्पर्शो वह्निमत्त्वात्।

**४५. विरुद्धकार्योपलब्धिः**

विरुद्धकार्योपलब्धिर्यथा—नात्र शीतस्पर्शो धूमोपलब्धेः।

**४६. विरुद्धव्याप्तोपलब्धिः**

विरुद्धव्याप्तोपलब्धिर्यथा—न अध्रुवभावी भूतस्यापि भावस्य विनाशः, हेत्वन्तरापेक्षणात्।

अत्रेदं बोध्यम्—उत्पत्तिमतां भावानां हेत्वन्तरसापेक्षत्वात् तेषां विनाशोऽपि अवश्यम्भावी। अत एव हेत्वन्तरनिरपेक्षाणां नित्यानामलीकानां वा विनाशो नास्ति। अतो जन्यानां भावानां हेत्वन्तरसापेक्षतया विनाशशीलत्वध्रौव्याद् हेत्वन्तरसापेक्षत्वं विनाशशीलत्वव्याप्तम् अतो विनाशशीलत्वोपलब्धौ तद्विरुद्धाविनाशशीलत्वाभावो निर्णीतो भवेत्। तथा चोक्तं धर्मोत्तरटीकायाम्—'विनाशश्च विनश्वरस्वभावात्मा हेत्वन्तरापेक्ष इष्टः। ततो विरुद्धव्याप्तहेत्वन्तरापेक्षणदर्शनाद् ध्रुवभावित्वनिषेधः[1]'।

**४७. कार्यविरुद्धोपलब्धिः**

कार्यविरुद्धोपलब्धिर्यथा—प्रतिषेधस्य यत् कार्यम्, तस्य यद् विरुद्धम्, तस्योपलब्धिरित्यर्थः। यथा—अत्र न शीतकारणम्, वह्न्युपलब्धेः।

**४८. व्यापकविरुद्धोपलब्धिः**

व्यापकविरुद्धोपलब्धिर्यथा—प्रतिषेध्यस्य यत् व्यापकम्, तेन यद् विरुद्धम् तस्योपलब्धिरित्यर्थः। यथा नात्र शीतस्पर्शः, वह्निदर्शनात्।

**४९. कारणानुपलब्धिः**

कारणानुपलब्धिर्यथा—प्रतिषेध्यस्य यत् कारणम् तेन यद् विरुद्धम् तस्योपलब्धिरित्यर्थः। यथा—नेत्रस्थ रोमहर्षादयः सन्ति, सन्निहितवह्निमत्त्वात्।

**५०. कारणविरुद्धकार्योपलब्धिः**

कारणविरुद्धकार्योपलब्धिर्यथा—यत्र प्रतिषेधस्य कारणेन विरुद्धम्, यत् तस्य यत् कार्यम्, तदनुपलब्धिः। प्रवृत्तदण्डवीणादिविशेषपुरुषाधिष्ठित एष देशो न भवति धूनात्।

---

१. न्या० बि० धर्मोत्तरटीकायाम्–२।३६।

**५१. कारणविरुद्धोपलब्धिः**

कारणविरुद्धोपलब्धिर्यथा—नास्य रोमहर्षादिविशेषाः सन्निहितदहनविशेषत्वात्। सूत्रं यथा—'नास्य रोमहर्षादिविशेषा[1]' इति।

तथा चैवंभूतैरेकादशप्रकारैरनुपलब्धिलिङ्गैरभावानुमानं स्वीक्रियते बौद्धैः। तथा चानुपलब्धिविषयतया अभावस्य स्वीकरणमावश्यकमेव।

**५२. अत्र बौद्धानां प्रत्युत्तरम्**

तत्कथं नाभावोऽङ्गीक्रियत इति चेत् तत्र प्रत्युच्यते सौगतैः—यद्यपि अस्मन्मतेऽनुपलब्धिहेतुरङ्गीकृतः, तथापि नायमभावसाधको हेतुः। अपि तु नास्तीति व्यवहारसाधकत्वमेवैतेषां हेतूनाम्। तथा चोक्तं धर्मकीर्तिना—'सर्वत्र चास्यामभावव्यवहारसाधन्यामनुपलब्धौ येषां स्वभावविरुद्धादीनामुपलब्ध्या कारणादीनामनुपलब्ध्या च प्रतिषेध उक्तः, तेषामुपलब्धिलक्षणप्राप्तानामेवोपलब्धिरनुपलब्धिश्च वेदितव्या[2]' इति।

न हि नास्तीति व्यवहारस्याभावसाधकत्वम्, किन्तु घट एव पटादिरूपेण नास्तीति व्यवह्रियते। उक्तं च तत्त्वसङ्ग्रहे—

**अन्यवस्तुनि विज्ञाने वृत्ते सर्वस्य नास्तिता।**
**अदृश्यस्यापि गम्येत द्वितीयाभावसंश्रये[3]॥** इति।

वस्तुतो बौद्धमते अर्थक्रियाकारित्वमेव सत्त्वम्। तस्माद् यद् अर्थक्रियाकारि न भवेत्, तन्न सत्। अतो यस्य कस्यचिद् वस्तुनोऽर्थक्रियाकारित्वेन यदा सत्त्वम्, तदैव तत्रास्तीति व्यवहारः। यत्र त्वर्थक्रियाकारित्वं नोपलभ्यते, तत्रैव नास्तीति व्यवहारः। न तु तेनैवाभावस्य वस्तुत्वं सिध्यति। तथा चोक्तं तत्त्वसङ्ग्रहे—

**अर्थक्रियासमर्थं च सदन्यदसदुच्यते।**
**समावेशो न चैकत्र तयोर्युक्तविरोधतः[4]॥** इति।

अत्र प्रत्युच्यते नैयायिकैः—भवन्मते द्विविधो हि हेतुः। स्वभावहेतुः, जन्यजनकभावलक्षणो हेतुश्च। तत्रानुपलब्धिलक्षणहेतुः स्वभावहेतोरन्तर्भुक्तः। तथा च सूत्रद्वयम्—'वस्तुतस्तादात्म्याद् उत्पत्तेस्तदुत्पत्तेश्च', 'इमे सर्वे कार्यानुपलब्ध्यादयो दशानुपलब्धिप्रयोगाः स्वभावानुपलब्धौ संग्रहमुपयान्ति[5]' इति। स्वभावहेतुस्तादात्म्यत्वेनाभिप्रेतः। यथा—अयं वृक्षः शिंशपाया इति। सूत्रं यथा—'वृक्षोऽयं शिंशपात्वात्[6]' इति।

---

१. न्या० बि० २।४०। २. तदेव-२।४५। ३. तत्त्वसङ्ग्रहे-१६६९।
४. तत्त्वसंग्रहे-का० १६७५। ५. न्यायबिन्दौ-२।४२। ६. तदेव-२।२६।

**५३. अभावानङ्गीकारेऽनुपलब्धेर्हेतुत्वं नोपपद्यत इति न्यायमतम्**

एवं च सति नास्तीति व्यवहारस्यानुपलब्धिहेतुत्वेनाभिप्रेतत्वाद् भेदः स्वीकर्त्तव्यः, अन्यथा हेतोः सत्त्वेन नास्तीति व्यवहारसिद्धस्य साध्यस्यापि हेतोरभिन्नतया सत्त्वं प्रसज्येत। तस्मान्नास्तीति व्यवहारसाधकज्ञानादनुपलब्धिहेतोर्भेद एव स्वीकर्त्तव्य इति स्वभावहेतुत्वं कथं सम्भवेत् ?

**५४. नास्तीति व्यवहारस्यासद्व्यवहारयोग्यत्वमात्रम्, नत्वभावास्तित्वसाधकमिति बौद्धाभिप्रायः**

अत्रोच्यते बौद्धैः—नास्तीति व्यवहारोऽनुपलब्ध्या साधितो न भवति, किन्तु असद्-व्यवहारयोग्यता तत्र साध्यते। योग्यता च नार्थान्तरमिति स्वभावहेतुत्वं सिद्धमेव। ननु योग्यताया अपि भावरूपतयाऽनुपलब्धेश्चाभावस्वरूपत्वात् तयोस्तादात्म्यं कथमिति चेत्, तत्रोच्यते—उपलब्धिप्रतिषेधमात्रस्यानुपलब्धिपदार्थतया नाभावत्वमनुपलब्धेः। अपि तु प्रतिषेधपर्युदस्तवस्त्वन्तरोपलब्धिमेव तत्रानुपलब्धिमाहुः। यथा 'रात्रौ श्राद्धं न कुर्वीत' इत्यनेन पर्युदस्तकालत्वेन रात्रिः श्राद्धपक्षे प्रतिषिद्धा, न तु तत्राभावः कश्चिद् गम्यते। तस्माद् अनुपलब्धेः न अभावत्वम्।

न चानुपलब्धेरसद्व्यवहारसिद्धावदृष्टानामपि वस्तूनां केनचित् कारणेनानुपलब्धानामसत्त्वमेवास्तु, इत्यपि वाच्यम्, तत्र दृश्यत्वयोग्यानामेव वस्तूनां तदानीमनुपलब्धौ नास्तीति व्यवहारविषयता, न तु दृश्यत्वायोग्यानामपि नास्तीति व्यवहार-विषयत्वम्। अत एवाकाशकुसुममसदित्येवं प्रयोगः, न त्वत्राकाशकुसुमं नास्तीत्यपि प्रयोगो भवितुमर्हति।

अत्रायमाशयः—दृश्यत्वेन प्रसिद्धानां पूर्वनिश्चितानां घटादीनामनुपलब्ध्या तत्रैव नास्तीति व्यवहारः संगच्छते। यच्च पुनः कदाचित् केनचिन्नोपलभ्यते, तस्य दृश्यत्वयोग्यत्वाभावान्नानुपलब्धिमात्रेण प्रतिषेधः सम्भवेत्। अत एवाकाशकुसुमादीनां दृश्यत्वयोग्यत्वाभावादनुपलब्धिमात्रेण नास्तीति व्यवहारो न सिध्यति। अतीन्द्रिया-णाञ्चार्थानामर्थक्रियाकारित्वेन सत्त्वसिद्धावुपलब्धिप्रतिबन्धकवशादेव नोपलब्धिः। अतो न तेषामनुपलब्धिमात्रेणाभावः सिध्यति।

तथा हि यत्र नास्तीति व्यवहारः स्यात्, तत्र निषेधप्रतियोगिपदार्थस्य दृश्यत्व योग्यत्वमपेक्षितम्। अत एवाकाशकुसुमं नास्तीति व्यवहारो न भवेत्। घटः पटो न भवतीत्यादिभेदप्रतीतिस्थले तु प्रतियोगियोग्यत्वं नापेक्ष्यते, अपि तु यदधिकरणे भेदः प्रतीयते, तदधिकरणस्य प्रत्यक्षयोग्यत्वमावश्यकम्। अत एव स्तम्भादौ पिशाचभेदः प्रत्यक्षेण गृह्यते। तस्मादनुपलब्धिमात्रेण सर्वत्र नाभावव्यवहारः, अपि तु दृश्यानुप-लब्धिमात्रमेव नास्तीति व्यवहारप्रयोजकम्। अन्योन्याभावप्रयोजकं चानुयोगियोग्य-

त्वम् । तस्मादनुपलब्धिवशादेव नास्तीति व्यवहारसिद्धौ तदर्थं पदार्थत्वेनाभावस्वीकरणं नावश्यकम् ।

### ५५. पूर्वोक्तबौद्धमतखण्डनार्थं नैयायिकानामुत्तरम्

अत्र प्रत्युच्यते नैयायिकैः—सर्वत्रैवानुभवसाक्षिकतया वस्तु सिध्यति । अत एव यन्नानुभूयते, तन्न वस्तु । प्रसिद्धश्चायं व्यवहारो लोकेषु 'इह घटोऽस्ति', 'इह घटो नास्ति' इति । तत्र यद्यभावो वस्तुभूतो न भवेत्, तर्हि 'इह घटो नास्ति' इति व्यवहारः सर्वजनानुभवसिद्धो नैव सिध्येत् । तस्मान्नास्तीति व्यवहारबलादभावस्य स्वीकरणमावश्यकम् । तथा चोक्तं न्यायमञ्जर्याम्—'अत्राभिधीयते—इदं तावत् सकलप्राणिसाक्षिकं संवेदनद्वयमुपजायमानं दृष्टम् 'इह घटोऽस्ति', 'इह घटो नास्ति' इति । तत्र विकल्पमात्रसंवेदनमनालम्बनमात्मांशावलम्बनं वा इत्यादि यदभिलप्यते, तन्नास्तिताज्ञाने इव अस्तित्वज्ञानेऽपि समानम् । अतो द्वयोरपि प्रामाण्यं भवतु । द्वयोरपि वा मा भूत् । यत्तु अस्तीतिज्ञानं प्रमाणम्, इतरदप्रमाणमिति कथ्यते, तदिच्छामात्रम्. अस्तीति ज्ञानसमानयोगक्षेमत्वे च नास्तीति ज्ञानस्य विषयश्चिन्तनीयः' इति ।

अत्रायमाशयः—वस्तुतत्त्वनिर्णये प्रेक्षावत्सिद्धव्यवहारस्य प्राधान्यं स्वीकर्तव्यम् । अन्यथा स्वेच्छातन्त्रतया वस्तुतत्त्वनिर्धारणं स्वाभिप्रायानुरूपमापद्यते । तथा च सति कदाचिदाकाशकुसुमादीनामपि लोकानुभवविरुद्धानां तात्त्विकत्वं स्वीकर्तव्यं स्यात् । तस्माद् विरुद्धार्थप्रतिपादनानौचित्यादकामेनापि भवता लोकानुभवसिद्धव्यवहारस्यैव वस्तुतत्त्वविषये प्रामाण्यमङ्गीकर्तव्यम् ।

एवं च सति अस्तिताप्रत्ययवद् नास्तित्वप्रत्ययस्यापि सर्वलोकसिद्धतया नास्त्यर्थत्वेनाभावो वस्तुभूतः स्वीकर्त्तव्यः । अन्यथा अस्तिताप्रत्ययस्यापि वस्तुसाधकत्वं नैव स्यात्, द्वयोरपि प्रत्यययोस्तुल्यबलशालित्वात् । अतोऽस्तीति व्यवहारवन्नास्तीति व्यवहारस्यापि प्रामाणिकत्वाभ्युपगमे तज्ज्ञानविषयतया किञ्चिद् वस्तु सिध्यत्येव ।

ननूक्तमेव यद् घटादिशून्यभूतलादौ दृश्यत्वेन प्रसिद्धानां तेषां घटादीनामनुपलब्धेः केवलं भूतलोपलब्धिरेव घटो नास्तीत्यादिव्यवहारसाधिकेति चेत्, तत्रोच्यते—घटशून्यभूतलादावित्यत्र का नाम घटशून्यता ? तच्च यदि केवलं भूतलस्वरूपमेव घटशून्यत्वमिष्येत तर्हि घटवत्यपि भूतले भूतलस्वरूपस्यानपायाद् घटानुपलब्धिप्रसङ्गेन घटो नास्तीति व्यवहारः सुतरामापद्यते, अथ यदि भूतलविशेषणीभूतं सुतरामेव भूतलातिरिक्तं घटशून्यत्वमुच्येत, तर्हि अङ्ग तदेवाभावतया प्रगृह्यताम् ।

### ५६. नास्तीतिप्रमात्मकव्यवहारविषयतया अभावसिद्धिः

अपि च, घटशून्यत्वं घटादभिन्नं भिन्नं वा ? यदि प्रथमः कल्पस्तर्हि घटशून्यत्वयोरेकत्वाद् घटवदपि भूतलं घटशून्यमिति प्रमात्मकव्यवहारप्रसक्तिः। अथ यदि घटाद् भिन्नमेव घटशून्यत्वम्, तर्हि घटाभाव एव सम्पद्येत, तस्माद् 'इह घटो नास्ति' इति प्रतीतेर्घटशून्यभूतलविषयकत्वाङ्गीकारेण तत्र घटाभावः सिध्यत्येव, इह घटो नास्तीत्यत्र देशविशेषावलम्बनेन इहेति शब्दः सर्वेषामभिमतः, तत्र नास्ति विप्रतिप्रत्तिलेशोऽपि, 'इह घटोऽस्ति' इत्यादिभावप्रतीतिकालेऽपि इह इत्यंशस्य देशविशेषालम्बनत्वेन बोधात्, अपि तु 'इह घटो नास्ति' इति निषेधात्मकप्रत्ययस्य विषयो न भूतलमात्रम्। तस्माद् भूतलातिरिक्ततया अभावाख्यस्य पदार्थस्य स्वीकरणमावश्यकम्।

वस्तुतस्तु 'घटाभाववद् भूतलम्' इत्यत्र भूतलविशेष्यकघटाभावप्रकारकं विशिष्टं यज्ज्ञानं समुत्पद्यते, तत्र प्रकारविधया भासमानस्याभावस्य स्वीकरणं विना कथमपि तथाविधः प्रत्ययो न लोकेषु सम्भवेत्, विशेष्यविशेषणयोर्वैशिष्ट्यमन्तरेण विशिष्टज्ञानानुदयात्। न च यत्र घटादिकं प्राप्यते, तत्रैव 'घटोऽस्ति' इति व्यवहारः, यत्र तु तथाविधो व्यवहारो नोपलभ्यते, तत्र तादृशव्यवहारोपपत्तये अभावाख्यं किञ्चिद् वस्त्ववश्यं स्वीकरणीयम्।

### ५७. बौद्धमते घटो नास्तीति ज्ञानस्य विकल्पत्वेन प्रमात्वनिराकरणम्, नैयायिकमतेन विकल्पज्ञानस्यापि प्रमात्वस्थापनं च

ननु 'घटो नास्ति' इति ज्ञानं विकल्पमात्रमेव, विकल्पज्ञानत्वान्न प्रमा[1]। तस्माद् भावज्ञानस्य प्रमात्वानवगाहित्वेनाभावः प्रमेयो न भवेत्, अत्रोच्यते—सविकल्पकज्ञानस्य संवादिप्रवृत्तिजनकत्वेन प्रमात्वं वारयितुं न शक्यते, यतो ज्ञानेन प्रदर्शितमर्थं प्रापयज्ज्ञानं प्रमा भवतीति भवद्भिरपीष्टम्, तथा चोक्तं धर्मोत्तर—टीकायाम्—'अतोऽर्थक्रियासमर्थवस्तुप्रदर्शकं सम्यग्ज्ञानम्[2]' तथा च सति सविकल्पकज्ञानस्य प्रदर्शितार्थप्रापकतया प्रमात्वमव्याहतम्।

### ५८. अभावज्ञानं नियतमेव सविकल्पकम्

'जलं पिब' इत्याद्यभिलापवाक्यश्रवणानन्तरं ज्ञायमानस्य जलस्य पानेन पिपासानिवृत्तिरुपलभ्येत, तत् कथं जलमित्यादिसविकल्पकज्ञानस्य प्रमात्वं न स्यात् ?

---

१. विकल्पज्ञानम्—वस्तुस्वरूपातिरिक्तनामजात्यादिसम्बन्धावभासकं ज्ञानं विकल्पज्ञानम्, सूत्रम्—'अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना' (न्या० बि० २।५)। अतो निर्विकल्पकं कल्पनारहितं वस्तुस्वरूपमात्रावगाहि ज्ञानं प्रमा।

२. न्या० बि० १।१—धर्मोत्तरटीकायाम्।

एवं च सति सविकल्पकज्ञानस्य प्रमात्वसिद्धौ सविकल्पकज्ञानत्वादेवाभावज्ञानस्य प्रमात्वं खण्डयितुं न शक्यते ।

अभावज्ञाने पुनरयं विशेषो यद् भावज्ञानं कदाचिद् निर्विकल्पकं कदाचिद् वा सविकल्पकमपि स्यात्, अभावज्ञानं पुनः नियतमेव सविकल्पकं यतः प्रतियोगितासम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिविशिष्टज्ञानमेव तदभावज्ञानम् । न हि अवच्छेदकधर्ममनन्तर्भाव्य प्रतियोगी अभावेन अन्वेति । अतोऽभावज्ञानं नियतमेव सविकल्पकम् । तदुक्तं कुसुमाञ्जलौ—

अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात् ।
प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः[1] ।। इति ।

अत्रायमाशयः—अभावज्ञानं प्रतियोगिज्ञानसापेक्षम् । न ह्यविदितप्रतियोगिकेन तत्प्रतियोगिकाभावो लभ्यते, अतः प्रतियोगिज्ञानस्याभावज्ञानात् पूर्वमपेक्षणीयत्वेन प्रतियोगिज्ञानरूपविशेषज्ञानाद् नियमतोऽभावज्ञानं सविकल्पमेव, न निर्विकल्पम् । घटादिज्ञानस्थले तु प्रथमतः घटघटत्वयोर्वैशिष्ट्यानवगाहिनिर्विकल्पकमेव ज्ञानं जायते । ततश्च 'घटोऽयम्' इति सविकल्पकज्ञानम्, तस्माद् अभावबुद्धिसामान्यं प्रति प्रतियोगिग्रहस्य हेतुत्वेनाभावनिर्विकल्पकासिद्धिः । प्रतियोगिज्ञानस्याहेतुत्वेऽभावनिर्विकल्पकस्वीकारे इन्द्रियादेवाभावज्ञानोत्पत्तिरिति तत्र नानुपलब्धिप्रमाणसम्भावना ।

वस्तुतस्तु सर्वत्रैव पूर्वानुभवसापेक्षं सविकल्पकज्ञानम् । भवन्मतेऽपि अनुभूतपदार्थस्यैव कल्पनात्मकज्ञानविषयत्वात् कल्पनात्मकं ज्ञानं पूर्वानुभवसापेक्षम् । अनुभवश्च वस्तुसत्त्वसापेक्षम्, आकाशकुसुमादीनामननुभवात् । एवं च सति भवन्मतेऽप्यभावस्य कल्पनात्मकज्ञानविषयत्वाङ्गीकारे पूर्वमेवाभावानुभव आवश्यकीयः ।

न च भावविषयकानुभवेनैवाभावकल्पना सम्भवेत्, तस्मादकामेनापि कल्पनात्मकज्ञानविषयत्वाङ्गीकारादभावस्य वस्तुसत्त्वं स्वीकर्त्तव्यम् । तथा चोक्तं जयन्तभट्टपादैः—

यथानुभवमुत्पत्तुमर्हन्ति किल कल्पनाः ।
प्रतिषेधविकल्पस्तु न विध्यनुभवोचितः[2] ।। इति ।

### ५९. अभावज्ञानस्य किञ्चिदप्रापकत्वेन प्रमात्वं नोपपद्यत इति बौद्धानां शङ्का

ननु भावविषयकज्ञानानन्तरं ज्ञानोपदर्शितवस्तुप्राप्तिबलेनैव तथाविधानां सविकल्पकज्ञानानां प्रमात्वं कल्पयितुं यद्यपि शक्यम्, तथाप्यभावज्ञानस्थले ज्ञानोपदर्शितवस्तुप्राप्तेरसम्भवात् सुतरामेवाभावज्ञानस्यप्रमात्वं न युक्तम् । न हि घटाभाव-

१. न्यायकुसुमाञ्जलौ–३।२२ ।      २. न्या० म० प्रमाणकरणे–पृ० ५५ ।

ज्ञानानन्तरं भूतलादिप्रदेशे घटाभावाख्यं वस्तु केनापि लब्धुं शक्येत। तस्मादभावज्ञानस्य प्रमात्वं नास्ति। वस्तुप्रापकत्वेनैव ज्ञानस्य प्रमात्वं न्यायविद्भिरपीष्टम्। तथा चोक्तं न्यायभाष्ये—'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्याद् अर्थवत्प्रमाणम्'[1] इति। अतो नाभावज्ञानं प्रमा। प्रमात्वप्रयोजकत्वाभावादिति चेत्, तत्रोच्यते—यथा नीलादिज्ञानानन्तरं नीलं लभ्यते, तथैव नीलेतरपीतादिभिन्नरूपेणैव नीलप्राप्तेरिष्टतया नीलादिव्यतिरिक्तपीताद्यभावस्यापि प्राप्तिः सिध्यत्येव। तथा चोक्तं जयन्तभट्टैः—'सेयमभावस्यापि प्राप्तिर्भवत्येव। नीलं हि प्राप्यमाणं तदभावविनाभूतपीतादिव्यवच्छिन्नरूपं प्राप्यते। सा चेयं तथाभूतनीलप्राप्तिर्भवन्तीइतराभावप्राप्तिरपि भवति। अन्यथा हि नीलप्राप्तिरेव न स्यादिति'[2] इति।

### ६०. अभावज्ञानस्य प्रापकत्वव्यवस्थापनम्

अपि च, रिपूणामभावात् सुखोत्पत्तिः, सुहृदामभावाद् दुःखोत्पत्तिः सर्वेषामनुभवसिद्धा। प्रेक्षावद्भिश्च कण्टकादिप्रतिबन्धकाभावं समीक्ष्य पादन्यासः क्रियते। घटादीनामुत्पत्तेः प्राक् तत्प्रागभावं विलोक्यैव तन्निर्माणचेष्टा जायते। विचक्षणैश्च भिषक्प्रवरैः रोगाभावं यथायथं निश्चित्य रोगिणं प्रति भेषजव्यवहारो निषिध्यते। एवं च सति प्रेक्षावतां सचेतनानामभावावस्थानसमवलोकनात् तथा अभावनिष्ठव्यवहारपारम्पर्यस्य व्यवहारहेतुत्वेन ग्रहणाच्च कथमभावास्तित्वमपलपितुं शक्यते।

अत्र प्रत्युच्यते बौद्धैः—सर्वत्रैव विषयप्रत्यक्षे कारणकुक्षावन्तर्भुक्तस्य विषयस्यैव प्रत्यक्षालम्बनं प्रसिद्धम्। अत एव च प्रत्यक्षं प्रति विषयस्य कारणत्वं न्यायविद्भिरपीष्टम्, एवं च सति अभावप्रत्यक्षस्थले कारणकलापेष्वभावस्यान्तर्भावो नैव सम्भाव्येत, व्यलीकत्वाद् अभावस्य।

### ६१. अभावस्य प्रत्यक्षविषयत्वानुपपत्तिशङ्का

न ह्यवस्तुभूतानां कारणत्वं सम्भवेत्। तस्माद् विषयविधया सकलोपाख्याविनिर्मुक्तस्वरूपस्य खपुष्पस्येवावस्तुभूतस्याभावस्य कारणत्वशरीरे प्रवेशासम्भवात् सुतरामेव प्रत्यक्षविषयता नाभावे सम्भवतीति।

### ६२. क्षणभङ्गवादिमते कार्यकारणभावानुपपत्तिप्रदर्शनम्, अभावस्य ज्ञानविषयत्वोपपादनञ्च

अभावस्य प्रत्यक्षविषयत्वकल्पनं सुदूरपराहतमिति चेत्, तत्रोच्यते—क्षणभङ्गवादिनां सौगतानां मते भावस्यापि कारणत्वं नैव सम्भाव्येत, यतः कारणतया निर्णीयमाणस्य द्विक्षणावस्थायित्वमवश्यं स्वीकर्त्तव्यम्। प्रथमक्षणे समुत्पन्नस्य भवन्मते

---

१. न्यायभाष्ये—१।१।१। २. न्यायमञ्जर्यां पृ० ५५।

द्वितीयक्षणे विनाशात् सुतरां तस्य कारणत्वं नैव सम्भाव्येत। दृश्यते च—प्रथमक्षणे समुत्पन्नं वस्तु तदर्थज्ञानं जनयति। अनन्तरं च ज्ञातं वस्तु कारणं भवितुमर्हति। अत उत्पत्त्यनन्तरं द्वितीयक्षणे विनाशिनां वस्तूनां कारणत्वानवकाशः प्रसज्येत। तस्मान्न केवलमभावानाम्, अपि तु भावानामपि कारणत्वं भवन्मते असिद्धम्।

अस्मन्मते त्वभावस्य न शशशृङ्गादिवत् सर्वसामर्थ्यशून्यत्वम्, अपि त्विदमिह नास्ति, इदमिदं न भवतीत्यादिज्ञानविषयत्वमेवाभावत्वम्, तस्माद् यद् हि भावत्वेन प्रतीयमानम्, स एव भावपदार्थः, तद्विपरीतश्चाभावपदार्थः। एतत्त्वभावलक्षणप्रसङ्गेन प्रागेव वैशद्येनालोचितम्।

## ६३. भाववदभावस्यापि कारणत्वप्रतिपादनम्

तस्मादुक्तं न्यायभाष्यकृता—'किं पुनस्तत्त्वम्? सतश्च सद्भावः, असतश्च असद्भाव इति। सत् सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति। असच्च असदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति। कथं पुनरुत्तरस्य प्रमाणेनोपलब्धिरिति? सति उपलभ्यमाने तदनुपलब्धेः प्रदीपवत्। यथा दर्शकेन दीपेन दृश्ये गृह्यमाणे तदिव यन्न गृह्यते, तन्नास्ति, यदि अभविष्यदिदमिव व्यज्ञास्यत, विज्ञानाभावान्नास्तीति। एवं प्रमाणेन सति गृह्यमाणे तदिव यन्न गृह्यते, तन्नास्ति। यदि अभविष्यदिदमिव व्यज्ञास्यत विज्ञानाभावान्नास्तीति तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयतीति[1]' इति।

उक्तं च जयन्तभट्टेनापि—'सत्प्रत्ययगम्यो हि भाव इष्यते। असत् प्रत्ययगम्यस्तु अभावः[2]'। न च भाव इव अभावोऽपि यदि जनकः स्यात्, तर्हि भावाद् अभावस्य वैलक्षण्यं व्याहन्येत, यतः सामर्थ्यं भावस्य। अत एव सामर्थ्यविरहाद् अभावस्य भाववैलक्षण्यम्। साम्प्रतं तु जनकत्वसामर्थ्यं भावानामिवाभावानामपि अङ्गीक्रियते चेत्, तर्हि सामर्थ्यासामर्थ्यकृतवैलक्षण्यमपि हीयत इति वाच्यम्। भावाभावयोर्ज्ञानवैलक्षण्यादेव विषयवैलक्षण्यमङ्गीकर्तव्यम्। सर्वत्रैव प्रत्ययवैलक्षण्यं प्रति विषयवैलक्षण्यस्य हेतुत्वात्। यदि तु जनकत्वबलात् सर्वत्रैवावैलक्षण्यमास्थीयेत, तर्हि स्वस्वज्ञानं प्रति रूपरसयोरपि जनकत्वात् तयोरपि अवैलक्षण्यं प्रसज्येत। जनकत्वस्य तुल्यतया तयोर्भेदानुपपत्तेः। तत्र च प्रतीतिभेदस्यैव विषयभेदनियामकत्वाङ्गीकारे भावाभावयोस्तत् सत्त्वात्। न हि विषयवैलक्षण्यं विना प्रतीतिभेद इति सर्वैरेव स्वीकृतम्।

## ६४. ज्ञानवैलक्षण्याद्भावाभावयोर्वैलक्षण्यम्

उक्तं च जयन्तभट्टपादैः—'ननु भाववदेष ज्ञानजनकः सन्नभावो न भावाद् विशिष्यते, अहो निपुणदर्शी देवानां प्रियः। प्रतीतिभेदश्चास्ति, तत्र प्रतीयमानो

---

१. न्यायदर्शने वात्स्यायनभाष्ये—१।१।१। २. न्या० म० ५६।

भावाभावौ भिद्येते इति कथमेवं भवेत् ? अपि रे मूढ ! ज्ञानजनकत्वाविशेषेऽपि रूपरसौ कथं भिद्येते ? प्रतीतिभेदादिति चेत्, भावाभावौ अपि जनकत्वधर्मसामान्येऽपि प्रतीतिभेदादेवं भिद्येयाताम्। न हि प्रतिभास्यभेदमन्तरेण प्रतिभासभेदो भवतीति भवतापि अभ्युपगतम्[1]' इति।

## ६५. ज्ञानविषयत्वनिरूपणम्

अपि च ज्ञानालम्बनमात्रस्यैव ज्ञानजनकत्वाङ्गीकारे स्वाप्नवस्तूनामपि ज्ञानजनकत्वं स्वीकर्तव्यम्। तथा च सति स्वप्नदृष्टवस्तूनां सत्यतापत्तिः। जनकवस्तुविषयकस्य प्रत्यक्षस्य यथार्थत्वनियमात्। तस्मान्न हि ज्ञानालम्बनमात्रमेव ज्ञानजनकत्वेन सिद्धं भवेत्। अपि तु आलम्बनमात्रविषयत्वम्। अत एव भ्रमज्ञानस्थलेऽपि रज्जुसर्पादौ विषयत्वं स्वीकृतम्।

न च विषयत्वमेव तात्त्विकत्वे प्रयोजकम्, भ्रमप्रमासाधारणत्वाद् विषयत्वस्य। तत्र चायमेव नियमः स्वीकर्त्तव्यः—अविद्यमानवस्तुविषयकं ज्ञानं विषयविधया तद्वस्त्ववगाहमानमपि न तस्य सत्तां साधयितुमर्हति। अपि तु केवलं विषयतामात्रेणैव तत्र ज्ञानं तद्वस्तु विषयीकरोति। सद्वस्तुविषयकस्थले अयमेव नियमो यज्जनकशरीरे प्रविष्टस्य विषयस्यैव ज्ञानजनकत्वं ज्ञानविषयत्वं च। अतो यत्र वस्तु विद्यमानमेव जनकम्, तत्रैव ज्ञानं यथार्थम्, नान्यत्र।

तथा चोक्तं न्यायमञ्जरीकारैः—

**प्रामाण्यं वस्तुविषयं द्वयोरर्थभिदां जगौ।**
**प्रतिभासस्य चित्रत्वाद् एकस्मिंस्तदयोगतः[2] ॥**

तदिह पर्यवसितम् यद् अस्तीति प्रतीतिविषयीभूतस्य भावत्वेनावगाहनाद् यथा पदार्थत्वं स्वीकर्त्तव्यम्, तथैव नास्तीति प्रतीतिगोचरस्य अभावस्यापि पदार्थत्वं अङ्गीकर्त्तव्यमेव। अभावस्यापि अर्थक्रियाकारित्वं प्रागेव प्रतिपादितम्। अतोऽर्थक्रियाकारित्वस्य सत्त्वप्रयोजकत्वमभ्युपगच्छतां सौगतानामभावस्य वस्तुत्वं बलादापतितम्।

## ६६. अभावस्य वस्तुत्वं भावाधिकरणत्वं च स्वीकर्तव्यम्

न च भावाभावयोः परस्परविरोधाद् आधाराधेयभावानुपपत्तेर्भावाधिकरणकोऽभावो नैव सिध्यति, सम्बन्धानुपपत्तेरित्यपि वाच्यम्, तत्र भूतलाद्यधिकरणेनाभावस्य विशेष्यविशेषणभावरूपः सम्बन्धः सम्भवत्येव। यथा 'घटवद् भूतलम्' इत्यत्र भूतलस्य विशेष्यतया घटस्य च विशेषणतया प्रतीतिः सर्वानुभवसिद्धा, तथैव 'घटा-

१. न्या० म० पृ० ५६। २. तदेव—पृ० ५६।

भाववद् भूतलम्' इत्यत्रापि भूतलस्य विशेष्यतया घटाभावस्य विशेषणतया प्रतीतिरानुभविकी, विशेष्यविशेषणभावस्य प्रतीतिमात्रशरीरत्वात् ।

इयांस्तु विशेषः—भावविशेष्यकभावविशेषणकप्रतीतिस्थले विशेष्यविशेषणभावः सम्बन्धान्तरपूर्वकः, तथा च भूतलानुयोगिकघटप्रतियोगिकसंयोग एव तत्र घटभूतलयोर्वैशिष्ट्यसम्पादक इति विशेष्यविशेषणभावः संयोगपूर्वकः । अभावस्थले तु विशेष्यविशेषणभावो न सम्बन्धान्तरमपेक्षते, प्रतीतिविषयत्वादेव विशेष्यविशेषण भावस्य सम्बन्धतयाऽवगाहनात् । यतः विशेषणत्वविशेष्यत्वान्यविशिष्टधीविषयत्वस्यैव सम्बन्धस्वरूपतयाऽभावविशेषणकस्थलेऽपि तथाविधस्य सम्बन्धस्य प्रतीतिबलात् सम्भव एव ।

अपि च, सम्बन्धत्वमेव विशेषणत्वप्रयोजकमित्यपि न नियमः । न हि चरणावधृतदण्डः शिरसा वा कथञ्चित् सम्पृक्तयष्टिकः पुरुषो दण्डसम्बन्धवशाद् दण्डीति व्यह्रियते, न वा विशेषणभावं प्रति सम्बन्धत्वं नियामकम्, यतः 'रूपसमवायवान् घटः' इत्यत्र घटत्वावच्छिन्नाधिकरणतानिरूपिताधेयता समवाये वर्त्तत इति समवायस्य तत्र विशेषणत्वमङ्गीकर्तव्यम् ।

न च पुनस्तत्र समवायस्य घटे सम्बन्धान्तरं विद्यते । समवायस्य नित्यत्वात् सम्बन्धत्वाच्च तस्य सम्बन्धान्तरं नास्ति । तथा चोक्तं प्रशस्तपादभाष्ये—'एवमविभागिनो वृत्त्यात्मकस्य समवायस्य नान्या वृत्तिरस्ति, तस्मात् स्वात्मवृत्तिः[१]' इति । अत एव वाच्यवाचकभावसम्बन्धवद् विशेष्यविशेणभावोऽपि प्रतीतिबलात् सम्बन्ध एवेति स्वीकर्त्तव्यम् । अतो नास्य व्यवहारार्थं सम्बन्धान्तरमपेक्ष्यते ।

अपि च, विशेष्यविशेषणभावः पुरुषेच्छानुवर्त्तनेन प्रसरति । तथा हि 'घटवद् भूतलम्' इत्यत्र घटस्य विशेषणत्वेन भूतलस्य च विशेष्यतया यथा प्रतीतिः, तथैव 'भूतले घटः' इत्यत्र घटविशेष्यकाधेयत्वसम्बन्धावच्छिन्नभूतलविशेषणकोऽनुभवः सर्वत्रैव सिध्यति । तस्माद् विशेष्यं वा विशेषणं वा न किञ्चिद् गोत्वादिवद् नियतम् । उभयोरप्युभयात्मकत्वसम्भवात् ।

---

१. प्रशस्तपादटीकायाम्—अत्रेदं तात्पर्यम्—यः सर्वदा सर्वत्र नास्ति, तस्यैव कदाचित्कत्वेन कस्मिंश्चिदधिकरणे आधेयतानियामकः सम्बन्ध आवश्यकः । यथा घटादीनां भूतलादौ । समवायस्य तु नित्यतया एकत्वेनाङ्गीकाराच्च सर्वदा सर्वत्र स विद्यत एव । अतस्तस्य अवस्थानार्थं सम्बन्धान्तरेण न प्रयोजनम् । तथा चोक्तं न्यायकन्दलीटीकायाम्—'कृतको हि संयोगः, तस्य वृत्त्यात्मकस्यापि वृत्त्यन्तरमस्ति । कारणसमवायस्य कार्यलक्षणत्वात् । समवायस्य वृत्त्यन्तरं नास्ति । तस्मादस्य स्वात्मना स्वरूपेणैव वृत्तिः, न वृत्त्यन्तरेणेत्यर्थः' (न्या० कु० समवायनिरूपणे–पृ० ७८५) ।

### ६७. विशेषणविशेष्यत्वस्य सम्बन्धत्वप्रतिपादम्

अतो विशेष्यविशेषणभावः प्रतीतिमात्रशरीर इति न तत्र पुरुषेच्छां विना किञ्चित् नियामकम्। न हि घटवद्भूतलमित्यत्र भूतलस्य विशेष्यतया प्रतीतिवशाद् यथा प्रत्यक्षं 'भूतले घटः' इत्यत्रापि न वस्तुतारतम्यं किञ्चित् सम्पद्यते। केवलन्तु प्रमातुरिच्छावशादेव प्रतीतयोर्घटभूतलयोर्विशेष्यविशेषणभावः कल्पनीयः। अतो न विशेष्यविशेषणभावः प्रतीतिं विहाय किञ्चिदपेक्षते।

एवं च सति 'घटाभाववद् भूतलम्' इति प्रतीतिबलादभावस्य विशेषणत्वेन प्रतीतिर्वारयितुं न शक्यते। तस्मात् सिद्धोऽभावस्याधिकरणेन विशेष्यविशेषणभावः सम्बन्धः। दृश्यते च—कर्तृस्थया गमनादिक्रियया कर्मस्थया भेदनादिक्रियया च कालसंयोगसम्बन्धराहित्येऽपि विशेष्यविशेषणभावः प्रतीतिबलात् सम्बन्धतया सिध्यति। तस्माद् भावपदार्थेनैव कालस्यापि यदि विशेष्यविशेषणभावसम्बन्धः स्वीकरणीयः स्यात्, तदा अभावपक्षेऽपि तथाविधसम्बन्धकल्पने न दोषः।

तत्र चाभावप्रतियोगिनोर्युगपत् सहानवस्थायित्वात् प्रतियोगिविरोधित्वमभावस्य सिद्धम्। विरोधश्चात्र सहानवस्थायित्वमिति देशकालघटितसम्बन्ध एव विरोधिपदार्थतया ग्राह्यः। तथा च यस्मिन् काले यस्मिन् देशे यत्सम्बन्धावच्छिन्न-यद्धर्मावच्छिन्नप्रतियोगिसत्त्वम्, तस्मिन् काले तत्र तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावो न सम्भवेत्।

### ६८. अभावतत्प्रतियोगिनोः पारस्परिकविरोधोपपादनम्

अत एव प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिताकत्वमभावस्य नियामकमिति एकधर्मावच्छिन्नप्रतियोगिताकाभावसत्वेऽपि धर्मान्तरावच्छिन्नप्रतियोगिसत्त्वं न विरुद्धम्। एवं सम्बन्धोऽपि बोध्यः। अत एव संयोगेन घटत्वावच्छिन्नघटवति भूतले समवायेन घटत्वावच्छिन्नप्रतियोगिताकाभावः सुलभः।

एवं च सति देशकालनियन्त्रिततया सहानवस्थायित्वलक्षणविरोधस्य प्रतियोग्य-समानकालीनतत्तद्देशादिकमभावसम्बन्धतया स्थितम्।

अपि चाभावस्य कृतकत्वनित्यत्वे समवलम्ब्य यो वितर्कः सौगतैः प्रदर्शितः, सोऽपि प्रतिविधीयते। तथा हि अन्योन्याभावस्यात्यन्ताभावस्य च नित्यत्वम् वयमपि अनुजानीमः। यद्यपि ध्वंसाभावस्य जन्यत्वमस्मत्सिद्धान्तसिद्धम्, तथापि न केवलं जन्यत्वसाधर्म्येण भावकुक्षौ तदन्तर्भावः समीचीनः, यतः 'घटो ध्वस्तः' इति प्रतीतेः 'अयं भावः' इत्यद्याकारकप्रतीतिवैलक्षण्यं हि नितरामेवाभावस्य भाववैलक्षण्यं प्रतिपादयति।

न हि विषयवैलक्षण्यं विना ज्ञानवैलक्षण्यं निष्पद्यते, विषयालम्बनत्वाज्ज्ञानस्य। कारणजन्यत्वमेव हि कृतकत्वे नियामकम्। तथा हि घटादिभावानां कारणजन्यत्वेन यथा उत्पत्तिमत्त्वम्, तथैव ध्वंसाभावस्यापि तुल्यमेव। उत्पत्तिविनाशौ प्रति कारण-सापेक्षत्वस्य तुल्यतया यथा घटानाम् आद्यक्षणावच्छिन्नसम्बन्धात्मकसमुद्भवं प्रति सामग्रीसमवधानं नियामकम्, तथैव घटविनाशं प्रत्यपि विनाशसामग्रीसमवधानमपि तुल्यमेव नियामकं वाच्यम्। घटाद्युत्पत्तौ यथा कपालदण्डचक्रकुलालादयोऽपेक्ष्यन्ते, तथा घटविनाशं प्रत्यपि मुद्गराभिघातादिकं कारणमावश्यकम्।

**६९. जन्यत्वस्य भावत्वव्यापकत्वखण्डनम्**

यदि तु मुद्गरादिविनाशककारणासत्त्वदशायामपि घटादयो विनश्येयुः, तर्हि सहसैव घटादयः कथं न विनश्यन्ति ?

**७०. ध्वंसस्य सकारणकत्वोपपादनम्**

यच्चोक्तं मुद्गरादिप्रहारेण नाभावः समुत्पद्यते, अपि तु कपालादिकमेव जायत इति नास्ति किञ्चिद् विनाशकं कारणम्, तदपि न युक्तम्, यतस्तत्रापि घटसजातीय-वस्तुधारा तत्र नैव जायत इति क्षणभङ्गवादिना भवतापि स्वीकर्त्तव्यमेव। एवं च सति सजातीयधारासृष्टिजनकशक्तेरभावोऽवश्यं स्वीकर्त्तव्यः। अन्यथा मुद्गरादि-प्रहारेऽपि घटविजातीयकपालादिधारावद् घटसजातीयधारा उत्पद्यतां नाम।

तथा चोक्तं न्यायमञ्जर्याम्—

**तदुत्पादस्वभावे हि न किञ्चिन्मुद्गरादिना।**
**अतदुत्पादकत्वेऽपि न किञ्चिन्मुद्गरादिना॥**
**मुद्गरोपनिपाताच्च यद्युत्पन्नं क्षणान्तरम्।**
**घटक्षणस्य कं वृत्तं येन नाभाति पूर्ववत्**[1]॥ इति।

यदि तु सजातीयसृष्टिधाराशक्तेरभावो नाभ्युपेयेत, तर्हि मुद्गराद्यभिघात-स्थलेऽपि घटविजातीयकपालादिसृष्टिधारावद् घटसजातीयसृष्टिधारा वा कथं न स्यात् ? ननु सजातीयविजातीयधारासृष्टौ नैपुण्यं वर्त्तते। तथा च मुद्गराद्यभिघातस्थले न घटसजातीयसृष्टिधारानैपुण्यमिति विनाशकहेतोरनङ्गीकारो नैव दोषाय इति चेत् तत्रेदमुच्यते—तर्हि मुद्गरपातादिभ्यः प्रागपि विजातीयानां भवन्मते क्षणिकानां च कपालधाराणामुत्पादनं कथं न भवेत् ? तथा मुद्गराभिघाताद् अनन्तरमपि सजातीय-घटधारोत्पादनं कथं न भवेत् ? वस्तुतस्तु सर्वदैव तथाविधसजातीयविजातीययोर्घट-धाराकपालधारयोः समुत्पत्तिः प्रसज्येत। तथा चोक्तं जयन्तभट्टपादैः—मुद्गरादि-

---

१. न्यायमञ्जर्याम्—पृ० ५७।

योगात् पूर्वमपि कपालसन्ततिजननं तद्योगेऽपि वा सति घटसन्ततिजननमनियमेन दृश्यत इति । विजातीयक्षणोत्पादनस्वभावे च घटे मुद्गरादेर्वैयर्थ्यमेव स्यात् ।

अत्रेदं पृच्छ्यते—अभावमनङ्गीकुर्वतां सौगतानां नये पूर्वक्षणविनाशेन क्षणान्तरोत्पत्तिर्व्यवस्थिता । तथा च सति विनाशेऽपि यदि पूर्वक्षणस्य नाभावः स्यात्, तर्हि तदानीमपि तत्क्षणप्रतीतिः कथं न भवेत् ? न च तत्क्षणं न भवतीत्येवमात्रमुच्यते—न तु पूर्वक्षणस्याभाव इति तात्पर्यमित्यपि वाच्यम्[1], अभवनस्याभावात्मकत्वात् । तथा ह्यसौ न भवतीत्युक्ते तस्य अभाव एव प्रतीयते । तथा हि 'अयं स न भवति' इत्युक्ते प्रतीयते । इदन्तावच्छिन्नो जनः स्मर्यमाणतच्छब्दप्रतिपाद्यजनाद् भिन्न इत्येवं प्रतीयते ।

## ७१. उत्पादानन्तरास्थायिस्वभावस्वरूपक्षणिकत्वापेक्षया विनाशस्य वस्त्वन्तरत्वप्रतिपादनम्

एवं च सति तत्र तच्छब्दस्य स्मर्यमाणविषयोऽर्थो न इति तु ज्ञानस्याभावं प्रतिपादयति । एवं च सति तच्छब्दनकारयोरर्थभेदात् स न भवतीत्युक्ते अभावः प्रतीयत एव । तत् कथमुक्तमभावो नास्ति ?

वस्तुतस्तु मुद्गरादिपातानन्तरक्षणे घटक्षणो नास्तीति व्यवहारस्य स्वीकर्त्तव्यतया नास्तीति पदप्रतिपाद्यस्याभावस्यानङ्गीकारः कथमपि न युज्यते । एतदेवाभावास्तित्वे प्रमाणं यन्नास्तीति ज्ञानं सविषयकं, ज्ञानत्वात्, घटादिज्ञानवत् । तत्र च 'इदम् इदम् न भवति', 'इदम् इह नास्ति' इत्यादिप्रतीतिसिद्धस्याभावस्य अनङ्गीकारश्चेष्टासहस्रैरपि न सङ्गच्छत इत्येवं तात्पर्यम् ।

## ७२. अभावमनङ्गीकुर्वतां व्याघातदोषप्रदर्शनम्

इदं पुनरवधेयम्—ये तु अभावमनङ्गीकुर्वन्तः स्वाभिमतं प्रतिपादयितुमभावो नास्तीति उच्चैरुद्घोषयन्ति, तेषां मते नास्तीति ज्ञानस्य किन्तावद् अवलम्बनम् ? तत्र च नञो वाच्यार्थः कश्चित् स्वीकर्त्तव्य एव । अन्यथा नास्तीति प्रयोगानुपपत्तेः । तस्माद् अनिच्छतामपि तेषां स्वाभिप्रायप्रकटनवचोभिरेव अभावाख्यः कश्चित् स्वीकृतः स्यात् । तथा हि यदि अभावप्रतियोगिकाभाव एव अभावो नास्तीत्यस्यार्थः, तर्ह्यभावः स्वीकृत एव । अथ यदि नास्तीत्यस्य निषेधार्थकत्वं नाङ्गीक्रियते, तर्हि अभावस्यैव निषेधासम्भवात् सुतरामभावः स्वीकृतः स्यात् । अतोऽभावो नास्तीति

---

१. पादटीकायाम्—वस्त्वन्तरभावाच्च हेतुमानेव युज्यते ।
अभूत्वाभावतश्चापि यथैवान्यः क्षणो मतः ॥
( तत्त्वसङ्ग्रहे, कारिका — ३६९ )

वदता तादृशी एव रीतिः समाकलिता, या तु 'सेयमुभयतः पाशारज्जुः' इत्यभियुक्त-वचनलक्षणीया भवेत्। तस्मादलमभावमनङ्गीकर्त्तुर्मतमाश्रित्य कलहेन।

तथा चोक्तं जयन्तभट्टपादैः—

**स्वप्रकाशा च नास्तीति संवित्तिर्भवतां मते।**
**न निरालम्बना चेयमस्तीति प्रतिपत्तिवत्॥**
**विकल्पविषयाः शब्दा यथा शौद्धोदनेर्गृहे।**
**गीयन्ते भवता नैवमिति नञ्वाच्यमुच्यताम्॥**
**अलं च बहुनोक्तेन विमर्दोऽत्र न शोभते।**
**महात्मनां प्रमादोऽपि मर्षणीयो हि मादृशैः**[1] ॥ इति।

ननु वस्तूनां क्षणिकत्वेन स्वोत्पत्त्यव्यवहितोत्तरक्षणे भावोऽर्थक्रियां प्रति असमर्थः, तदानीं तस्य विनाशसम्भवात्। अतस्तत्रार्थक्रियां प्रति या अशक्तिः, सैव नास्तितापदार्थः। अतो नास्तितावचनेनार्थक्रियासाधनानर्हत्त्वमेव सूच्यते, न तु तेन अभावस्वीकारप्रसंगः। तथा च समर्थेतरस्वभावभाव एव नास्तिता। तस्माद् घटो नास्तीत्यादावभावो न प्रतीयते, अपि तु पूर्वक्षणोत्पन्नो घटः परक्षणे अर्थक्रियास्वभा-वेतरस्वभावः। अतः कालान्तरवर्त्ती यो घटः, स एवार्थक्रियासामर्थ्यविरहेण समर्थात् पूर्ववर्त्तिनो घटाद् भिद्यमानो लाघवाद् विनष्ट इति व्यवह्रियत इति चेत्, अत्रोच्यते—एवं च सति उत्पत्तिकालीनो घटोऽर्थक्रियासमर्थः, तदुत्तरकालीनश्च घटो नार्थक्रिया-प्रतिपादनसमर्थः सम्पद्यते। तथा च सति क्षणिकतां साधयितुं समुद्यतस्यैव घटस्य नित्यत्वं पर्यवसितमित्यहो 'उभयतः पाशारज्जुः' स्यादेव।

**७३. बौद्धनये अभावमनङ्गीकृत्यापि नास्तिताव्यवहारसाधनम्, नैयायिकैस्तत्खण्डनं च**

अत्रेदं तात्पर्यम्—उत्पादानन्तरास्थायिस्वभावत्वं क्षणिकत्वमिति बौद्धानामा-शयः। तथा चोक्तम्—

**उत्पादानन्तरास्थायि स्वरूपं यच्च वस्तुनः।**
**तदुच्यते क्षणः सोऽस्ति यस्य तत्क्षणिकं मतम्**[2] ॥

एवं च सति तदानीं भाव एवार्थक्रियासम्पादनानर्हत्वाद् नास्तिताशब्दव्यव-हारभाग् भवति। तथा च सति घटः—पूर्वक्षण इव तदनन्तरक्षणेऽपि भावस्वभावाद-प्रच्युत इति घटस्य नित्यत्वं वारयितुं न शक्यते। किञ्च—समर्थस्वभावस्य नास्तिता देशान्तरकालान्तरसम्बन्धिनी न वा ? आद्यः कल्पो यदीष्यते, तदापि तथाविधा देशान्तर-सम्बन्धिनी नास्तिताभावाद् अभिन्ना भिन्ना वा ? अभिन्ना चेत्, नास्तिता भावस्य

---

१. न्यायमञ्जर्याम्—प्रमाणप्रकरणे—पृ० ५८।

२. तत्त्वसङ्ग्रहे-३८८ कारिकायाम्।

घटस्य नित्यतामेव साधयति। भावाद् भेदे च नास्तितायास्तत्र भेदं प्रति किञ्चिद् नियामकं वाच्यम्। तथा च सति तस्य नियन्तुः प्रभावेण भावभिन्ना या नास्तिता, सा स्वात्मानमभावरूपतामेव प्रतिपादयति। अपि च, अर्थक्रियाया असामर्थ्यं तदानीं कथम्? अर्थक्रियाकारित्वमेव सत्त्वं भवन्मते इष्टम्। अतस्तदानीमर्थक्रियासामर्थ्यं सत्त्वमेव व्याहन्यात्।

तथा चोक्तं श्रीमदुदयनाचार्यैः 'अपि च देशान्तरकालान्तरानुषङ्गिनि अस्य नास्तिता यद्ययमेव, नूनमक्षरमिदमुक्तं यदयमेव देशान्तरकालान्तरानुषङ्गीति। यदि वा स्वदेशकालवत् कालान्तरदेशान्तरयोरपि नास्तितानुषङ्गे आस्तित्वप्रसङ्गः[1]' इति।

## ७४. जैनमते अभावप्रत्यक्षोपपादनम्

जैना अप्यनुपलब्धेः प्रामाणान्तरत्वं नेच्छन्ति। अपि तु प्रत्यक्षेणैवाभावज्ञानमिति तेषां मतम्। ते इत्थं विचारयन्ति—भूतले घटो नास्तीत्यादौ भूतलग्रहणसामग्रीसत्त्वेऽपि प्रतियोगिनो घटस्य तत्रानुपलब्धिरेव घटाभावं गमयतीति यदुक्तम्, तन्न सम्यक्, तथा हि तत्र भूतलं घटसंसृष्टं न प्रतीयते। तथा सति प्रतियोगिसंसृष्टभूतलोपलब्धेस्तत्र घटाभावज्ञानानुपपत्तिः। अथ यदि घटादिना प्रतियोगिना असंसृष्टस्य भूतलस्योपलब्धेः सुतरामेव, तत्र घटानुपलब्धिवशाद् घटाभावज्ञानमिति अनुपलब्धेः प्रामाण्यमिष्येत, तदपि न चारु। तथा हि यदि प्रतियोगिना घटादिनाऽसंसृष्टतया भूतलोपलब्धिः, तत्रैव घटाभावप्रतीतिसिद्धौ पुनस्तत्राभावाख्यप्रमाणकल्पनं व्यर्थम्। तथा चोक्तं प्रमेयकमलमार्त्तण्डे—'प्रतियोगिसंसृष्टवस्त्वन्तरस्याध्यक्षेण प्रतीतौ तत्र तदभावग्राहकत्वेनाभावप्रमाणप्रवृत्तिविरोधात्। प्रवृत्तौ वा न प्रामाण्यम्। प्रतियोगिनः सत्त्वेऽपि तत्प्रवृत्तेः, द्वितीयपक्षे त्वभावप्रमाणवैयर्थ्यम्। प्रत्यक्षेणैव प्रतियोगिनः अभावप्रतिपत्तेः[2]'।

नन्वभावाधिकरणत्वेनावस्थितस्य भूतलादेर्घटादिप्रतियोग्यसंसृष्टत्वं प्रत्यक्षेण नैव ग्राह्यम्, अपि तु भूतलादिनिष्ठघटानुपलब्धिवशादेव तदवगमः। अतः प्रत्यक्षेण घटाभावोपलब्धिर्न सिध्यतीति चेत्, तत्रोच्यते—सर्वत्रैव प्रतियोग्यसंसृष्टज्ञानपूर्वकमेव घटाद्यभावज्ञानमिति भवतां मतम्! अत एव प्रतियोग्यारोपं विना नाभावप्रतीतिः।

एवं च सति भूतलादेः प्रतियोग्यसंसृष्टत्वज्ञानं यद्यनुपलब्धिप्रमाणग्राह्यम्, तर्हि तत्रापि प्रतियोगिसंसृष्टत्वारोपपूर्वकमेव तथाविधं ज्ञानं सम्पाद्यम्। तथा च प्रतियोगिसंसृष्टत्वारोपकाले प्रत्यक्षेणासंसृष्टत्वज्ञानं स्यादेवेति। प्रत्यक्षेणैवासंसृष्टत्वज्ञानसम्भवात् कुतः पुनस्तत्राप्यनुपलब्धिप्रमाणावसरः? एवमनवस्थापि तत्र सम्भाव्येत,

---

१. आत्मतत्त्वविवेके - पृ० ८७।

२. प्रमेयकमलमार्त्तण्डे—व्याख्यायाम्–२।२, पृ० २०३।

यतस्तत्प्रतियोग्यसंसृष्टज्ञानं पुनरपि अभावप्रमाणसम्पाद्यमिति तत्रापि पुनस्तथैव रीतिरनुसर्त्तव्येत्यनवस्था। तथा चोक्तं प्रमेयकमलमार्त्तण्डे—'तर्हि तदपि अभाव-प्रमाणं प्रतियोग्यसंसृष्टवस्त्वन्तरग्रहणे सति प्रवर्त्तते। तदसंसृष्टतावगमश्च पुनरप्यभाव-प्रमाणसम्पाद्य इत्यनवस्था'[1]।

अपि च भूतलाद्युपलब्धावपि तत्र घटाद्यप्रतीतेरभावात्मकस्य भूतलादेः प्रतीतितो घटाभावसिद्धिरिति तत्र घटाभावेनेन्द्रियाद्यसंयोगात् सुतरां भावप्रतीत्यैवा-भावोपलब्धौ भावग्राहकप्रमाणातिरिक्तं प्रमाणमेकमभावग्राहकं स्वीकृतं प्रतिवादिभिः।

**७५ अभावेन भावग्रहणदर्शनादप्यभिलषितं यद् अभावस्य प्रमाणान्तरत्वं तदपि नेष्टम्**

तत्रेदमुच्यते—न केवलं भावादेवाभावप्रतीतिः; अपित्वभावादपि भावप्रतीतिः सम्भवति। यथा—आकाशात् पततां पत्राणामभावो नभसि यः समुपलब्धः, तद्वशात् तत्र समीरणभावः प्रतीतिसिद्धः। एवं च सति यथा भावग्रहणेनाभावप्रतीतिस्थले भावग्राहकप्रमाणातिरिक्तमभावग्राहकं प्रमाणम्, तथा ह्यत्राप्यभावाद् भावसिद्धिस्थले अभावग्राहकप्रमाणातिरिक्तं भावग्राहकं स्वतन्त्रं प्रमाणमेकमङ्गीकरणीयं स्यात्। तस्माद् भावग्रहणेनाभावसिद्धिस्थले स्वतन्त्रप्रमाणकल्पना नैव युक्तियुक्ता। तथा चोक्तं प्रमेयकमलमार्त्तण्डे—'भावात्मके यथा मेये' इत्याद्यपि अयुक्तम्, अभावादपि भावप्रतीतेः। यथा गगनतले पत्रादीनामधःपाताभावाद् वायोरिति'[2]।

ननु यो यथाविधिः, स तथाविधेनैव प्रमाणेन गृह्येत इति न्यायः। तस्मादभाव-ग्रहणार्थमभावात्मकमेव प्रमाणमेकमङ्गीकर्त्तव्यम्। भावग्रहणस्थले तु प्रसिद्धेनैव भावात्मकेन प्रमाणेन सिद्धिसम्भवाद् न तत्र प्रमाणान्तरं कल्पनीयमिति चेत्, नैतद् युक्तम्—तथा सति 'अयं धूमाभाववान् वह्न्यभाववत्त्वात्' इत्याद्यनुमानस्थले प्रमेयस्य धूमाभावस्याभावत्वेन तद्ग्राहकं भावात्मकं प्रमाणमप्यनुमानमभावात्मकतां भजताम्। तथा चानुमानत्वमेव व्याहन्येत। अपि च, प्रमाणेन ज्ञानं जन्येत, ज्ञानं सर्वत्र भावस्वरूप-मेव, तच्च भावविषयकमभावविषयकञ्चेति द्विविधम्। एवं च सति भवदभिमतनियम-वशादभावाख्येन प्रमाणेन भावात्मकं ज्ञानं नैव सिध्येत्। अतो निर्युक्तिकं वचः। एतावतैतदेव सिद्धं यदभावाख्यः प्रमेयो भावात्मकेन प्रत्यक्षेणैव ग्रहीतुं शक्यः, अभावग्रहणार्थमनुपलब्धिसंज्ञकं प्रमाणान्तरं नैव मृग्यमिति सर्वमवदातम्।

● ● ●

१. प्रमेयकमलमार्त्तण्डे—२।२-पृ० २०३।
२. तदेव—२।२-पृ० २०७।

## पञ्चमोऽध्यायः

**अभावस्यावान्तरविभागः—**

लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायेन अभावपरीक्षणं लक्षणप्रमाणाभ्यां प्रसाध्य प्रत्यक्षप्रमाणसिद्धस्याभावस्य स्वतन्त्रपदार्थत्वं प्रतिपादितम्। साम्प्रतं च तदवान्तरभेदा आलोच्यन्ते।

### १. अभावचातुर्विध्यकथनम्

वैशेषिकनये अभावश्चतुर्विधः—प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभावश्च[1]। न्यायमते चतुर्विधोऽभावः स्वीकृतः। यथा—

> अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः।
> प्रागभावस्तथा ध्वंसः संसर्गाभाव दृश्यते[2]॥

जयन्तभट्टपादास्त्वभावस्य द्वैविध्यं स्वीकृतवन्तः–प्रागभावः, प्रध्वंसाभावश्चेति। तथा हि 'स च द्विविधः–प्रागभावः, प्रध्वंसाभावश्चेति'।

### २. मतान्तरेणाभावस्य षड्विधत्वकथनम्

केचित् पुनः षड्विधोऽभाव इति स्वीकृतवन्तः। वैशेषिकाभिमताश्चतुर्विधा अभावाः, तथा अपेक्षाभावः, सामर्थ्याभावश्चेति साकल्येन षट्प्रकारोऽभावः।

तत्र अभावद्वैविध्यमङ्गीकुर्वतां जयन्तभट्टानां मतमेवादावालोच्यते। ते च महात्मानः 'प्रागुत्पत्तेरभावोपपत्तेश्च[3]' इति न्यायसूत्रमाश्रित्याभावद्वैविध्यमुक्तवन्त इति प्रतीयते। तत्सूत्रव्याख्यानावसरे उक्तं तत्रभवता भाष्यकृता—'अभावद्वैतं खलु भवति प्राक् चोत्पत्तेरविद्यमानता, उत्पन्नस्य चात्मनो हानादविद्यमानता, तत्रालक्षितेषु वासःसुप्रागुत्पत्तेरविद्यमानतालक्षणो लक्षणानामभावो नेतरः[4]' इति।

### ३. अभावद्वैविध्यमङ्गीकुर्वतां जयन्तभट्टानां मतम्

तत्र च वस्तूनामुत्पत्तेः प्राग् योऽभावः प्रतीयते, स एव प्रागभाव इति जयन्तभट्टपादानामाशयः। उक्तं च–'प्रागात्मलाभाद् नास्तित्वं प्रागभावोऽभिधीयते[5]' इति। उत्पन्नवस्तुविनाशानन्तरं प्रतीयमानस्तदभावः प्रध्वंसाभावः, तथा चोक्तं—'उत्पन्नस्यात्महानन्तु प्रध्वंस इति कथ्यते[6]'।

---

१. 'स च चतुर्विधः—प्रागभावः, प्रध्वंसाभावः, इतरेतराभावः, अत्यन्ताभावश्चेति' न्यायकन्दल्याम्, अनुमानेऽभावान्तर्भावप्रकरणे, पृ०—१५६।

२. न्यायदर्शने—सूत्रवार्त्तिकतात्पर्यटीकायाम्–२।२।१२।

३. न्या० सू० २।२।१२।
४. तदेव—न्यायभाष्ये–२।२।१२।

५. न्या० म० प्र० प्र० ५९।
६. तदेव।

एवमभावद्वयं निरूप्यात्यन्ताभावान्योन्याभावयोस्तत्रैवाभावद्वयान्तर्गतत्वं जयन्त-भट्टपादैः प्रतिपादितम्।

तत्र प्रागभाव एवात्यन्ताभावस्यान्तर्भावः, अन्योन्याभावस्यापि च तत्रैवान्त-र्भुक्तिर्भवेत्। तथा हि घटे न घटानुत्पत्तिर्वर्तते; अपि तु घटातिरिक्ते वस्तुनि तिष्ठतीति घटानुत्पादघटाभेदयोः समानदेशावस्थायित्वम्। एवं च सति घटानुत्पादरूपो यो घट-प्रागभावः, स एव यदा वस्त्वन्तरगतो भवेत्, तदैव घटान्योन्याभावाख्यां भजते।

**४. अन्योन्याभावस्य प्रागभावान्तर्गतत्वस्थापनम्**

अत्रायमाशयः—घटप्रागभावान्योन्याभावयोर्घटत्वावच्छिन्नप्रतियोगिताकत्वेन घटावृत्तित्वेन च तुल्यत्वं युक्तिसिद्धम्। यद्यपि घटाधिकरणे घटभेदस्यानुभविकतया तदानीं तत्र घटप्रागभावस्यासत्त्वात् प्रागभावव्यतिरिक्तत्वं घटभेदस्यायाति, तथापि यत्र घटो न वर्त्तते, तत्र घटातिरिक्तवस्त्वन्तरगतघटप्रागभावो घटान्योन्याभावान्नाति-रिच्यत एव। उक्तं च जयन्तभट्टपादैः—

**न प्रागभावादन्ये तु भिद्यन्ते परमार्थतः।**
**स हि वस्त्वन्तरोपाधिरन्योन्याभाव उच्यते[1]॥**

**५. प्रागभावस्य प्रतियोग्युत्पत्तिविनाश्यत्वखण्डनम्**

'पटो न घटः' इत्यादिप्रतीतौ पटे विद्यमानो घटभेदो घटप्रागभावान्नातिरिच्यत इत्येवमर्थः, यतः पटे घटानुत्पत्तिश्चिरन्तनी एव। अतस्तत्र स्थितो घटभेदोऽपि चिरन्तनो भवितुमर्हति। घटविद्यमानदशायां घटवति भूतलादौ घटो न इति प्रतीतेरपि भूतलनिष्ठघटानुत्पादरूपघटप्रागभावापेक्षया नातिरिक्तत्वम्। तेन च घटप्रागभावस्य प्रतियोगिनाश्यत्वं नाङ्गीकृतम्। इह कपाले 'घटो भविष्यति' इत्यादिप्रतीत्या कपाले प्रतीयमानो यो घटप्रागभावः, स तु कपालत्वावच्छिन्नाधिकरणतानिरूपितस्वरूप-सम्बन्धावच्छिन्नाधेयतावान् अभाव इति प्रतीतिसिद्धः। कार्यकारणयोरत्यन्तभेदवादि-न्यायवैशेषिकनये घटोत्पत्तौ सत्यां कपालत्वाच्छिन्नाधिकरणता तत्र नैव सिध्यति। तदानीं घटत्वावच्छिन्नाधिकरणताया एव क्लृप्तत्वात्। तस्माद् यावत् कपालत्वा-वच्छिन्नाधिकरणता प्रतीतिसिद्धा, तावद् घटप्रागभावोऽपि तत्र प्रतीतिसिद्ध एव। अतो घटप्रागभावो घटोत्पादेन विनष्टो न भवेत्। कपालत्वावच्छिन्नाधिकरणतामन्तरेण तन्निरूपिताधेयतावत्त्वेन प्रतीतेरसम्भवात् तदानीं घटप्रागभावो नैव तत्र प्रतीयते। घटत्वावच्छिन्नप्रतियोगिताकत्वस्य तादात्म्यसम्बन्धावच्छिन्नत्वं घटान्योन्याभावे यदङ्गीकृतम्, तत्तु घटप्रागभावसाधारणस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वेनैवो-

१. न्यायमञ्जर्याम्—प्र० प्र० पृ० ५९।

पपत्तौ प्रागभावान्योन्याभावयोस्तुल्यत्वमिह जयन्तभट्टाभिमतं व्यवस्थापयितुं शक्यते ।

### ६. भेदो न अन्योन्याभावः

वस्तुतस्तु अन्योन्याभावस्य भेदस्वरूपतां नेच्छन्तीत्येवं प्रतीयते । भेदस्तु वस्तुनिष्ठस्तदितरव्यावर्त्तको धर्म इति कन्दलीकृद्भिरपि स्वीकृतम् । तथा चोक्तं कन्दलीटीकायाम्—'भिन्नयोरितरेतराभावः, न तु इतरेतराभावो भेदः । यदेतद् वस्तुनः प्रात्यात्मिकस्वरूपम्, स एव भेदः[१]' इति । तस्माद् भेदस्तदितरव्यावर्त्तकधर्मतया स्थितः, न च सः अभावाख्यः । यस्तु पुनरितरेतराभावः, स तु प्रागभावेनैवोपपद्यते ।

### ७. अत्यन्ताभावस्य प्रागभावान्तर्गतत्वव्यवस्थापनम्

एवमत्यन्ताभावोऽपि प्रागभावान्तर्गत एव । तथा चोक्तं जयन्तभट्टपादैः—'स एवावधिशून्यत्वाद् अत्यन्ताभावतां गतः[२]' इति ।

अत्रायमाशयः—'घटो नास्ति' इत्यादिप्रतीत्या प्रतीयमानो घटाभावः केनचिद् देशेन कालेन वा न परिच्छिद्यते । सर्वदैव 'घटो नास्ति' इत्यादिप्रतीतेरानुभविकत्वात् । संयोगेन 'घटवति भूतले' यद्यपि संयोगेन 'घटो नास्ति' इत्यादिप्रतीतिर्न भवेत्, तथापि सम्बन्धान्तरेण 'घटो नास्ति' इत्यादिप्रतीतिसिद्धस्य घटात्यन्ताभावस्य स्वरूपतस्तत्राप्यवस्थानं वारयितुं नैव शक्यते । सम्बन्धविशेषणाभावीयप्रतियोगिता यद्यपि अवच्छिन्ना, तथापि प्रतियोगितासम्बन्धेन घटविशिष्टस्याभावस्य स्वरूपं नैव केनचित् प्रतियोगितावच्छेदकेन सम्बन्धेन समाविष्टम् । अभावस्य भावभिन्नत्वस्वरूपत्वात् तत्र च प्रतियोगितावच्छेदकसम्बन्धादीनां नान्तर्गतत्वम् । अतो घटात्यन्ताभावो देशेन कालेन वा नैव परिच्छिद्यत इति अवधिशून्यत्वं घटो नास्तीति प्रतीतिसिद्धस्याभावस्य । एवं घटानुत्पादलक्षणो घटप्रागभावोऽप्यवधिशून्यत्वाद् घटात्यन्ताभावतुल्यतया प्रागभावात् सोऽपि नातिरिच्यते ।

### ८. संयोगेन 'घटो नास्ति' इत्यस्य घटसंयोगाभावपरत्वेन प्रागभावेन सहाविरोधः

ननु संयोगेन 'घटवति भूतले' संयोगेन 'घटो नास्ति' इति प्रतीतिर्न भवेत् । तथा समवायसम्बन्धावच्छिन्नघटाधिकरणे समवायेन 'घटो नास्ति' इति प्रतीतिर्न सिध्यति । तस्मात् तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावबुद्धिं प्रति तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताकज्ञानत्वेन विरोधित्वं स्वीकर्त्तव्यम् ।

---

१. न्या० म० द्रव्यप्रकरणे-जलप्रकरणे, पृ० ९०–९२ ।

२. न्या० म० प्रमाणप्रकरणे पृ०–५९ ।

अत्यन्ताभावस्य प्रागभावानतिरिक्तत्वमते तु नैवं विरोधः सिध्यति। घटानुत्पादस्य घटप्रागभावत्वेनाभिमतस्य घटोत्पत्त्यनधिकरणमात्रवृत्तितया संयोगसम्बन्धेन घटवत्यपि भूतले घटानुत्पादलक्षणप्रागभावस्य तत्कालावच्छेदेनैव सत्त्वात्। अतः प्रागभावादत्यन्ताभावोऽतिरिक्त एव स्वीकार्य इति चेत्, तत्रोच्यते—प्रागभावात्यन्ताभावयोरनतिरिक्तत्ववादिभिः—संयोगेन 'घटवति भूतले' सामान्यतः 'घटो नास्ति' इति प्रतीतेर्दुर्वारत्वात् तत्र सम्बन्धविशेषावच्छिन्नप्रतियोगिताकबुद्धि प्रत्येव तथाविधसम्बन्धावच्छिन्नघटप्रकारताकज्ञानस्य विरोधित्वं भवद्भिरङ्गीकृतम्। तत्र तु संयुक्तघटाधिकरणे घटसंयोगाभावस्यैव तदानीमसत्त्वात्, तत्र घटसंयोगस्य प्रागभावेनैवोपपत्तौ न पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावव्यवस्थायां कापि क्षतिः।

तथा हि यत्र घटसंयोगो वर्त्तते, तत्र तत्संयोगप्रागभावो नास्तीति सुतरां तत्र संयोगेन 'घटो नास्ति' इति व्यवहारोऽपि न भवेत्। एवं यत्र समवायेन घटो वर्त्तते, तत्रैव घटसमवेतत्वाभाव एव तदानीं नास्तीत्यर्थो ग्राह्यः। तथा च तत्रापि घटसमवेतत्वप्रागभावासत्त्वान्न काप्यनुपपत्तिः।

## ९. घटे घटात्यन्ताभाववद् घटप्रागभावव्यवस्थापनम्

नन्वेवमपि घटे घटात्यन्ताभावस्यानुभविकतया तत्र च घटानुत्पादलक्षणस्य प्रागभावस्यासत्त्वात् कथं प्रागभावात्यन्ताभावयोस्तुल्यत्वम्? तथा हि 'घट उत्पद्यते' इति सर्वजनीनव्यवहाराद् घटोत्पत्तेराश्रयो घट एव। अतो घटानुत्पादलक्षणो घटप्रागभावो घटे नास्ति। घटात्यन्ताभावश्च घटे अस्त्येव। तत् कथमुभयोस्तुल्यत्वमिति चेत्, तत्रोच्यते—उत्पन्नाद् घटाद् घटान्तरं नैवोत्पद्यत इति घटानुत्पादलक्षणोऽभावो घटेऽपि स्थातुमर्हति, उत्पत्स्यमान एव घट उत्पद्यत इति क्रियाश्रयतया व्यवह्रियते, न तूत्पन्नोपि घटः पुनरुत्पद्यत इति व्यवहारः परीक्षकाणाम्। तस्मादुत्पन्ने घटे घटानुत्पादः स्थातुमर्हति। अतस्तत्र घटानुत्पादलक्षणस्य प्रागभावस्य सत्त्वेन घटात्यन्ताभावप्रतीतौ न कापि बाधा। एवमभावद्वैविध्यं जरन्नैयायिकानां जयन्तभट्टपादादीनामभिमतमिति प्रतीयते।

## १०. अभावानां षड्विधत्ववादिमताख्यानम्

जयन्तभट्टपादैस्तु षड्विधोऽभावः कैश्चित् स्वीकृत इत्युक्तम्। तत्र च प्रागभावः, ध्वंसाभावः, तथाऽन्योन्याभावः, अत्यन्ताभावश्चेति चत्वारः प्रसिद्धा अभावाः। अन्ये च सामर्थ्याभावः, अपेक्षाभावश्चेत्यभावः षड्विध इत्युक्तवन्तः। तथा हि—नित्यप्रागभाव एव देशविशेषाद्यपेक्ष्यापेक्षाभाव इत्युच्यते। तथा हि भविष्यत्पुत्रके पितरि पुत्रोत्पत्तेः प्राक् यः पितृत्वप्रागभावः, स एव कालविशेषापेक्षया पितृत्वप्रागभाव इत्युच्यते। अयमेव च अपेक्षाभावः पितृत्वस्य पुत्राद्यपेक्षया सुतरामेव पुत्रोत्पत्तेः प्रागवस्थितस्य पितृत्वाऽभावस्य सापेक्षप्रतियोगिकत्वेनैवापेक्षाभावत्वम्।

यत्र च पूर्वस्थितस्य सामर्थ्यस्य विनाशः, स एव च ध्वंसाभावः सामर्थ्याभाव इति विशिष्यते। यथा रोगादिवशाद् नष्टचक्षुषः पुरुषस्य दृष्टिशक्तेरभावः। एवमभूतस्य अभावस्यापि सामर्थ्यप्रतियोगिकत्वेन सामर्थ्याभावत्वम्।

## ११. द्वैविध्यखण्डनद्वारेण अभावानां चातुर्विध्यव्यवस्थापनम्

अभावद्वैविध्यमङ्गीकुर्वतां जरन्नैयायिकानां मतं तु वैशेषिकादिभिर्नव्यैः नानुमन्यते, यतः सर्वस्यैव अभावस्य किञ्चित्सम्बन्धावच्छिन्नकिञ्चिद्धर्मावच्छिन्नप्रतियोगिताकत्वनियमात् तथाविधप्रतियोगिताकत्वभेदेन अभावस्यापि वैलक्षण्यं सुतरां परिनिष्पद्यते। तथा च 'घटः पटो न' इत्यत्र तादात्म्यसम्बन्धावच्छिन्नपटत्वावच्छिन्नप्रतियोगिताकत्वेनैव अभावप्रतीत्या अन्योन्याभावप्रतीतेर्गतार्थत्वम्। घटोत्पत्त्यनन्तरं घटप्रागभावस्य स्वीकारे न किञ्चित् प्रमाणमस्ति, यतः स्वसमवायिन्येव स्वोत्पत्तेः पूर्वं स्वप्रागभावस्तिष्ठतीति आनुभविकम्।

यदि तु कार्यानुत्पादस्य वस्त्वन्तरनिष्ठतया तत्रापि तत्कार्यप्रागभाव इष्येत, तर्हि पुत्रानुत्पादस्य वन्ध्यायामपि सत्त्वात् तत्रापि पुत्रप्रागभावः प्रतीयताम्। न चेष्टापत्तिः, अनुभवविरोधात्।

## १२. प्रागभावस्य नित्यत्वनिराकरणम्

अपि च घटोत्पत्त्यनन्तरक्षणे पुनर्घटोत्पत्तिवारणार्थं घटोत्पत्तिं प्रति घटप्रागभावस्य कारणत्वं स्वीकार्यम्। एवं च सति घटसमवायिनि कपाले यावद् घटो नोत्पन्नः तावदेव घटप्रागभावस्तिष्ठन्नपि घटोत्पत्त्या विनश्यतीति अङ्गीकर्त्तव्यम्। एवं च सति घटप्रागभावस्य नित्यत्वं कथङ्कारं कल्पयितुं शक्यते? अतः प्रागभावस्य कार्योत्पत्तिविनाश्यतया विनाशित्वादेवात्यन्ताभावान्योन्याभावयोस्तद्वैलक्षण्यमङ्गीकर्त्तव्यम्।

किं बहुना—यदि प्रागभावस्यात्यन्ताभावान्योन्याभावात्मकत्वम्, तर्हि इह 'कपाले घटो भविष्यति' इति प्रतीतिर्यावद् वर्त्तते, तावत्पर्यन्तमेव पटेऽपि घटान्योन्याभावस्तिष्ठतु। घटोत्पत्त्या घटप्रागभावस्य विनाशे तु तदात्मकघटान्योन्याभावस्यापि सुतरां विनाशाद् घटोत्पत्त्यनन्तरं घटप्रागभावासत्त्वेन घटान्योन्याभावस्याप्यसत्त्वात् 'पटः घटो न' इति पटानुयोगिकघटप्रतियोगिकान्योन्याभावप्रतीतिरपि व्याहन्येत, तथाविधाभावस्य तदानीमसत्त्वात्।

## १३. अनुभवसाक्षिकतया प्रागभावान्योन्याभावयोर्वैलक्षण्यम्

वस्तुतस्तु नैवम्। न हि लौकिकानां परीक्षकाणां च समर्थप्रवृत्तिजनिकां प्रतीतिमुपेक्ष्य शपथेनापि किञ्चिद् व्यवस्थापयितुं शक्यम्। तस्माद् लोकप्रतीतिं यथायथमनुसन्दधद्भिः सर्वैरेव 'घटो भविष्यति' तथा 'घटो न' इति प्रतीत्योर्वैलक्षण्यं

सम्भावनीयम्। अपि च, घटभेदाभावस्य केवलं घट एव सत्त्वाद् घटभेदाभावो घटत्वं च समनियतमिति अन्योन्याभावाभावस्य प्रतियोगितावच्छेदकत्वस्वरूपत्वं नैयायिकैरिष्टम्।

एवमत्यन्ताभावाभावस्यापि प्रतियोगिस्वरूपत्वं युक्तिबलात् सिद्धम्। यदि तु घटप्रागभावघटात्यन्ताभावघटान्योन्याभावानामनतिरिक्तत्वमिष्येत, तर्हि कपाले घटप्रागभावस्य सत्त्वेऽपि पटादौ पूर्वोक्तयुक्त्या घटप्रागभावाभावसत्त्वात् तत्र सुतरामेव घटात्यन्ताभावघटभेदयोः प्रागभावानतिरिक्तयोरभावोऽपि सिध्यत्येवेति पटस्य घटरूपत्वं तथा पटे घटत्वं च प्रसज्येत। तथा च घटत्ववान् अयं घट इति बुद्धेः पटविषयकत्वेऽपि प्रमाणत्वं दुर्निवारं स्यात्।

एवं ध्वंसाभावपक्षेऽपि समान एव पन्थाः। तथा हि घटध्वंसो घटविनाशात् पूर्वं केनाप्यप्रतीयमानत्वाद् न विद्यत एव। अपि तु घटविद्यमानदशायामेव पटे घटभेदो भूतलादौ च घटात्यन्ताभाव आ च पांशुलचरणं हालिकम्, आ च प्रमातृपुरुषं प्रतीयते।

## १४. ध्वंसाभावस्यापि अभावान्तरापेक्षया वैलक्षण्यव्यवस्थापनम्

तस्माद् लोकसिद्धां प्रतीतिमास्थाय सर्वथैव ध्वंसप्रागभावातिरिक्ततयाऽत्यन्ताभावान्योन्याभावयोः प्रतिपत्तिः स्वीकार्या। अत एव न्यायभाष्यकृतापि 'प्रागुत्पत्तेः अभावोपपत्तेश्च'[1] इति सूत्रव्याख्यानावसरे यदभावद्वैतमुक्तम्, तत्रापि संसर्गाभावतादात्म्याभावश्चेति द्वैविध्यं बोद्धव्यम्। तथा चोक्तं तत्र वाचस्पतिमिश्रैः तात्पर्यटीकायाम्—'परमार्थतस्तु प्रथममभावे द्वैतम्, तादात्म्याभावः संसर्गाभावश्चेति। संसर्गाभावोऽपि प्राक्प्रध्वंसात्यन्ताभावभेदेन त्रिविध इति चतस्रो विधा अभावस्येति'[2] इति। तस्माद् युक्तिसिद्धत्वान्नैयायिकप्रवरैः स्वीकृतत्वादभावानां चातुर्विध्यमेव सिद्धम्।

## १५. अन्योन्याभावलक्षणम्

तत्र अभावः प्रथमतो द्विधा—अन्योन्याभावः, संसर्गाभावश्चेति। तत्र च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वमिति अन्योन्याभावलक्षणम्। तत्र तादात्म्यम्—'तद्गतोऽसाधरणो धर्मः' इति रामरुद्रीटीकायामुक्तम्[3]।

तत्रापि तादात्म्यत्वेन तादात्म्यावच्छिन्नत्वं प्रतियोगितायां विवक्षितम्। तेन संयोगावच्छिन्नप्रतियोगिताके संयोग्यत्यन्ताभावे नातिव्याप्तिः। तथा हि संयोगि-

---

१. न्या० सू० २।२।१२। २. तात्पर्यटीकायाम्–न्या० सू० २।२।१२।

३. भाषापरिच्छेदे—रामरुद्रीटीकायाम्, अभावप्रकरणे-पृ० ९५।

तादात्म्यस्य संयोगरूपतया संयोगसम्बन्धावच्छिन्नप्रतियोगिताकः संयोग्यत्यन्ताभावोऽपि संयोगितादात्म्यावच्छिन्नतया तस्यापि तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वसत्त्वात् तत्रातिव्याप्तिः सम्भाव्येत, तादात्म्यत्वेनेत्युक्तौ तु तादात्म्यत्वावच्छिन्नतादात्म्यनिष्ठा या संसर्गविधयाऽवच्छेदकता तन्निरूपकप्रतियोगिताकत्वस्यैव लाभात् तत्र नातिव्याप्तिः, यतस्तत्र संयोग्यत्यन्ताभावीयसंयोगनिष्ठप्रतियोगितावच्छेदकतायाः संयोगत्वेनैव लाभात् तत्तादात्म्यत्वमपि संयोगत्वमेवेति तादृशावच्छेदकतायास्तादात्म्यत्वावच्छिन्नतादात्म्यनिष्ठसंसर्गविच्छेदकत्वासत्त्वाद् नातिव्याप्तिः ।

न च संयोगितादात्म्यस्य संयोगरूपत्वेन तत्तादात्म्यत्वमपि संयोगत्वमेवेति तत्रापि तादात्म्यत्वावच्छिन्नतादात्म्यनिष्ठावच्छेदकत्वसम्भव इति वाच्यम्, संसर्गतावच्छेदकं तादात्म्यत्वं न संयोगत्वादिरूपम् । अपि तु संयोग्यादिवृत्त्यसाधारणधर्मवत्त्वमेव तथाविधं विवक्षितम् । अतोऽत्यन्ताभावीयप्रतियोगितायां संयोगस्य संयोगकत्वेनैवावच्छेदकत्वात् संयोग्यादिवृत्त्यसाधारणधर्मत्वेनावच्छेदकत्वविरहाद् न तत्रातिव्याप्तिः । तत्र भेदप्रतियोगितावच्छेदकसंसर्गस्यैवासाधारणधर्मत्वेन प्रतीत्यभ्युपगमात्, अन्यथाऽत्यन्ताभावान्योन्याभावयोर्वैलक्षण्यासम्भवात् ।

## १६. संसर्गाभावनिरूपणम्

संसर्गाभाव इत्यत्र संसर्गपदस्य कोऽर्थः ? न च तादात्म्यभिन्नसम्बन्धपरमेव संसर्गपदमिति वाच्यम्, ध्वंसप्रागभावयोः प्रतियोगित्वस्य सम्बन्धानवच्छिन्नत्ववादिनये तयोरसंग्रहापत्तेः । अतः संसर्गपदमत्र तादात्म्यानवच्छिन्नप्रतियोगितारूपसंसर्गपरम् । अत एवान्योन्यपदमपि तादात्म्यावच्छिन्नप्रतियोगितापरमिति केचित् । यद् वा संसर्गपदं संसर्गपूर्वकपरम्, अन्योन्यपदमपि अन्योन्यपूर्वकपरम् । एवमभावपदमपि अभावपरम् । तथा च संसर्गान्योन्यौ तथा तादृशौ अभावौ च इति व्युत्पत्त्या संसर्गान्योन्यपदपूर्वकाभावपदवाच्यौ अभावावेव संसर्गाभावान्योन्याभावाविति तात्पर्यम् ।

## १७. संसर्गाभावत्रैविध्यं तत्स्वरूपादिनिरूपणं च

संसर्गाभावस्तु त्रिविधः—प्रागभावः, ध्वंसाभावः, अत्यन्ताभावश्चेति । तत्र विनाश्यभावत्वं प्रागभावत्वमिति प्रागभावलक्षणम्, विनाशीति पदप्रयोगाद् ध्वंसादौ नातिव्याप्तिः । वस्तूत्पत्तेः पूर्वमनादिकालादारभ्य तद्वस्तुसमवायिकारणे यस्तद्वस्तुप्रतियोगिताकाभावस्तिष्ठति । इह 'कपाले घटो भविष्यति' इत्याद्याकारेण प्रतीयमानः, स एव प्रागभावः । उत्पन्ने च वस्तुनि तथाविधस्याभावस्याप्रतीयमानत्वाद् वस्तूत्पत्तिरेव प्रागभावविनाशिनी । अतो विनाशी प्रागभाव इति ।

ननु प्रागभावसत्त्वे किं मानमिति चेत्, तत्र केचिदाहुः—घटोत्पत्त्यनन्तरक्षणे घटोत्पादकसामग्रीसत्त्वेन पुनरपि घटोत्पत्तिनिरासार्थं प्रागभावस्य स्वप्रतियोग्युत्पत्ति

प्रति तत्प्रागभावत्वेन हेतुत्वाद् घटोत्पत्त्या च घटप्रागभावस्य विनाशात् कारणाभावा-देव न तत्र पुनर्घटोत्पत्तिः प्रसज्येत ।

**१८. प्रागभावप्रमाणादिविमर्शः**

तत्रान्ये प्रत्यवतिष्ठन्ते लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति न्यायात् प्रागभावो यदि प्रमाणसिद्धः स्यात्, तदैव तल्लक्षणमपि निर्वाच्यं भवेत् । किन्तु प्रागभावे प्रमाणमेव नास्ति । तथा हि—'जातो घटः' इत्यादिप्रतीतिवत् 'उत्पन्नो घटध्वंसः' इति प्रत्यक्ष-प्रतीतिबलान्नाशोऽत्यन्ताभावादिभ्योऽतिरिच्यत एव, न पुनः कस्यापि 'इह कपाले घटो भविष्यति' इत्यादिप्रतीतौ प्रागभाव एव विषयः । तत्र वर्त्तमानघटप्रागभावस्य प्रतियोगि-त्वमेव भविष्यत्वरूपत्वम्, जन्यस्य भविष्यत्वरूपेण निर्वक्तुमशक्यत्वादिति वाच्यम्, वर्त्तमानकालध्वंसाधिकरणकालोत्पत्तिकत्वस्यैव तत्र भविष्यत्वरूपेण प्रतीयमानत्वात् । तत्र चाद्यक्षणसम्बन्ध एवोत्पत्तिः । आद्यत्वं च क्षणे तदधिकरणक्षणध्वंसानधिकरण-त्वरूपं बोध्यम् । अतः प्रागभावस्वीकारे न काऽपि युक्तिः । यच्च पुनरुक्तं घटोत्पत्त्यनन्त-रक्षणे पुनः घटोत्पत्तिवारणार्थं प्रागभावस्य हेतुत्वं वाच्यमिति, तदपि न साधु, यतः सामान्यतो जन्यद्रव्यत्वावच्छिन्नं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्याभावः कारणमिति कार्यकारणभावः कल्पनीयः । तत्र रूपध्वंसोत्पत्तिं प्रति समवायसम्बन्धेन जन्यद्रव्यसामान्याऽभावस्यासत्वाद् व्यभिचारवारणार्थं कार्यतावच्छेदककोटौ द्रव्य-पदमुपात्तम् । एवं कपाले जन्यभावस्य पाकजरूपस्योत्पन्नत्वात् तत्र द्रव्यसामान्याभाव-स्यासत्त्वाद् व्यभिचारः स्यात् । अतः कारणकुक्षौ द्रव्यपदम् ।

**१९. तदुत्पत्तिं प्रति तत्प्रागभावः कारणं न वेति विचारः**

अथ जन्यद्रव्यत्वावच्छिन्नं प्रति जन्यद्रव्योत्पत्तिकालीनोत्पत्तिकध्वंसाभावस्य हेतुत्वेऽपि इष्टसिद्धौ, तत्र जन्यद्रव्यत्वावच्छिन्नं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगि-ताकद्रव्याभावस्य कारणत्वमिति विनिगमनाविरहेण द्विविधयोः कार्यकारणभावयोः स्वीकरणमावश्यकम्, तदपेक्षया लाघवाद् जन्यद्रव्यत्वावच्छिन्नं प्रति प्रागभावस्यैव कारणत्वमिति एक एव कार्यकारणभावः, तस्मात् प्रागभावपक्षे लाघवमित्यपि न वाच्यम्, प्रागभावकल्पनपक्षेऽपि तत्कालोत्पत्तिकानन्तपदार्थप्रतियोगिकानामनन्तानां प्रागभावानां विनिगमनाविरहेण कारणत्वकल्पनं वारयितुं न शक्यत इति तत्र प्राग-भावरूपधर्मिकल्पनागौरवमव्याहतम् । तस्मात् प्रागभावकल्पनपक्षेऽपि न कोऽपि लाभः ।

अत्रेदं तत्त्वम्—प्रागभावानङ्गीकारे नवीनैर्जन्यद्रव्यत्वावच्छिन्नं प्रति समवाय-सम्बन्धावच्छिन्नप्रतियोगिताकद्रव्याभावस्य कारणत्वं कल्प्यते[1] । प्रागभाववादिना

---

१. ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इत्यभ्युपगन्तृभिः प्राचीनैः जन्यद्रव्यत्वावच्छिन्नं प्रति जन्यद्रव्योत्पत्तिकालीनोत्पत्तिकध्वंसाभावानां कारणत्वं कल्प्यते ।

त्वेतत् सर्वमुपेक्ष्य जन्यद्रव्यत्वावच्छिन्नं प्रति तत्प्रागभावस्यैव हेतुत्वमङ्गीक्रियते। तत्र च समवायेन द्रव्यत्वं प्रतिबन्धकमिति स्वीक्रियते। प्रागभाववादिना तत्प्रतिबन्धकतानभ्युपगमेऽपि प्रसिद्धस्य जन्यद्रव्याभावस्यैव कारणत्वं वक्तुमुचितम्। न त्वसिद्धस्य प्रागभावस्य कारणत्वं कल्पनीयम्।

एवं च सति यत्र कपालद्वयसंयोगाद् घटोत्पत्तिः, तत्र तदानीं घटोत्पत्तिदशायां प्रत्येककपालेऽपि घटोत्पत्तिरङ्गीकर्त्तव्या। अन्यथा तत्र कपालिकायां समवायेन घटाभावप्रत्यक्षप्रसङ्गात्। अतस्तत्तद्द्रव्यानारम्भकद्रव्याभावस्यैव कारणत्वं वाच्यम्। तथा च तत्तद्ध्वंसाभावानामपि विनिगमनाविरहेण कारणत्वापत्तिः संगच्छत एव। एवं जन्यद्रव्यं प्रति द्रव्योत्पत्तिकालीनोत्पत्तिकध्वंसाभावानां हेतुत्वे तत्तद्घटनाशानन्तरं तदारम्भककपालाभ्यां घटान्तरोत्पत्तिरपि न स्यात्, तादृशध्वंसाभावरूपकारणाभवात्। अत एव प्रागभावकल्पनेऽपि विनिगमनाविरहरूपदूषणान्तरं समुचितमेवेति पूर्वपक्षः।

अत्रेदमुच्यते—जन्यद्रव्योत्पत्तिं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्याभावत्वस्य कारणत्वकल्पनापेक्षया तादृशध्वंसाभावस्य कारणत्वकल्पने गौरवम्, यतस्तत्तद्द्रव्यं प्रति तदुत्पत्तिकालोत्पत्तिकध्वंसव्यक्तीनां तत्तद्व्यक्तित्वेनैव कारणता वाच्या। अतो ध्वंसाभावस्य कारणत्वकल्पने प्रागभावकारणकल्पनापेक्षया न विनिगमनाविरहः।

## २०. उत्पत्तिं प्रति प्रागभावस्य कारणत्वकल्पने कल्पनान्तरापेक्षया लाघवात् प्रागभावसिद्धिः

वस्तुतस्तु समवायेन जन्यद्रव्योत्पत्तिं प्रति समवायेन द्रव्याभावस्य कारणत्वमुभयवादिसम्मततया जन्यद्रव्यत्वावच्छिन्नं प्रति तथाविधद्रव्याभावस्य जनकत्वेनाङ्गीकरणमावश्यकम्। तथा च क्लृप्तेन द्रव्याभावेनैव कारणत्वं वाच्यम्, न त्वक्लृप्तेन प्रागभावत्वेन कारणत्वकल्पनं युक्तमित्येवं पूर्वपक्षिणामाशयः। अपि तु जन्यद्रव्यं प्रति द्रव्योत्पत्तिकालिकोत्पत्तिकध्वंसाभावस्य हेतुत्वे तत्तद्घटनाशानन्तरं तदारम्भककपालाभ्यां घटान्तरोत्पत्तिरपि न सम्भवेत्, तादृशध्वंसाभावरूपकारणाभावात्। अतो नानया युक्त्या प्रागभावः साधयितुं शक्यते, किन्तु तत्र युक्त्यन्तरमेवाश्रयणीयम्। तथा हि—यैस्तन्तुभिर्यः पट आरभ्यते, तेष्वेव तन्तुषु पट उत्पद्यते, न तु स्वानधिकरणेषु तन्तुषु। तत्रेत्थं कार्यकारणभावः कल्पनीयः—तत्तत्पटोत्पत्तिं प्रति पटारम्भकतत्तन्तुसंयोगेन हेतुत्वम्। तथा च पटानारम्भकतन्तुषु न पटोत्पत्तिप्रसंगः।

एवं च सति पटारम्भकतन्तूनां बहुत्वात् तत्तन्तुसंयोगानां कारणत्वकल्पने गौरवं दुष्परिहरम्, किन्तु यदि पटप्रागभावस्य पटं प्रति कारणत्वं स्वीक्रियते, तदा

पटानारम्भकतन्तुषु तत्पटप्रागभावासत्त्वान् न तत्र पटोत्पत्तिप्रसंगः। तस्मात् कार्य-कारणभावलाघवानुरोधेन प्रागभावस्वीकार एव युक्तियुक्तः।

## २१. ध्वंसाभावनिरूपणम्

अथ ध्वंसाभावो निरूप्यते। तत्र जन्याभावत्वं ध्वंसत्वमिति मुक्तावली। ननु जन्याभावस्यैव ध्वंसत्वकथनाद् ध्वंसं प्रति कश्चित् कार्यकारणभावो वाच्यः, स च कीदृशः? यदि प्रतियोगितासम्बन्धेन ध्वंसं तादात्म्येन भावत्वेन कारणत्वम्, तदा एतद्घटनाशकालीनघटसमवेतरूपादिनाशं प्रति स्वप्रतियोगित्वसम्बन्धेनैतद्घटसमवेत-त्वस्य कारणत्वं वाच्यम्। तथा च सति घटनाशप्रतियोगिसमवेतत्वस्य घटत्वेऽपि सत्त्वाद् घटत्वस्यापि विनाशापत्तिप्रसंगः। अतो विनाशित्वावच्छिन्नं प्रति जन्यभावत्वेन कारणत्वं वाच्यम्। घटत्वे तथाविधकारणत्वाभावाद् न तस्य विनाशप्रसंगः।

अत्रायमर्थः—प्रतियोगित्वसम्बन्धेन विनाशित्वावच्छिन्नं प्रति तादात्म्य-सम्बन्धेन जन्यभावत्वावच्छिन्नस्य कारणत्वं वाच्यम्। तत्र च भावतादात्म्यवति कालादिनित्यपदार्थप्रतियोगित्वसम्बन्धेन विनाशित्वरूपकार्यासत्त्वाद् उक्तकार्यकारण-भावस्यान्वयव्यभिचारवारणार्थं जन्येति पदम्। एवं तादात्म्येन जन्यत्वमात्रावच्छिन्नस्य कारणत्वे ध्वंसस्यापि विनाशापत्तिः स्यात्। अतो भावेति पदम्।

न च तथापि प्रतियोगित्वसम्बन्धेन विनाशित्ववति प्रागभावे तादात्म्येन जन्य-भावस्यासत्त्वाद् व्यतिरेकव्यभिचार इति वाच्यम्, समानाधिकरण्यसम्बन्धेन भावत्व-विशिष्टप्रतियोगिताया एव कार्यतावच्छेदकसंसर्गतया स्वीकारात्, प्रागभावे च सामा-नाधिकरण्यसम्बन्धेन भावत्वविशिष्टायाः प्रतियोगिताया असत्त्वान्न दोषः।

नन्वेतादृशकार्यकारणकल्पने किं नियामकम्? प्रतियोगित्वसम्बन्धेन नाशं प्रति तादात्म्येन सोत्पत्तिकत्वेन कारणत्वमित्येवं कार्यकारणभावकल्पने नित्यानामाकाश-कालादीनां विनाशो न भवति। प्रागभावस्य विनाशार्थं पुनः पृथगेव कार्यकारणभावः कल्पनीयः।

तथा च प्रतियोगितासम्बन्धेनाभावत्वावच्छिन्ननाशं प्रति स्वसामानाधिकरण्य-स्वाव्यवहितपूर्ववर्त्तित्वोभयसम्बन्धेन कार्यत्वेन हेतुत्वम्। तथा च प्रथमकार्यकारण-बलेन नित्यानां न विनाशभावापत्तिः, द्वितीयकार्यकारणभावबलेन च प्रागभावस्यापि विनाशः। अतो जन्यभावत्वेन हेतुत्वकल्पनं न युक्तम्, यतस्तत्र जन्यत्वस्य प्रागभाव-प्रतियोगित्वरूपतया भावत्वस्य चाभावभिन्नतया कारणताकुक्षौ तयोरन्तर्भावाद् गौरवमिति चेत्, तत्रोच्यते—एवं सति ध्वंसस्यापि विनाशापत्तिर्दुर्वारा।

### २२. जन्यभावध्वंसयोः कार्यकारणभावनिरूपणम्

तथा चात्रानुमानम्—ध्वंसो विनाशी जन्यत्वात्, घटवत्, अपि तु प्रतियोगित्व-सम्बन्धेन विनाशित्वावच्छिन्नं प्रति तादात्म्येन जन्यभावत्वेन हेतुत्वकल्पने पूर्वोक्तानुमाने जन्यत्वावच्छिन्नविनाशित्वव्यापकं भावत्वमुपाधिः स्यात्। तथा हि कार्यकारण-भावान्तर्गतविनाशित्वं नाम विनाश एव, यद्धर्मविशिष्टवाचकाद् भावविहितप्रत्ययः, स तदर्थमेवावगाहत इति नियमात्। अत्र च जन्यत्वावच्छिन्नभावत्वं नाम जन्यत्व-विशिष्टविनाशित्वव्यापकभावत्वम्। वैशिष्ट्यं च सामानाधिकरण्यसम्बन्धेन। तथा च सामानाधिकरण्यसम्बन्धेन जन्यत्ववैशिष्ट्यं भाव एव वर्त्तमानत्वात् तथाविधं भावत्वं विनाशित्वव्यापकमिति भावत्वे साध्यव्यापकता। एवं विनाशे जन्यत्वसत्त्वेऽपि भावत्वा-सत्त्वाद् हेतोरव्यापकत्वं चेति भावत्वमुपाधिः। अत्र च भावत्वोपाधौ विनाशित्व-व्यापकं कथमिति चेत्, उच्यते—अनुकूलतर्कवशात् तत्सिद्धिः। अत्रानुकूलतर्क एव पूर्वोक्तकार्यकारणभावः। तथा हि जन्यभावत्वं यदि विनाशित्वव्यापकं न स्यात्, तर्हि भावानां जन्यत्वं न स्यात्। प्रसिद्धं च जन्यभावानां जन्यत्वम्। अत एव नित्यानां न विनाशः। अतः पूर्वोक्तकार्यकारणं विना जन्यभावत्वस्य पूर्वोक्तानुमाने उपाधित्वं न सिध्यति। अतो ध्वंसो विनाशी जन्यत्वात्, घटवदित्याद्यनुमानस्य निराकरणार्थमेव प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन जन्यभावत्वेन कारणत्वं वाच्यम्।

### २३. ध्वंसाभावानङ्गीकर्त्तृमतं तत्परिहारश्च

एतत् पुनरिहावधेयम्—ध्वंसस्य जन्यत्वेऽपि तस्य विनाशो नास्तीति न्याय-सिद्धान्तः। सांख्यादयः केचिदिह वदन्ति—मुद्गरादिप्रहारानन्तरं यद् घटप्रध्वंस इत्यभिधीयते, सोऽपि भावस्वभाव एव, यतो यस्य कपालस्य सत्त्वे यस्य घटस्य विनाशः, तस्मिन् कपाले तद्घटप्रध्वंस इति यो व्यवह्रियते, स तु मुद्गरप्रहारानन्तर-क्षणवर्ती कपालक्षणपरिणाम एव, तथा च यद् मृद् द्रव्यं घटोत्पत्तेः पूर्वं कपालरूपेणा-वस्थितमासीत्, तस्यैव परिणामो घटः। एवं सति मुद्गरप्रहारान्तरमपि तस्यैव कपालस्य मृद्द्रव्यान्तरोत्तरोत्तरपरिणामः। यदि तु तस्य परिणामस्य तुच्छस्वभावत्व-मेव स्यात्, तर्हि मुद्गरादिप्रहारवैयर्थ्यं स्यात्।

ननु घटप्रध्वंसस्य मृद्द्रव्यान्तरोत्तरपरिणामरूपत्वे कपालोत्तरक्षणेषु घट-प्रध्वंसस्याभावाद् घटस्य पुनरुज्जीवनप्रसङ्गः, अभावस्याभावे प्रतियोगिसमाविर्भाव-नियमादिति चेत्, तत्रोच्यते वादिभिः—घटं प्रति कपालं कारणम्। यदा कारणरूपेणैव कपालस्यावस्थानम्, तदा कार्यस्य घटस्य तत्रावस्थानं न युज्यते। कारणस्य कपालस्य न घटरूपता। एवं मुद्गरप्रहारानन्तरमपि मृद्द्रव्यान्तरोत्तरपरिणामं प्रति घटस्य कारणत्वं सिद्धम्। न ह्यसति घटे मुद्गरप्रहारादिना तथाविधस्य मृद्द्रव्यान्तरस्य परिणामः

सम्भवति। अतः सर्वत्रैव कारणस्य कार्योपमर्दनात्मकत्वाभावाद्, न तदानीं मृद्द्रव्यान्तरोपमर्दनं सम्भवति। अतः तदानीं घटध्वंसाभावेऽपि मृद्द्रव्यान्तरमेवावतिष्ठते। कार्यस्यैव कारणोपमर्दनात्मकत्वधर्माधारतया प्रसिद्धत्वात्।

अपि च, न हि कदाचित् कुत्रापि पुरुषव्यापारेणाभावो जायते। तस्मात् पुरुषव्यापारेण घटध्वंसो जायत इति केवलमन्यप्रतारितेन भवता परः प्रतार्यते। तस्मादन्धपरम्परापरित्यागेन बलवत्पुरुषप्रेरितमुद्गरादिव्यापाराद् घटाकारावस्थाविगमनेन मृद्द्रव्यान्तरोत्पत्तिरभ्युपगन्तव्या। अतो ध्वंसाभावोऽप्रसिद्ध एवेति चेत्, अत्रोच्यते सिद्धान्तपक्षैः—किं परिणामपक्षमाश्रित्य सिद्धान्तोऽयं गृह्यते, पक्षान्तरस्वीकारेण वा? न चाद्यः पक्षः कल्पः। परिणामो हि 'अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः[1]' इति। अत उत्पत्तेः पूर्वं कार्यं सद् इत्यङ्गीकृत्यैव परिणामः किन्तूत्पत्तेः पूर्वं कार्यं सद् इत्येव न सिध्यति।

## २४. सत्कार्यवादखण्डनेन परिणामवादनिराकरणम्

तथा हि पुरुषव्यापारात् पूर्वमपि यदि तन्तुषु पटः सन्नेव स्यात्, तर्ह्युपलब्धिकारणेषु सत्सु कथं स पटो नोपलभ्यते। न चानभिव्यक्तत्वादेव तदानीमनुपलब्धिरित्यपि वाच्यम्, अनभिव्यक्तेरेव निर्णेतुमशक्यत्वात्। तथा च केयमनभिव्यक्तिः? यद्युपलब्धेरभावस्तर्हि प्रकारान्तरेणासत्कार्यवाद एव भवता अङ्गीकृतः, यतः सति वस्तुनि सत्सु कारणव्यापारेषूपलब्धिर्भवत्येव, अत उपलब्धिकारणेषु सत्स्वपि यत्र यस्य नोपलब्धिः, तत्र तस्याभाव एव स्वीकार्यः स्यात्। अतोऽनभिव्यक्तेरुपलब्ध्यभावरूपत्वे प्रकारान्तरेणाकामेनापि भवता असत्कार्यवाद एव अङ्गीकृतः।

अथ यद्युपलब्धियोग्यस्यार्थक्रियासाधनक्षमस्य वस्तुनो विरह एवानभिव्यक्तिरभिप्रेता स्यात्, तदानीमपि असत्कार्यवाद एव समापतेत्। किं बहुना, उत्पत्तेः पूर्वमपि सतः कार्यस्य पुरुषव्यापारेणाभिव्यक्तिर्भवद्भिरङ्गीकृता। अत्रेदं पृच्छ्यते—इयमभिव्यक्तिः पूर्वमसती सती वा? यदि त्वभिव्यक्तिः पुरुषव्यापारात् पूर्वं स्वयमसती, पुरुषव्यापारेण सती स्यात्, तर्ह्यसत्कार्यवादः प्रतिज्ञासहस्रैरपि नान्यथयितुं शक्यते। अथ यदि सती स्यात्, तर्हि पुरुषव्यापारं विनापि कार्याभिव्यक्तेः सत्त्वात् सिद्धाया अभिव्यक्तेरापादनार्थं पुरुषव्यापारेणालम्, तस्मादुत्पत्तेः पूर्वं कार्यं सदित्येवापादयितुं न शक्यम्। तथा च सत्यवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ यः परिणामः स्वीकृतो भवद्भिः, तन् मृषैव स्यात्। न हि पुरुषव्यापारेणासतो धर्मिणः पूर्वधर्मनिवृत्तिः सम्भवेत्। अतः परिणामवाद एव दुर्युक्तियोगाद् वर्जनीयः।

---

१. योगसूत्रे-विभूतिपादे-सू० १३ व्यासभाष्यम्।

## २५. कार्यकारणयोरभेदनिराकरणम्

अपि च परिणामपक्षे कार्यकारणयोरभेदो वादिभिः स्वीकृतः। तथा चोक्तं सांख्यकारिकायाम्--

> **असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।**
> **शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्**[1] ॥

किन्तु कार्यकारणयोरभेद एव न सिध्यति। उत्पत्तिभेदात् प्रतीतिभेदाद् निरोध-भेदाद् आधाराधेयव्यवहारभेदात् प्रयोजनभेदाच्च।

तथा चानुमानम्—पटस्तन्तुभ्यो भिद्यते, तन्तूत्तरोत्पत्तिप्रतीतिविषयत्वात्, यो यदुत्तरोत्पत्तिप्रतीतिविषयः, स तद्भिन्नः, घटोत्तरोत्पत्तिप्रतीतिविषयपटवत्।

एवं तन्तुकालीनविनाशप्रतीतिविषयत्वात् पटस्तन्तुभ्यो भिद्यत एव। एव-मन्यत्रापि बोध्यम्। कार्यकारणयोर्महति भेदे जागरूके तयोरभिन्नत्वव्यवस्था न कथमपि सम्भाव्यते।

## २६. परिणामवादखण्डनोपसंहारः

किं बहुना, यत् कारणं तत् साकल्येन परिणमते ? अंशेन वा ? साकल्येन चेत्, तर्हि कार्यावस्थायां कारणस्योच्छेदात् कार्यकारणयोरत्यन्तभेद एव सिध्यति। तत्रापि परिणामो न घटते। अंशेन परिणामपक्षे तु घटावस्थायामप्यंशतो घटः, अंशतः कपाल इति प्रतीत्यापत्तिः। वस्तुतो नैवम्। अतः परिणामवादो निर्युक्तिक एव। एवं चासिद्धे परिणामे मुद्गरप्रहारेण मृद्द्रव्यान्तरोत्तरपरिणाम इति वृथैव कल्पना भवताम्। इह 'कपाले घटो विनष्टः' इति प्रतीतेः सर्वानुभवसिद्धतया तत्र घटध्वंसं विना कथमपि तत्प्रतीतेरसिद्धत्वाल्लोकप्रतीतिसिद्ध एव ध्वंसो न हि युक्ति-शतेनापि प्रेक्षावत्प्रतीतिमतिक्रमितुं शक्नुयात्। अतः सिद्धो ध्वंसः।

## २७. अत्यन्ताभावनिरूपणारम्भः

नित्यसंसर्गाभावत्वमित्यत्यन्ताभावलक्षणम्। यथा 'भूतले घटो नास्ति' इति भूतले यो घटाभावः, तस्योत्पत्तिविनाशयोरसत्त्वाद् नित्यत्वं स्वीकर्त्तव्यम्। ननु भूतले यदि घटाभावो नित्यः स्यात्, तर्हि घटवत्यपि भूतले घटाभावस्य सत्त्वेन घट-वद्भूतलमिति प्रत्ययो न स्यात्, तत्सम्बन्धावच्छिन्नतत्प्रकारकबुद्धिं प्रति तत्सम्बन्धा-वच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाऽभावबुद्धेः प्रतिबन्धकत्वादिति चेत्, तत्रोच्यते— घटाभावस्य भूतलादौ नित्यत्वेऽपि तत्प्रत्यक्षोपयोगितासन्निकर्षासत्त्वे घटाभावप्रत्यक्षं न भवेत्।

---

१. सां० का०—९।

## २८. अभावप्रत्यक्षं प्रति सन्निकर्षप्रतियोग्यारोपादीनां कारणत्वनिरूपणम्

न हि सन्निकर्षं विना विद्यमानस्यापि वस्तुनः प्रत्यक्षत्वं केनचिदपि इष्टम्। घटस्य विद्यमानत्वेऽपि चक्षुःसंयोगादिकं विना तत्प्रत्यक्षानुपपत्तेः। घटाभावप्रत्यक्षोपयोगी सन्निकर्षस्तु घटासमानकालीनतत्तद्भूतलादिकमेव। अतो घटविद्यमानदशायां सन्निकर्षाभावेन स्थितस्यापि घटाभावस्य प्रत्यक्षं न भवेत्। अपि तु संयोगसम्बन्धेन घटस्य चक्षुःसन्निकर्षसत्त्वाद् 'घटवद् भूतलम्' इति प्रत्यक्षं भवत्येव। अत एवाभावप्रत्यक्षं प्रति प्रतियोग्यारोपः कारणम्। तत्र प्रतियोग्यारोपत्वं नाम प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपमिति मुक्तावलीकृतामाशयः।

तत्रेदं तात्पर्यम्—तत्तदिन्द्रियजन्यतत्सम्बन्धावच्छिन्नतदभावलौकिकप्रत्यक्षं प्रति तदिन्द्रियजन्यानाहार्यतत्संसर्गकतत्प्रकारकोपलम्भाभावः कारणम्। अत एवेन्द्रियान्तरजन्य आनुमानिके च तदुपलम्भे सत्यपि तदभावप्रत्यक्षं सम्भवति। एवमाहार्यात्मकप्रतियोग्युपलम्भसत्त्वेऽपि अभावप्रत्यक्षादनाहार्यमिति पदं प्रदत्तम्। तथा चैकसंसर्गेण प्रतियोगिप्रकारकज्ञानसत्त्वेऽप्यन्यसंसर्गेणाभावप्रत्यक्षोपपत्त्या कार्यताकुक्षौ कारणताकुक्षौ च संसर्गनिवेशः कर्त्तव्यः। अत एव संयोगेन 'घटवति भूतले' समवायेन 'घटो नास्ति' इति प्रत्यक्षं भवत्येव। तत्र भूतले घटाभावो यद्यनित्य एव स्यात्, तर्हि संयोगेन 'घटवति भूतले' समवायेन घटाभावप्रत्यक्षं कथं सम्भवेत् ?

## २९. प्रतियोग्यारोपविषयकप्राचीननवीनमतप्रदर्शनम्

वस्तुतस्त्वभावप्रत्यक्षे प्रतियोग्यारोपः कारणमिति प्राचीनानामाशयः। यद्यत्र घटप्रकारकोपलम्भविषयः स्यादित्यादेरयमेवार्थो यद् भूतले यदि घटः स्यात्, तर्हि घटवत्तयोपलभ्येतेति आपत्तिकारणीभूतम् आपादकवत्ताज्ञानप्रदर्शनपरम्, न त्वापत्तिविषयाभिलापरूपम्। अत आपत्तेः कारणत्वेऽपि तस्या घटप्रकारकत्वेन प्रतियोग्यारोपस्य कारणत्वाप्रसक्तेस्तादृशापत्तियोग्यतैव तत्रापेक्षिता, न तु आपत्तिरपीति नव्यानामाशयः।

तथा च—संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावप्रत्यक्षं प्रति संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारतानिरूपिततदधिकरणनिष्ठविशेष्यताशाल्युपलम्भयोग्यताऽपेक्षिता। एतत्तु चतुर्थाध्याये योग्यतानिरूपणविचारे समालोचितम्।

## ३०. प्रतियोग्यादियोग्यत्वविचारः

अत्रायं निष्कर्षः—तदधिकरणनिष्ठलौकिकविषयतासम्बन्धेन तदभावप्रकारकप्रत्यक्षं प्रति तदधिकरणकतदापादकापत्तियोग्यतदुपलम्भस्य विषयतासम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः कारणम्। तदुपलम्भ इत्यस्य च यदभावप्रत्यक्षं जननीयं तत्प्रकारकोपलम्भ इत्यर्थः। तथा च यत्प्रतियोगिकाभावप्रत्यक्षं जननीयम्,

विषयतासम्बन्धावच्छिन्नतत्प्रतियोगिसत्त्वनिष्ठव्याप्तिनिरूपकत्वं तदधिकरणकतदापादकापत्तियोग्यत्वमुपलम्भे बोध्यम्। अत एव यत्र तदापादकापत्तिर्नोत्पन्ना, तत्र तदभावप्रत्यक्षानुपपत्तिवारणार्थं योग्यतत्वनिवेशः कृतः।

तथा हि भूतलादौ चक्षुःसंयोगानन्तरमापादनं विनैव घटो नास्तीति प्रतीतेरनुभवसिद्धतया तत्र योग्यता निविष्टा।

## ३१. प्रतियोगियोग्यताविचारनिष्कर्षः

ननु घटादिसत्त्वेऽपि यत्र चक्षुःसंयोगाद्यभावे न घटोपलब्धिः, तत्रोपलम्भे प्रतियोगिसत्त्वव्यापकता न सिध्यतीति पूर्वोक्तकार्यकारणभावस्वीकारे उपलम्भे प्रतियोगिसत्त्वव्यापकत्वासिद्धौ तदधिकरणकतदापादकापत्तियोग्यत्वमुपलम्भनिष्ठं न सिध्यतीति न कुत्राप्यभावप्रत्यक्षं भवेदिति चेत्, तत्रोच्यते—निर्विशेषितस्य केवलं प्रतियोगिसत्त्वस्योपलम्भव्याप्यत्वं न विवक्षितम्, यतो घटादिसत्त्वेऽपि घटोपलम्भकसामग्र्यन्तरविरहे उपलम्भो न सिध्यति; किन्तु महत्त्वोद्भूतरूपाद्यवच्छिन्नप्रतियोगिसत्त्वस्यैवोपलम्भव्याप्यत्वं विवक्षितम्। एवं च सति घटादिसत्त्वेऽपि चक्षुःसंयोगाद्यभावे केवलघटसत्त्वस्योपलम्भव्याप्यत्वाभावेऽपि न दोषः।

## ३२. प्रतियोगिप्रत्यक्षकारणानामपि अभावप्रत्यक्षहेतुत्वम्

अत इदमत्र पर्यवसितम्—प्रतियोगिनः प्रत्यक्षं प्रति यावन्ति कारणान्यपेक्ष्यन्ते, तावत्सु कारणेषु सत्स्वपि यदि तत्र प्रतियोगी नोपलभ्यते, तदैव प्रतियोग्यारोपस्तत्र सम्भवति। अतो यत्रालोकसंयोगादिकं वर्त्तते, तत्रैव यद्यत्र घटः स्यात् तर्हि घटवत्तयोपलभ्येतेति प्रतियोग्यारोपः सम्भवेत्। तत्रैव च घटाभावप्रत्यक्षं भवितुमर्हति। अत एवान्धकारादौ घटाभावस्य न चाक्षुषप्रत्यक्षम्। स्पार्शनप्रत्यक्षं तु तत्र भवत्येव।

इदमत्र बोध्यम्—यद्यभावप्रत्यक्षे योग्यानुपलम्भः कारणं स्यात्, तदा पिशाचाद्यभावप्रत्यक्षं भवितुं नार्हति। पिशाचस्य प्रत्यक्षायोग्यतया योग्यानुपलम्भासम्भवात्। अतः केवलं योग्यस्य प्रतियोगिनोऽभावप्रत्यक्षस्थल एव योग्यानुपलम्भः कारणम्। अयोग्यप्रतियोगिकाभावप्रत्यक्षस्थले तु प्रतियोगिनिष्ठस्तदधिकरणीयोपलम्भस्य विषयतासम्बन्धावच्छिन्नाभाव एव कारणम्।

तथा हि स्तम्भादौ अधिकरणे यदा पिशाचाभावः प्रत्यक्षो भवेत्, तदा स्तम्भनिष्ठलौकिकविशेष्यतानिरूपिताभावनिष्ठप्रकारतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्न-प्रकारतासम्बन्धेन पिशाचादीनामभावप्रत्यक्षम्। वस्तुतस्तु अयोग्यप्रतियोगिनोऽभावोऽपि न योग्यः। अत एव संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यताऽपेक्ष्यते। अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता। अतः स्तम्भादौ पिशाचभेदप्रत्यक्षं सम्भवति।

**३३. प्रतियोग्युपलम्भनिरूपणे उपसंहारः**

अथ पूर्वोक्तप्रकारेण सलक्षणमभावभेदनिरूपणानन्तरं तत्तल्लक्षणखण्डनद्वारेण प्रागभावादीनामसिद्धिमाशङ्कमानानां वादिनां मतं संक्षेपेणालोच्य समाधीयते। तत्र संसर्गान्योन्याभावभेदतोऽभावद्वैविध्यं प्रसिद्धमुक्तम्। तत्र च संसर्गाभावस्यापि पुनस्त्रैविध्यं न्यायसम्मतम्—प्रागभावः, ध्वंसाभावः, अत्यन्ताभावश्चेति। तत्र विनाश्यभावत्वं प्रागभावत्वमिति प्रागभावलक्षणं प्रसिद्धम्। तथा च विनाशित्वे सत्यभावत्वमित्यर्थः। अत्र ध्वंसेऽतिव्याप्तिवारणार्थं विनाशित्वे सतीति विशेषणम्। घटादावतिव्याप्तिवारणायाभावत्वम्।

**३४. वैदान्तिकादिभिः पूर्वपक्षिभिः प्रागभावलक्षणस्यासिद्धयाशङ्का**

अत्रेदं विचार्यते—विनाशिशब्देन कोऽर्थो गृह्येत ? विनाशोऽस्यास्यीति व्युत्पत्त्या यदि विनाशः शब्दः परिनिष्पद्येत, तर्हि 'घटो विनष्टः' इत्यादिप्रतीतिबलाद् उत्पत्तिमदभावत्वमेव विनाशिशब्दार्थः स्यात्। किमेष एवार्थो ग्राह्यः ? आहोस्विदभाववत्त्वमेव विनाशिशब्दार्थः ? अन्त्ये ध्वंसादावतिव्याप्तिः। अत्यन्ताभावो न ध्वंस इति प्रतीत्या ध्वंसान्योन्याभावस्यापि प्रसिद्धतया ध्वंसस्यापि भेदप्रतियोगित्वेनाभाववत्वं तत्र वर्त्तते। अतोऽतिव्याप्तिः।

अथ यदि प्रथमः कल्पः स्यात्, तदोत्पत्तिमान् अभावो यस्य वर्त्तते, स एव विनाशिशब्दार्थः स्यात्। तथा च सति असम्भवो दोषः। तथा हि घटप्रागभावस्य निवृत्तिर्यदि घटातिरिक्तः कश्चिदभावः प्रसिद्धो भवेत्, तदैव प्रागभाव उत्पत्तिमदभाववान् स्यात्।

**३५. प्रागभावनिवृत्तिर्भावान्नातिरिच्यत इति पूर्वपक्षिमतप्रदर्शनम्**

वस्तुतस्तु घटातिरिक्तो घटप्रागभावनिवृत्तिर्नैव लभ्यते। तथा हि घटातिरिक्तस्य घटप्रागभावध्वंसस्य केन प्रमाणेन सिद्धिः ? न हि प्रत्यक्षेण घटातिरिक्तघटप्रागभावनिवृत्तिरुपलभ्यते, यतोऽभावाभावो न भावातिरिक्तः। तथा हि—न खल्वभावाभावो नाम कश्चिदन्यो भावात्। नापि भावाभावोऽन्योऽभावात्। एवं कुमारिलभट्टपादैरपि श्लोकवार्त्तिके उक्तम्—'अपोह्यमाने चाभावे भाव एवावशिष्यते'[1] इति। तस्मात् प्रत्यक्षेण प्रमाणेन घटप्रागभावाभावो घटादन्यः कश्चिन्न सिध्यति। तथा च सति पूर्वोक्तलक्षणेऽसम्भवदोषः।

अथ यदि युक्तिबलात् प्रागभागाभावः साधयितुमिष्येत, साऽपि युक्तिर्न गरीयसी। तथा हि यद्येवं मन्यते घटादेरुत्पत्तिबलादेव घटप्रागभावः सिध्यति, यतो

---

१. श्लो० वा० अपोहप्रकरणे।

घटप्रागभावानिवृत्तेर्घटादेर्जन्मासम्भवात् प्रागभावनिवृत्तिः स्वीकर्त्तव्या। सा च निवृत्तिर्घटातिरिक्तैव।

अत्रायमाशयः—किं प्रागभावे निवृत्ते सति घट उत्पद्यते? आहोस्विद् अनिवृत्त एव प्रागभावे? न तावदन्त्यः कल्पः सङ्गच्छते—घटविरोधिनः प्रागभावस्यानिवृत्तौ तद्विद्यमानतादशायां घटोत्पत्तेरसम्भवात्। न हि विरोधिनि सति विरुद्धोत्पत्तिः संगच्छते। तस्मात् प्रागभावनिवृत्तावेव घटोत्पत्तिः स्वीकर्त्तव्या। एवं च सति घटोत्पत्तेः पूर्वं विद्यमाना काचन प्रागभावनिवृत्तिरभावस्वरूपिणी स्वीकर्त्तव्या। अतो न लक्षणस्यासम्भवदोषः। तस्मात् स्वीकर्त्तव्यं यदभावनिवृत्तौ घट उत्पद्यते, अनिवृत्तौ च यस्याभावस्य घटो नोत्पद्यते, स भावभिन्नः प्रागभावाख्यः कश्चिदभावो वर्त्तत एव।

न चैवम्—'अपोह्यमाने चाभावे·····' इति श्लोकवार्त्तिकवचनविरोधः, तद्वाक्यस्यैवम्भूतार्थपरत्वात्। तथा हि 'अपोह्यमाने' प्रागभावस्य निवृत्तौ सत्यां तस्याभावस्य प्रतियोगी एवावशिष्यते। अन्यथा यद्यभावापह्नवशब्देन भाव एव गृह्येत, तर्हि प्रागभावकाले ध्वंसापह्नवात् तथा ध्वंसकाले च प्रागभावापह्नवात् प्रतियोगिनः सर्वदैव सत्त्वप्रसंगः[1]। तस्मात् प्रागभावः स्वीकर्त्तव्य एवेत्येवं प्रागभावमङ्गीकुर्वन्तं प्रति प्रत्युच्यते वैदान्तिकैः—प्रागभावस्यानिवृत्तो कार्यानुत्पत्तेः प्रागभावसिद्धिमिच्छतां मते यत् प्रागभावलक्षणं कृतम्, तन्न संगच्छते, आत्माश्रयदोषप्रसंगात्।

### ३६. प्रागभावलक्षणसम्भावनाविषये पूर्वपक्षिणामाशंकां प्रति सिद्धान्तिनां प्रत्याशंका, तत्र वैदान्तिकैर्दत्तोत्तरम्

तथा हि विनाश्यभावत्वं प्रागभावत्वमिति त्वभिमतलक्षणान्तर्गतविनाशपदार्थप्रतिपादनावसर एवमुक्तं यत् प्रागभावस्यानिवृत्तौ कार्यं नोत्पद्यत इति नियमात् प्रागभावस्य ध्वंसः कार्योत्पत्तौ हेतुरिति। स च ध्वंसो भावकार्यातिरिक्तः। तत्र ध्वंसस्यापि कार्यतया तत्रापि पूर्वं ध्वंसस्य प्रागभावनिवृत्तिः कल्पनीया। एवं च सति प्रागभावलक्षणान्तर्गतविनाशस्यापि प्रागभावापेक्षिततयाऽऽत्माश्रयो दुर्वारः। एवं तत्र तत्र निवृत्त्यन्तराभ्युपगमे अनवस्थापातः। तस्माद् घट एव स्वप्राग‌भावनिवृत्तिरिति कल्पनालाघवात् स्वीकर्तव्यम्। तथा च विनाशित्वस्य भावतया पर्यवसानात् तस्याभावत्वासम्भवेनैवासम्भवो दोषो वज्रायते।

---

१. 'न च वार्त्तिकवचनविरोधः। निवृत्त्या प्रागभावे अपोह्यमाने तत्प्रतियोगी घटादिरवशिष्यत एवेति अयोगव्यवच्छेदपरत्वात्। अन्यथाऽभावापह्नवमात्रेण भावशेषे प्रागभावसमये प्रध्वंसस्याऽसम्भवात् प्रध्वंससमये च प्रागभावस्याभावाद् भावावशेषः प्रसज्येत' इति।

(तत्त्वप्रदीपिकायां द्वितीयपरिच्छेदे–पृ० ४४२)।

**३७. ध्वंसस्यापि विनाशित्वसाधने पूर्वपक्षिणां युक्तिः**

एवं ध्वंसस्य यदनिवृत्तिः परैरिष्यते, तदपि न युक्तम्, यतो ध्वंसस्य विनाशे प्रतियोगिनः पुनराविर्भावप्रसंग इति दोषस्तैः प्रदर्शितः। स च न सम्यक्, यतः प्रध्वंसस्य ध्वंसोऽपि ध्वंस एव स्यात्, ध्वंसत्वस्य तत्रानपायात्। तथा चोक्तम्—'न च ध्वस्तस्योन्मज्जनापत्तिः, प्रध्वंसवदेव तत्प्रध्वंसमालाया अपि प्रध्वस्तभावविरोधित्वात्[1]'।

एवं च सति ध्वंसस्यापि विनाशित्वसिद्धौ विनाशित्वे सत्यभावत्वमिति प्रागभावलक्षणं ध्वंसेऽतिव्याप्तम्। यदि तु ध्वंसस्य विनाशे ध्वंसविरोधिनस्तत्प्रतियोगिपदार्थस्य पुनराविर्भावप्रसंग इष्येत, तर्हि घटप्रागभावविरोधिनो घटस्य नाशादूर्ध्वं पुनरपि घटप्रागभावाविर्भावो भवेत्?

**३८. प्रागभावलक्षणे पूर्वपक्षिणामाशङ्कानुवृत्तिः**

अथ यद्येवं मन्यसे यत्र कथमपि न विरुद्धधर्मसंसर्गः सम्भवति, तत्र यदि प्रत्यभिज्ञाबाधः स्यात्, तर्हि तथाविधकल्पना नैव युक्ता। प्रागभावस्योत्पत्तिं ध्वंसस्य च विनाशमिच्छतः प्रत्यभिज्ञाबाधः कल्पनागौरवं च स्यात्। तथा हि प्रागभावस्योत्पत्तिमत्त्वं ध्वंसस्य च विनाशित्वं वेदान्तिकमतेऽनुमानसिद्धम्।

तथा चात्रानुमानम्—(१) प्रागभाव उत्पत्तिमान्, विनाशित्वात्, घटादिवत्, (२) ध्वंसो विनाशी, कृतकत्वात्, घटादिवत्, इत्यनुमानाभ्यां वेदान्तमते प्रागभावध्वंसयोरुत्पत्तिविनाशौ साधनीयौ। तच्च प्रत्यभिज्ञाविरुद्धम्। तथा हि प्रागभावस्य नाशानन्तरं जायमानस्य तत्प्रतियोगिनो घटस्य विनाशेऽयं प्रागभावो घटस्येति न कदाचित् प्रत्यभिज्ञा जायते। एवं ध्वंसेऽपि बोध्यम्।

तथा हि मुद्गराद्यभिघातेन प्रस्तरे चूर्णतामुपगते ध्वस्तः प्रस्तर इति अबाधितप्रत्ययात् तत्र प्रस्तरध्वंसः स्वीकर्त्तव्यः। जायते च पुनस्तत्र प्रस्तरमिति भावग्राही प्रत्ययः। न तु ध्वंसस्य ध्वंस इति प्रत्ययः कदाचिदपि। तस्मात् प्रत्यक्षबाधाद् न ध्वंसस्यापि ध्वंसः स्वीकर्त्तव्यः। तथा ह्यसम्भवद्विरुद्धधर्मासंसर्गप्रत्यभिज्ञानबाधितत्वात् कल्पनालाघवाच्च न प्रागभावप्रध्वंसयोरुत्पत्तिविनाशौ।

**३९. तत्र सिद्धान्तिकृतसमाधानं प्रति वैदान्तिकानां पुनः दोषोद्भावनम्**

तथा चोक्तं न्यायलीलावत्याम्—'असम्भवद्विरुद्धधर्मासंसर्गप्रत्यभिज्ञानप्रतिक्षिप्तत्वादनुमानानां लाघवाच्च[2]' इति। अतो वैदान्तिकमतं नोपपद्यत इति चेत्,

---

१. तत्त्वप्रदीपिकायाम्—द्वितीयपरिच्छेदे, पृ० -४०३।

२. न्यायलीलावत्याम्—पृ० ५७२।

तत्र प्रत्युच्यते वैदान्तिकैः—घटध्वंसकाले क्रमशोऽवस्थान्तरेण पर्यवसितानां कपाल-कपालिकाचूर्णरजःकणानां परस्परविरुद्धधर्मसंसर्गः सम्भवत्येव। तेषु कपालादिरजः-कणेषु विरुद्धधर्मस्य प्रसिद्धतया तत्र न्यायाभिमतप्रत्यभिज्ञाया असिद्धेर्न पूर्वोक्तनियमो युज्यते। तथा हि घटध्वंसः कपालरूपम्, कपालध्वंसः कपालिकारूपम्, एवं कपालिकाध्वंसश्चूर्णरूपमित्यनुभूयते। अतः कपालकपालिकाचूर्णादिषु न ह्येक एव ध्वंसो विद्यते, अपि तु पूर्वपूर्वस्य ध्वंसः परपरध्वंसस्योत्पादक इति ध्वंसनानात्वं तत्र प्रसिद्धम्। अतः प्रत्यक्षबलाद् ध्वंसस्य नानात्वे सिद्धे तत्र कल्पनालाघवप्रयासो निर्युक्तिकः। तथा हि पौराणिकैरभिहितम्—

महो घटत्वं घटतः कपालिकाः।
कपालिकाचूर्णरजः ततोऽणुः[1]॥

तस्माद् विनाशित्वे भावत्वमिति लक्षणं ध्वंसे अतिव्याप्तम्।

### ४०. प्रसङ्गक्रमेण ध्वंसाभावलक्षणस्याप्ययुक्तत्वप्रदर्शनम्

तथा जन्याभावत्वं ध्वंसत्वमित्यप्यलक्षणम्, वेदान्तमते पिण्डादेः प्रागभावत्वेन स्वीकारात् तस्योत्पत्तिमत्वेन तत्रापि ध्वंसलक्षणातिव्याप्तेः। तथा हि—'उत्पत्तिमान् अभावो ध्वंस इत्यलक्षणम्, पिण्डादेः घटप्रागभावत्वेनास्मदभिमतस्योत्पत्तिमत्त्वाद् तदतिरिक्तस्य चानुपलब्धेः[2]' इति।

एवं प्राप्ते तत्र नैयायिकैः प्रत्युच्यते—असत्कार्यवादिनां[3] नैयायिकानां मते उत्पत्तेः प्राक् कार्यस्यासत्त्वं सिद्धमेव। अतः सामग्रीसम्वलनपूर्वं समवायिकारणे कपालादौ कार्यस्य घटादेः कश्चिदभावः सिद्ध एव। स चाभावो घटात्यन्ताभावा-

---

१. तत्त्वप्रदीपिकायाम्—पृ० ४४३-४४४।
२. तदेव – पृ० ४४८।
३. पादटीकायाम्—असत्कार्यवादस्तु ग्रन्थविस्तरभयान्नेह प्रपञ्च्यते। संक्षेपतस्तु इदमत्र ज्ञातव्यम् – कार्यकारणयोरत्यन्तभेद एव युक्तिसिद्धः। तथा हि पटस्तन्तुभ्यो भिद्यते तन्तूत्तरोत्पत्तिप्रतीतिविषयत्वात्। यो यदुत्तरोत्पत्तिप्रतीतिविषयः, स तद्भिन्नः, घटोत्तरोत्पत्ति-प्रतीतिविषयपटविशेषवत्। एवं पटस्तन्तुभ्यो भिद्यते—तन्तुकालीनध्वंसप्रतीतिविषयत्वात्, यो यत्कालीनध्वंसप्रतीतिविषयः, स तद्भिन्नः, घटकालीनध्वंसप्रतीतिविषयः, 'स' तद्भिन्नः, घटकालीनध्वंसप्रतीतिविषयपटविशेषवत्। एवं पटस्तन्तुभ्यो भिद्यते तन्त्वधिकरणकत्व-प्रतीतिविषयत्वात्, यो यदधिकरणकत्वप्रतीतिविषयः, 'स' तद्भिन्नः, मूवलाधिकरणकत्व-प्रतीतिविषयघटवत्। एवं पटस्तन्तुभ्यो भिद्यते—तन्तुसम्बन्धियत्किञ्चिदर्थक्रियाभिन्नार्थ-क्रियावत्त्वात्, यो यत्सम्बन्धियत्किञ्चिदर्थक्रियाभिन्नार्थक्रियावान्, स तद्भिन्नः, घटार्थक्रिया-भिन्नार्थक्रियायुक्तपटवत्।

दतिरिच्यते, यतः प्रागभावः समवायिकारणं विहाय नान्यत्र प्रतीयते। न च समवायिकारण एव कार्यप्रागभावः, नान्यत्रेत्यत्र किं प्रमाणमित्यपि वाच्यम्। अनुभव एवात्र प्रमाणम्। यत्र च कार्यं समवायसम्बन्धेनोत्पद्यते, तत्रैव कार्योत्पत्तेः पूर्वं 'अत्र एतद् भविष्यति' इति सर्वेषां व्यवहारो जायते। न हि वृक्षादौ घटो भविष्यतीति व्यवहारः, अपि तु कपाल एव तद्व्यवहारः। तस्माल्लोकप्रत्ययबलात् समवायिकारण एव प्रागभाव इति नियमः।

## ४१. पूर्वपक्षखण्डनद्वारेण सिद्धान्तिनां प्रागभावलक्षणसमर्थनम्

एतत् पुनरिहावधेयम्—अभावत्वेन रूपेण सर्वेषामभावानां तुल्यत्वेऽपि व्यवहारानुकूलप्रत्ययभेदादेवाभावभेदः सिध्यति। यत्रेदम् इदं नेति व्यवहारः, तत्र अन्योन्याभावः, यत्र चेदमिह नास्तीति व्यवहारः, तत्रात्यन्ताभावः, यत्र चेदमिह भविष्यतीति व्यवहारः, तत्र प्रागभावः, यत्र चेदमिह नष्टमिति व्यवहारः, तत्र ध्वंसाभाव इत्यनुभवसाक्षिकतयाऽभावभेदो न्यायविद्भिरङ्गीकृतः। तस्माद् 'इह कपाले घटो भविष्यति' इति व्यवहारस्यान्यविधाभावव्यवहारवैलक्षण्यात् कश्चिद् विलक्षणोऽयमभाव इत्यवश्यमङ्गीकर्त्तव्यम्। अत उत्पत्तेः पूर्वमिदमिह भविष्यतीति प्रतीतिसिद्धिः। तथा घटोत्पत्तेरनन्तरं तादृशव्यवहाराभावाद् योऽभावः सिध्यति, स प्रागभाव इति स्वीकर्त्तव्यम्।

यच्चोक्तं पिण्डादेरेव घटप्रागभावरूपत्वम्, तन्न सुचारु। तत्राभावत्वावच्छिन्नप्रतीतेरनुदयात्। तथा हि मृत्पिण्डं पश्यतो जनस्य तत्र मृद्विकारजातं भविष्यतीति प्रतीतिसम्भवेऽपि विकारसामान्यप्रागभावः स्वीक्रियते न वा? नाङ्गीक्रियते चेत् केवलं पिण्डस्यैवोपलब्धिस्तत्र स्वीकर्त्तव्या। अतः पिण्डोऽस्तीति प्रत्ययाद् विकारो भविष्यतीति प्रत्ययस्य को विशेषः? न हि अबाधितमनुभवं शपथशतैरप्यपलपितुं शक्नुयात्। न च तत्र पिण्डस्य भावांशेनैवेन्द्रियस्य सम्बन्धः, न त्वभावांशेनापि। अतः प्रत्यक्षबलात् तत्र पिण्डातिरिक्तः प्रागभावो नैव सिध्येदित्यपि वाच्यम्, इन्द्रियसन्निकर्षादुपलभ्यमाने भूतले 'अघटं भूतलम्' इति ज्ञानस्य सर्वसिद्धतया तत्र भूतलस्येवाभावस्यापि प्रत्यक्षता कथं नेष्यते?

भावपदार्थेष्विन्द्रियप्रत्यक्षोपयोगिसम्बन्धसामर्थ्यमुपपत्तिबलादेव स्वीकर्त्तव्यम्, न तु निर्युक्तिकम्। सर्वत्र तु फलेनैव कारणस्य कार्योत्पादनयोग्यता प्रतिष्ठिता भवेत्। अतो भावेनान्वयव्यतिरेकानुविधायित्वादिन्द्रियसम्बन्धयोग्यता यथा स्वीकर्त्तव्या, तथैवाबाधितप्रत्ययवशाद्भावस्यापीन्द्रियग्रहणयोग्यत्वं स्वीकर्त्तव्यम्।

अतो यथा पिण्डस्य भावत्वेनावगाही 'अयं पिण्डः' इति प्रत्ययो जायते, तथैवात्र 'विकारो भविष्यति' इत्यबाधितप्रत्ययबलात् तत्र पिण्डास्तित्वातिरिक्त-

किञ्चित्पदार्थविलम्बनप्रत्ययः स्वीकर्त्तव्यः। प्रत्ययावलम्बनीभूतं तत् पिण्डातिरिक्तं तदानीमनुत्पन्नानां विकाराणामभावाख्यं किञ्चित् स्वीकर्त्तव्यम्। अतः कार्यदर्शनादेव पिण्डादौ तदतिरिक्तविकाराभाव उत्पत्तेः प्राक् स्वीकर्त्तव्यः।

वस्तुतस्तु जन्यानां भवानां कादाचित्कत्वेनोत्पत्तेः पूर्वमभावः स्वीकर्त्तव्य एव। अन्यथोत्पत्तेः पूर्वमपि जन्यानामभावानङ्गीकारे सदातनत्वेन तेषां कादाचित्कत्वमनुपपन्नं भवेत्। तच्च सर्वलोकविरुद्धम्। अत उत्पत्तेः पूर्वं जन्यानामभावो वर्त्तत एव। स चाभावो जन्यानामुत्पत्त्यनन्तरं देशान्तरे वस्त्वन्तरे वा प्रतीयमानेभ्यस्तदभावेभ्यो विलक्षणः। अत एव घटोत्पत्त्यनन्तरमपि घटानधिकरणे 'घटो नास्ति' तथा 'पटादौ घटो न' इति व्यवहारसत्त्वेऽपि 'तद्घटो भविष्यति' इति व्यवहारो न भवेत्। तस्मादकामेनापि घटोत्पत्तेः पूर्वं घटसमवायिकारणे 'घटो भविष्यति' इति प्रतीत्याऽनुभूयमानः कश्चिद् घटाभावविशेषः स्वीकर्त्तव्यः। स च प्रागभावः।

### ४२. प्रागभावस्योत्पत्तिमत्वनिरसनम्

एवं च सति प्रागभावसिद्धौ तस्योत्पत्तिमत्वमस्ति नास्ति वेति विचारणीयम्। दृश्यते च पुनरनादिकालादारभ्यायं प्रागभावो वर्त्तत एव, यतो जन्यत्वं नाम प्रागभावप्रतियोगित्वम्, नान्यत्। अतः प्रागभावो यदि जायेत, तर्हि प्रागभावस्यापि प्रागभावप्रतियोगित्वं स्वीकर्त्तव्यम्। तच्चानिष्टम्, अनवस्थाभयात्। अतः प्रागभावस्य प्रागभावप्रतियोगित्वासम्भवात् प्रागभावो न जायते। यच्चोक्तं प्रागभाव उत्पत्तिमान्, विनाशित्वात्, घटादिवदिति, तद् ध्वंसेऽनैकान्तिकम्। ध्वंसस्य कृतकत्वहेतुना विनाशित्वमिति वाच्यम्, अत्र हेतोः सोपाधिकत्वाद् व्यभिचारात्।

### ४३. ध्वंसप्रागभावनिर्द्धारणोपसंहारः

तथा च सावयवत्वमुपाधिः। दृश्यते च आ परमाणुपर्यन्तं विनाशिनां द्रव्याणां सावयवत्वमिति साध्यव्यापकता। कृतकत्वं च ध्वंसेऽस्ति, तत्र सावयवत्वं नास्तीति हेतोरव्यापकत्वं च। तस्मात् कृतकत्वेन हेतुना ध्वंसस्य विनाशित्वं नैव सिध्येत्। एवं च सति ध्वंसस्याविनाशित्वे सिद्धे तत्र जन्यत्वस्य सत्त्वेन विनाशित्वस्याभावाद् विनाशित्वहेतुना प्रागभावस्य जन्यत्वं नैव सिध्यति। एवं च सति विनाश्यभावत्वं 'प्रागभावत्वम्' जन्याभावत्वं च ध्वंसत्वमिति लक्षणं कथमपि दूषयितुं न शक्यते।

एवं प्रागभावध्वंसाभावयोः प्रतिवादिमतनिरसनेन सिद्धौ तदनन्तरं प्रतिवादिभिराक्षिप्यमाणस्यान्योन्याभावस्य परीक्षणं क्रियते। तथाहि—तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वमिति न्यायसिद्धान्तमाश्रित्याप्येवमाक्षेपः क्रियते प्रतिवादिभिः—'घटे पटान्योन्याभावः', 'घटः पटो न' इत्याकारकः पटतादात्म्यप्रतियोगिकघटानुयोगिकोऽभाव इत्यनेन घटपटयोस्तादात्म्यप्रतिषेधः प्रतीयते। स च तदैव

सङ्गच्छते यदि घटपटयोस्तादात्म्यं प्रसिद्धं स्यात्। तथा हि घटपटयोर्न तादात्म्यमित्यनेनाकारेणाभावेनैव घटे पटान्योन्याभावः सिध्यति। तथा च घटपटतादात्म्यप्रतियोगिकोऽभाव एव घटे पटान्योन्याभाव इति फलितम्[1]। तत्र च प्रतियोग्यप्रसिद्ध्या नान्योन्याभावः सिध्यति, अप्रसिद्धप्रतियोगिकस्याभावस्यासम्भवात्।

ननु प्रमिते घटे प्रमितस्य पटत्वस्य प्रतिषेध एव पटान्योन्याभावविषयतया नाप्रसिद्धप्रतियोगिकत्वमन्योन्याभावस्येति चेत्, तत्रोच्यते प्रतिवादिभिः—'भूतले घटो नास्ति' इति सप्तम्यन्तानुयोगिकाभाववद् घटे पटत्वप्रतियोगिकाभावस्याप्यत्यन्ताभावेनैव चरितार्थतया तत्राभावान्तरकल्पने प्रमाणाभावः। अथ यदि प्रतियोग्यवृत्तिर्नित्योऽभावोऽन्योन्याभाव इत्युच्येत, तदा प्रथमविशेषणेनात्यन्ताभावव्यावृत्तावपि तत्र विकल्पासहत्वान्नेदं लक्षणं सङ्गच्छते।

### ४४. अन्योन्याभावनिरूपणावसरे प्रतियोगिपदार्थनिरूपणे पूर्वपक्षः

तथा हि—कस्तावत् प्रतियोगिशब्दार्थः? यद्यन्योन्याभावभिन्न एवात्र प्रतियोगिशब्दार्थः, तर्ह्यन्योन्याभावाधिकरणस्याप्यन्योन्याभावभिन्नतया तस्यापि प्रतियोगिशब्देन ग्रहणं सम्भाव्यते। तथा च सति 'भूतलं न घटः' इत्यत्र भूतलस्यापि घटान्योन्याभावप्रतियोगित्वात् प्रतियोग्यवृत्तिरिति विशेषणं लक्षणस्यासम्भाव्यतां समानयति। यदि तावदभावस्य निरूपक एव प्रतियोगिपदार्थः, तदा भूतलनिष्ठघटभेदस्य निरूकत्वं[2] भूतलेऽपि वर्त्तत इति तत्रापि पूर्वदोषतादवस्थ्यम्।

न च धर्मिव्यतिरिक्तनिरूपकावृत्तित्वं विवक्षणीयमित्यपि वाच्यम्, धर्मिणोऽपि धर्मान्तरादन्यत्वेन तत्राप्यसम्भवदोष एव स्यात्। अथ धर्मित्वानधिकरणे अवृत्तिरेवात्र विवक्षितेति यदि मन्यसे, तत्रापि न निस्तारः। निर्धर्मिकस्य वस्तुनोऽसम्भवेन प्रतियोगिनोऽपि धर्मित्वात् प्रतियोग्यवृत्तिरित्यस्याप्रसिद्धेः। अथ यद्यभावविरोधित्वमेव तत्प्रतियोगित्वमित्युच्येत, तदापि न निस्तारः, यतो विरोधस्य विशेषविषयनियन्त्रितया सर्वस्यैव वस्तुनः स्वभावविरोधित्वेन प्रतियोगिरूपत्वात् तत्रापि प्रतियोग्यनिष्ठ इति विशेषणं न सङ्गच्छते। यदि स्वप्रतियोग्यवृत्तिकत्वमेवोपादीयते, तदाऽऽत्माश्रयदोषः। अतः कथमप्यन्योन्याभावलक्षणं न सिध्यति।

---

१. पूर्वपक्षिभिरत्र तादात्म्यस्य प्रतियोगिविधया ग्रहणं कृतम्, न तु प्रतियोगितावच्छेदकसम्बन्धविधयेति विभावनीयम्।

२. निरूपकत्वं नाम निर्धारकत्वम्। तथा चाभावस्यानुयोगिसापेक्षतयाऽनुयोग्यप्यभावनिरूपको भवेत्। तथा च घटप्रतियोगिकभूतलानुयोगिकभेदस्य भूतलसापेक्षतया भूतलेऽपि घटभेदनिरूपकत्वं वर्त्तत इत्याशयः।

**४५. 'घटो न पटः' इति प्रत्ययबलाद् अन्योन्याभावसिद्धिरिति नैयायिकपक्षखण्डनम्**

अथ यदि मन्यसे 'घटो न पटः' इत्यत्र घटे प्रतीयमानो यः पटभेदः, स तु न संसर्गाभावः, संसर्गाभावस्य सप्तम्यन्तानुयोगिकत्वनियमात्। अतो विलक्षणप्रत्यय-साध्योऽभाव एवान्योन्याभाव इति चेत्, तत्रेदमुच्यते, तदापि घटे धर्मिणि प्रतीय-मानपटभेदो व्यवस्थापयितुं न शक्यते। तथा हि घटे धर्मिणि प्रतीयमानः पटभेदो घटधर्मतयैव प्रत्येतुं योग्यः। स च प्रत्ययो न सम्भवति, यतो घटपटभेदयोर्विशेष्य-विशेषणभावेनैव प्रत्ययौचित्यात् तत्र पटभेदस्य च घटे विशेषणत्वाऽयोगान्नैतादृशोऽभावः सिध्यति, यतोऽभावग्राहकं च कारणं नैकं भवेत्। अतो विशेषणीभूतस्याभावस्य, विशेष्यीभूतस्य घटस्य च भिन्नकारणग्राह्यतया युगपद्ग्रहणायोग्यत्वम्।

तथा चोक्तं तत्त्वप्रदीपिकायाम्—

**युगपद्ग्रहणायोगादनवस्थाप्रसङ्गतः।**
**परस्पराश्रयत्वाच्च धर्मभेदेऽपि नाक्षधीः[1]॥** इति।

भावयोरेव हि दण्डदेवदत्तयोस्तुल्योपलम्भयोग्यत्वेन युगपद्ग्रहणं सम्भवति। भावाभावयोः सुतरां तुल्योपलम्भयोग्यत्वासम्भवाद् युगपद्ग्रहणं न युज्यते; अपि तु घटे तदितरभेदानामानन्त्याद् अनन्तभेदविशिष्टस्य घटस्य ग्रहणमेव सुदूरपराहतम्, यतोऽ-भावज्ञानस्य प्रतियोगिज्ञानसापेक्षतयाऽभावविशिष्टस्य घटस्य ग्रहणे विशेषणीभूताभाव-ग्रहणार्थं तत्तदभावप्रतियोगिज्ञानमावश्यकम्, तच्च न सम्भवति।

**४६. भेदस्यानुयोगिविशेषणत्वासम्भवप्रदर्शनम्**

एवं यदि घटस्य धर्मः पटभेदो घटादतिरिक्तस्तर्हि घटेन सह पटभेदस्यापि भेदः स्वीकर्त्तव्यः। एवं सोऽपि भेदः पटभेदादतिरिक्त इति तद्भेदस्यानुयोगितया स्वीकर्त्तव्यो यो पटभेदः, तेनापि तद्धर्मभूतस्य घटप्रतियोगिकपटभेदानुयोगिकभेदस्या-तिरिक्तत्वं स्वीकर्त्तव्यमिति तत्राप्यन्यो भेदः स्वीकर्त्तव्य इत्येवमनवस्था। अतः पट-भेदस्य तद्भेदानुयोगिघटातिरिक्तत्वं दुर्वचम्।

अथ यदि पटभेदो घटस्वरूप एव, न तु घटातिरिक्त इति मन्यसे, तदापि न निस्तारः। तथा हि भेदस्य प्रतियोगिसापेक्षतया वस्तुनश्चातथात्वान्न भेदस्यानुयोगि-वस्तुस्वरूपता युज्यते। तथा हि यदि घटपटभेदयोरनतिरिक्तत्वमिष्येत, तर्हि घटप्रत्यक्षं पटभेदग्राहकसामग्र्यधीनमिति तत्सामग्र्यन्तर्गतस्य पटादेरपि तत्प्रत्यक्षे कारणत्वं वाच्यम्। एवं च सति घटे धर्मिणि प्रतीयमानानां घटेतरभेदानामनुयोगिस्वरूपतया तत्तत्प्रतियोगिज्ञानसापेक्षत्वं घटप्रत्यक्षस्यापतितं स्यात्। तथा च सति घटप्रत्यक्षा-सम्भवः।

---

१. तत्त्वप्रदीपिकायाम्—द्वि० प० का०–२।

उक्तं च—

सापेक्षत्वात् सावधेश्च तत्तेऽद्वैतप्रसङ्गतः।
एकाभावादसन्देहान् न रूपं वस्तुनो भिदा[1] ॥ इति।

### ४७. अभावस्य भावस्वरूपत्वखण्डनम्

वस्तुतस्तु स्वतो न्यूनपरिमाणेनाधिकपरिमाणेन च सहैकद्रव्ये समवायविरोधि यद् धर्मद्वयं दीर्घत्व-ह्रस्वत्वात्मकं वस्तुनः प्रादेशमात्रपरिमाणस्य तदविशिष्टतया प्रतीतावेव प्रतियोग्यपेक्षा वर्त्तते, न स्वरूपमात्रप्रतीतावपि तथाविधापेक्षाऽऽनुभविकी। अतो भेदस्य वस्तुस्वरूपत्वं न युक्तिसिद्धम्।

नन्वस्मादयं भिन्न इति प्रतीत्या प्रतियोगिघटिततयाऽऽनुभविको भेदो वस्तुस्वरूपं स्यातिति चेत्, तत्रोच्यते—भेदस्य वस्तुस्वरूपेऽन्तर्भावाद् भेदस्याभावत्वं नैव स्यात्। न हि घटादीनामभावरूपताऽऽनुभविकी, भावो घटो न अभाव इत्यबाधितप्रत्ययबलाद् भावत्वावच्छिन्नतयैव घटादेः प्रतीतेरभावस्य तदनतिरिक्तत्वे तस्यापि भावत्वप्रसंगाद् अभाव एव लुप्येत। अतोऽन्योन्याभावो न प्रमाणसिद्धः। तस्मात् पटतादात्म्यनिषेधो घटे केनापि प्रमाणेन नैव सिध्यतीति पूर्वपक्षः।

### ४८. नैयायिकैरन्योन्याभावस्थापने वेदान्तमतखण्डनम्

अत्रेदमुच्यते नैयायिकैः—तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वमित्येवं लक्षणं ग्राह्यम्। तादात्म्यं च तद्गतोऽसाधारणो धर्मः। अतस्तादात्म्यत्वेन तादात्म्यावच्छिन्नं यत् तादात्म्यं तत्सम्बन्धावच्छिन्नं प्रतियोगिताकत्वमभावस्य विवक्षणीयम्। अत्र तादात्म्यमभावलक्षणे संसर्गविधया प्रविष्टम्। तथा च तादात्म्यत्वावच्छिन्नतादात्म्यनिष्ठा या संसर्गविधयाऽवच्छेदकता, तन्निरूपकप्रतियोगिताकत्वलाभेन न कोऽपि दोषः।

भूतले 'घटो नास्ति' इत्याद्यत्यन्ताभावीयप्रतियोगिता तु संयोगसम्बन्धावच्छिन्ना। अतोऽत्यन्ताभावप्रतियोगितावच्छेदकसंयोगादिसम्बन्धानां संयोगत्वादिनैवावच्छिन्नत्वाद् भूतले घटो नास्तीत्यादौ नान्योन्याभावलक्षणातिव्याप्तिः। तस्मात् प्रमितस्य पटत्वस्यैव घटे प्रतिषिध्यमाणत्वाद् अवच्छेदकसम्बन्धभिन्नतया 'घटे पटत्वं नास्ति' इत्यत्यन्ताभाववैलक्षण्यमन्योन्याभावस्य प्रसिद्धमेव।

### ४९. अन्योन्याभावात्यन्ताभावयोर्वैलक्षण्यम्

यदि पुनरत्यन्ताभावान्योन्याभावयोर्वैलक्षण्यं स्वरूपतो न भवेत्, तर्हि 'घटः पटो न' इत्यत्र यथा घटे पटत्वाभावः प्रतीयते, तथैव घटे घटत्वाभावोऽपि प्रतीयताम्,

---

१. तत्त्वप्रदीपिकायाम्—द्वि० परि०–कारिका–२।

यतः 'घटो न घटत्वम्' इति घटे घटत्वभेदः प्रसिद्ध एव। अयमेव घटत्वान्योन्याभावो यदि घटत्वात्यन्ताभावान्न विलक्षणः, तर्हि घटे घटत्वभेदस्य प्रतीयमानत्वेन घटे घटत्वात्यन्ताभावोऽपि प्रतीयताम्, तुल्ययोगक्षेमत्वात्। अतोऽनुभवबलादेवान्योन्याभावात्यन्ताभावयोर्वैलक्षण्यं स्वीकर्त्तव्यमेव। तच्च तादात्म्यसम्बन्धावच्छिन्नत्वद्वारेणैव सम्भवेत्, न त्वन्यथा। अतोऽनेनैव लक्षणेन निर्वाहे कृतं लक्षणान्तरचिन्तया।

एवं लक्षणेनान्योन्याभावे सिद्धे सति 'घटः पटो न' इत्यादौ वस्तुसंस्थानरूपभेदविशिष्टविषयत्वं प्रत्यक्षबलेनैव गृह्यत इति प्रत्यक्षसिद्धस्य भेदस्यापलापो न सम्भवति। यदि भेदो नैव सिध्यति, तर्हि सर्वेष्वनुभवेषु यत्किञ्चिदेकविषयत्वस्यैव सम्भवादत्र 'घटोऽस्ति', 'पटो नास्ति' इत्यादिविशिष्टविषया प्रतिपत्तिरवलुप्येत।

**५०. अनुभववैलण्यादन्योन्याभावसिद्धिः**

अपि च, यदि प्रत्यक्षेण भेदो नैव गृह्येत, तर्हि अश्वार्थी समीपगतात् महिषात् कथं निवर्तते? कथं वा तृष्णार्त्तो जलमेव गृह्णाति, वह्निं न गृह्णाति। अतः सिद्धं प्रत्यक्षेणैव संस्थानरूपवैलक्षण्यं दृष्ट्वा स्वाभिमतं गृह्णाति, प्रतिकूलाच्च निवर्तते। अपि च भेदस्य सर्वथाऽसत्त्वे सर्वास्वनुभूतिष्वेकं सन्मात्रमेव विषयतया स्वीकर्त्तव्यं स्यात्। तथा च सति यत्किञ्चिदनुभवानन्तरं सर्वेषां विषयाणां स्मरणं कथं न स्यात्? एवं भेदानङ्गीकारे अश्वे हस्तिनि चानुभवस्यैकरूपत्वाद् अश्वानन्तरं यथावस्थितस्य करिणः प्रत्यक्षमपि गृहीतग्राहितत्वात् प्रमाणं भवितुं नार्हति। अतः सर्वेषां व्यवहाराणां परिनिष्पत्तये प्रतिसंवेदनं तत्तद्विषयविशेषप्रकाशः स्वीकर्त्तव्य एव। तच्च भेदं विना न सिध्यति। तस्माद् वस्तुसंस्थानरूपविशिष्टविषयकत्वाद् अनुभवानां भेदः स्वीकर्त्तव्य एव।

अपि च, गौर्गवेतरभिन्ना सास्नादिमत्वादिति यथायथव्याप्तिपक्षधर्मतादिबलोपवृंहितस्यानुमानस्य कथङ्कारमनङ्गीकरणं स्यात्? अतो भेदः स्वीकर्त्तव्य एव, यतो भेदग्रहणेनैवाभेदबुद्धिर्निवर्त्तत इति सर्वैरेव स्वीकर्त्तव्यम्।

यच्च पुनरुक्तम्—भेदस्य धर्मिस्वरूपादिविकल्पः, तत्रेदमुच्यते—तत्तु भेदव्यवहारद्वारेणैव दुरुत्सारितम्, यतो हानोपादानरूपस्य व्यवहारस्य प्रत्यक्षानुमानादिसिद्धतया तत्र धर्मस्वरूपो भेदः[1] प्रत्यक्षबलेनैव गृहीत इति न तत्र धर्मभूतेन भेदेन धर्मिभूतस्य वस्तुनो भेदादिविचारावकाशः, यतो भेदो यदि धर्मिस्वरूप एव स्यात्, तदा धर्मिज्ञानस्य प्रतियोगिनिरपेक्षतया धर्मिग्राहकसामग्रीग्राह्यत्वं भेदस्यापीति तत्र प्रतियोगिज्ञानस्य नापेक्षा वर्त्तते।

---

१. अभावस्यानुपलब्धिप्रमाणगम्यत्वमङ्गीकुर्वतां वैदान्तिकानां मते भेदो न प्रत्यक्षसिद्धः; किन्त्वनुपलब्धिप्रमाणमनङ्गीकुर्वतां नैयायिकानां मते चक्षुःसंयुक्तविशेष्यतानिरूपितसन्निकर्षेण घटानुयोगिकपटभेदस्य प्रत्यक्षग्राह्यत्वं सम्भवेदित्यभिप्रायः।

वस्तुतस्त्वयं गौः अश्वाद् भिन्न इत्यादिशब्दव्यवहारस्थल एव प्रतियोगिज्ञानमावश्यकम्। अतस्तथाविधशाब्दव्यवहार एव प्रतियोगिज्ञानसापेक्षः, वस्तुनिष्ठस्य भेदस्य प्रतीतिस्तु प्रतियोगिनिरपेक्षैव। अतः शाब्दव्यवहारविषये प्रतियोगिसापेक्षत्वस्य 'दाराः', 'कलत्रम्', 'आपः' इत्यादिषु स्त्रीत्वनपुंसकत्वबहुत्वादिवच्छब्दस्वभावायत्तत्वाद् न तत्र भेदरूपस्यार्थस्य दूषणं सम्भवेत्। केवलं व्यावृत्त्यादिशब्दप्रयोगेष्वेव प्रतियोगिसापेक्षत्वदर्शनात्। घटनिष्ठपटभेदस्य प्रत्यक्षं तु घटादिवस्तुस्वरूपायत्तत्वाद् न तत्र प्रत्यक्षं प्रति प्रतियोगिज्ञानापेक्षा। अतः सर्वत्रैव हानोपादानादिहेतुत्वात् तत्राशङ्किताया अनवस्थाया अपि नावकाशः।

इदमत्र तात्पर्यम्—प्रत्यक्षं तावद् इदमस्माद् भिन्नमिति नीलपीतादेर्भेदं साधयति। अतः सर्वत्रैव प्रथमं सर्वतो विलक्षणतया वस्तुस्वरूपे ज्ञायमाने प्रतियोग्यपेक्षया विशिष्टव्यवहारोपपत्तिः। तथा हि यथा घटप्रतीतिरन्यस्माद् घट इति न प्रतियोगिसापेक्षा, तथाऽन्यस्माद् भेद इत्येवं सापेक्षापि भेदप्रतीतिर्न भवेत्। लोके हि नियमेन सापेक्षैव भेदप्रतीतिर्दृश्यते।

**५१. भेदप्रकारकबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वेन विशेषणतावच्छेदकविशेषणज्ञानहेतुकत्वमिति भेदप्रकारकबुद्धौ प्रतियोगिज्ञानसापेक्षत्वाशङ्का, तत्र नैयायिकानामुत्तरम्**

ननु 'पटभिन्नो घटः' इत्यत्र घटविशेष्यकपटभेदप्रकारकप्रतीतिस्तु विशिष्टविषयिणी। एतादृशविशिष्टज्ञानस्य सप्रतियोगिकत्वात् तद्ज्ञानस्य प्रतियोगिस्वरूपं ज्ञानमपेक्षितमिति विशिष्टप्रतिपत्तेः प्रतियोगिज्ञानसापेक्षत्वं स्वीकर्त्तव्यमेव। अतो घटस्वरूपस्य घटेतरव्यावृत्तविषयतया घटेतरज्ञानमशक्यसाधनमिति चेत्, तत्रोच्यते—प्रतियोगिज्ञानापेक्षा नाम किं विशिष्टज्ञाने प्रतियोग्यवभासनियम आहोस्वित् तत्तद्ज्ञानस्य विशिष्टज्ञानहेतुत्वम्। तत्र प्रथममभ्युपगच्छामः। घटेतरत्वावच्छिन्नरूपेण घटेतरज्ञानं सुलभमेव। यत्र तु तत्तद्विशिष्टधर्मावच्छिन्नप्रतियोगिकभेदो ग्राह्यो भवेत्, तत्रैव तथाविधधर्मावच्छिन्नप्रतियोगिज्ञानमपेक्ष्यते। अत एव पटत्वावच्छिन्नपटमजानता 'पटभिन्नो घट' इत्येवं नैव ज्ञायते।

यदि पुनस्तत्तद्ज्ञानस्य विशिष्टज्ञानहेतुत्वमुच्येत, तत्रेदं पृच्छ्यते— तत्तत्प्रतियोगिनः पदार्था मिथो व्यावृत्ततया प्रथमं गृहीता न वा ? नो चेद् अव्यावृत्ततया गृहीतानां पूर्वोत्तरवर्त्तिनीनां दीपशिखानामिव विशेषणविशेष्यभावप्रतियोगिताप्रतीतिर्नोपपद्येत।

अथ यदि व्यावृत्ततया गृहीतास्तदैवं विचारणीयम्—किं विशेष्यविशेषणभावेन व्यावृत्तिरथवा स्वरूपतः गृहीतानां व्यावृत्तिः ? तत्र प्रथमे कल्पे विशेष्यविशेषणभावज्ञानस्यावश्यकतया तत्रैव भेदज्ञानं प्रसिद्धं वर्त्तते। द्वयोर्वस्तुनोर्भेदज्ञानं विना

विशेष्यविशेषणभावासम्भवात्, यतो भिन्नप्रवृत्तिनिमित्तानां शब्दानां तुल्याधिकरणतयाऽर्थज्ञानमेव विशेष्यविशेषणभावे तन्त्रम्। नीलोत्पलशब्दयोर्भिन्नप्रवृत्तिनिमित्तत्वमजानता पुरुषेण नीलोत्पलमिति व्यवहारसम्भवात्, यतस्तत्रोत्पलशब्दार्थस्य नीलशब्दप्रवृत्तिविषयत्वेन प्रयुञ्जानस्य रक्ताद्युत्पलेभ्यो विवक्षितस्योत्पलस्य भेद एव विवक्षणीयः। अत उत्पलमेकं वस्तु, नीलशब्देन चोत्पलातिरिक्तं गुणादिकं बुध्यते।

## ५२. विशेष्यविशेषणभावज्ञानं भेदज्ञानसापेक्षम्

अत्र च पुनर्नीलशब्दप्रवृत्तिनिमित्तीभूते नीलगुण उत्पलेन सहाभिन्नतया प्रतीयते। अतोऽन्येभ्य उत्पलेभ्यो वैलक्षण्यमस्योत्पलस्य वर्तत इत्येवं बोधयितुकामो नीलोत्पलमिति समभिव्याहरति, अतो विशेष्यविशेषणभावज्ञानं भेदज्ञानं विना नैव सम्भवेत्।

ननु वस्तुसामर्थ्यात् तत्र विशेष्यविशेषणभावः प्रतीयते, न तत्र भेदज्ञानमपेक्षणीयमिति चेत्, तत्रेदमुच्यते—वस्तुस्वभावस्य विशेष्यविशेषणभावनियामकत्वे तेनैव विशिष्टाप्रतीतिसम्भवाद् विशिष्टबुद्ध्यैव वस्तुस्वभावस्य हेतुत्वं भवतापि दृष्टम्। वस्तूनां स्वभावश्च पुनर्न केवलं सन्मात्रम्, अपि त्वितरव्यावृत्तधर्मावलीढरूपम्।

## ५३. वस्तुस्वरूपज्ञानमितरव्यावृत्तरूपम्

यदि सन्मात्रमेव वस्तुस्वभावः स्यात्, तर्हि असद्व्यावृत्तानां सर्वेषां सत्त्वेनैक्याद् व्यवहारसिद्धवस्तुस्वभावो विलुप्यते। न हि वह्निजलयोरश्वमहिषयोर्वा सत्त्वेनैवैकत्वं सम्भवेत्। तत्तद्भिन्नार्थक्रियाकारित्वस्य सर्वप्रत्यक्षसिद्धस्यापलपितुमशक्यत्वात्। अतो वस्तुस्वभावस्य व्यावृत्तस्वरूपत्वमकामेनापि भवद्भिरिष्टम्, अन्यथा सुखदुःखयोर्बन्धमोक्षयोश्च सत्त्वेनैकरूपतया दुःखप्रहाणार्थं निःश्रेयसाधिगमनार्थं वा भवतामपि प्रयत्नो विफल एव स्यात्। अतो वस्तुस्वभावो व्यावृत्तगर्भित इति भेदज्ञानं सर्वत्रावश्यकम्। तच्च भेदज्ञानं यथा सम्भवेत्, तत्तु प्रागेवोक्तम्। नित्यसंसर्गाभावत्वमत्यन्ताभावमिति प्रागेव लक्षणं निरूपितम्। तत्रात्यन्ताभावस्य नित्यत्वे युक्तिरप्युपलभ्यते।

तथा हि ध्वंसप्रागभावाप्रतियोगित्वं नित्यत्वम्। ध्वंसाभावस्याप्रतियोगित्वे सति प्रागभावस्याप्रतियोगित्वं नित्यत्वमिति तात्पर्यम्। तत्र सावयवानां द्रव्याणामेव द्रव्येषूत्पत्तिर्विनाशश्च वर्त्तेते। अतोऽभावस्य द्रव्यत्वाभावाद् निरवयवत्वाच्च न द्रव्योत्पत्तिविधयोत्पत्तिः सम्भवतीति प्रागभावत्वमत्यन्ताभावस्य नैव सम्भवति। अभावस्य गुणकर्मभिन्नत्वं च प्रतीतिसिद्धम्, युक्तिसिद्धं च। अत एव गुणकर्मवदपि नाभावस्योत्पत्तिः सम्भवेत्। अतः सावयवद्रव्यत्वाभावाद् गुणत्वाभावात् कर्मत्वाभावाच्चात्यन्ताभावस्य नोत्पत्तिः कल्पयितुं शक्यते। सावयवानां द्रव्याणां गुणानां कर्मणाञ्च विनाशसम्भवाद् ध्वंसाभावो जायते। अतः प्रतियोगिनाश एव ध्वंसप्रतिपत्तिकरः।

**५४. अत्यन्ताभावस्य नित्यत्वादिव्यवस्थापनम्**

अत्यन्ताभावस्तु न कस्यचिद् विनाशेनोत्पद्यते, यतः 'इह घटो नास्ति' इति किञ्चिदधिकरणकघटाभावप्रतीतिरेव घटात्यन्ताभावमवगाहते। तत्तु घटस्य विद्यमानदशायामपि घटानधिकरणप्रदेशे सम्भवत्येव, न तु घटस्य विद्यमानदशायां घटप्रागभावो घटध्वंसाभावो वा सम्भवेत्। अतः प्रागभावध्वंसाभावाभ्यां भिन्न एवात्यन्ताभावस्त्रैकालिकः प्रतीयमानः सिध्यतीति ध्वंसप्रागभावयोरप्रतियोगित्वान्नित्य एवात्यन्ताभावः।

**५५. उत्पादविनाशशालिनश्चतुर्थसंसर्गाभावस्य विचारपूर्वकखण्डनम्**

ननु यस्मिन् भूतलादावधिकरणे घटानुपलम्भदशायां घटो नास्तीति प्रतीयते, प्रतीयमानस्य तदभावस्यात्यन्ताभावत्वं स्वीकृतम्। किन्तु तस्मिन्नेवाधिकरणे यदि घट अनीतो भवेत्, तदा तत्र 'घटो नास्ति' इति प्रतीतिर्न भवति, अपि तु घटवति भूतले घटाभावो नास्तीत्येवं प्रतीतिर्जायते। पुनश्च तस्मात् प्रदेशादपसारिते घटे तत्र घटो नास्तीति प्रतीतिरबाधिता जायते। तथा च सति तत्रेदमुपलभ्यते यद् घटानधिकरणप्रदेशे घटानयनात् पूर्वम् 'इह घटो नास्ति' इति प्रतीतिसिद्धो घटात्यन्ताभाव एव वर्त्तते। पुनश्च आनीते घटे तत्र घटाभावो नास्तीति प्रतीतिबलाद् घटाभावस्याभाव एव प्रतीयते। पुनश्च तस्मादेवापसारिते घटे 'घटो नास्ति' इति घटात्यन्ताभावः प्रतीयते। तेन च पूर्वमवस्थितस्य घटात्यन्ताभावस्य घटानयनेन विनाशः, तथा घटापसरणे च पुनर्घटो नास्तीति प्रतीत्या तत्रैव घटात्यन्ताभावस्योत्पत्तिरप्यनुभवसिद्धा।

एवं च सति घटात्यन्ताभावस्योत्पत्तिविनाशयोरानुभविकत्वाद् घटात्यन्ताभावो नित्य इति वक्तुं नैव शक्येतेति चेत्, तत्रोच्यते—यस्मिन् काले यस्मिंश्च प्रदेशे घटो वर्त्तते, तस्मिन्नेव काले प्रदेशान्तरे घटात्यन्ताभावः प्रतीयत इति सर्वैरनुभूयते। यदि घटसत्त्वे घटाभावव्यक्तेर्विनाश एवाङ्गीक्रियते, तर्हि प्रदेशान्तरे तदानीमेव घटाभावः कथं प्रतीयते? न ह्याकाशकुसुमवदसतः कस्यचिद् वस्तुनः कुत्रचिद् कदाचित् प्रतीतिः सम्भवेत्। अतस्तद्घटसत्त्वेऽपि प्रदेशान्तरे तदानीमेव तद्घटाभावप्रतीतेरानुभविकत्वात् तदानीं तद्घटाभावो नासन्।

एवं विनष्टस्यापि कुत्रचिदप्रतीतेर्घटाभावस्य तदानीमपि प्रतीयमानत्वाद् घटाभावो न विनष्टः। एवं च सति सतोऽविनष्टस्य च घटाभावस्य विद्यमानत्वं स्वीकर्त्तव्यमेव। एवमधिकरणभेदेनाभावस्य भेदानभ्युपगमादन्यत्र विद्यमानस्य घटाभावस्य नित्यत्वेन घटाधिकरणावस्थानमपि स्वीकर्त्तव्यमेव[१]।

---

१. 'कर्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावात्'

(व्याप्तिपञ्चकतृतीयलक्षणदीधितिः—पृ० ५६)।

अतो घटाभावस्य विनाशाभावात् सर्वदैवावस्थानाच्च तस्य नित्यत्वं व्याहन्तुं न शक्येत। नन्वेवमपि घटात्यन्ताभावस्य नित्यत्वे घटानयनात् पूर्वं कस्मिंश्चित् प्रदेशे विद्यमानस्य घटाभावस्य तत्रैव घटानयनानन्तरमप्यवस्थानध्रौव्यात् कथं न तदानीमपि इह घटो नास्तीति प्रतीतिः स्यादिति चेत्, पूर्वं दत्तोत्तरमपि पुनरिदं प्रतिपक्षखण्डनार्थं व्यपदिश्यते।

सर्वत्रैवैन्द्रियिकप्रत्यक्षं प्रति तत्प्रत्यक्षप्रतिबन्धकाभावविशिष्टसामग्रीत्वेन कारणत्वं स्वीकर्त्तव्यम्। अत एव दूरत्वादिप्रतिबन्धकदशायां चाक्षुषप्रत्यक्षकारणसत्त्वेऽपि महाकाशे उड्डीयमानानां विहगादीनां न प्रत्यक्षम्। अतो घटवति भूतले घटाभाव-प्रतीतिप्रतिबन्धकीभूतस्य प्रतियोगिनो घटस्योपलम्भान्न विद्यमानस्यापि घटाभावस्य चाक्षुषप्रत्यक्षम्। अत एव प्रतियोग्युपलम्भाभावोऽभावप्रत्यक्षे कारणमिति पूर्वमेव न्यायसिद्धान्तः प्रपञ्चितः।

किं बहुना—घटवति भूतले तदानीं घटात्यन्ताभावाप्रतीतावपि तस्मिन् घटे घटात्यन्ताभावोऽनुभूयते। अतस्तदानीं तस्मिन्नेव देशे भूतलादौ घटात्यन्ताभावा-प्रतीतावपि घटे घटात्यन्ताभावस्य प्रतीतिसिद्धत्वात् कथङ्कारं घटाभावस्यानित्यत्वमा-शङ्क्येत? यद्यधिकरणभेदेनाभावा भिन्नाः स्युः, तदैव भवत्पक्षः कथञ्चिद् ग्राह्यो भवेत्। तथा सति घटप्रतियोगिकात्यन्ताभावस्यानन्ताधिकरणभेदेनानन्त्याद् महागौरवम्।

नन्वेवमपि यत्र घटानधिकरणे घटादिकमानीतम्, पुनरपसारितं च तत्र नित्य-घटात्यन्ताभावकल्पनापेक्षयोत्पादविनाशशाली चतुर्थः कश्चित् संसर्गाभावः स्वीक्रिय-ताम्, प्रतियोग्युपलम्भाभावादिकल्पनापेक्षयाऽभावान्तरकल्पनमेव लाघवमिति चेत्, तत्रोच्यते—'इदानीं घटो नास्ति' इत्यादिप्रतीतेरानुभविकत्वेन कालविशेषविशिष्ट-स्वरूपस्य घटाभावप्रत्यक्षोपयोगिसंसर्गत्वोपगमाद् 'घटवति घटो नास्ति' इति प्रतीति-र्नैव भवितुमर्हति, तत्कालस्य घटाभावसंसर्गत्वाभावात्। अतश्चतुर्थस्याभावस्य कल्पनमेव गौरवम्।

### ५६. अत्यन्ताभावशब्दस्य कालत्रयावच्छिन्नप्रतियोगिताकाभावत्वमर्थो न वेति विचारः

अत्र पुनरिदं विचार्यते—अभावस्यात्यन्तेति विशेषणेनैवमर्थः प्रतीयते यद् यत्र कालत्रयेऽपि यद्वस्तु नास्ति, तत्रैव तद्वस्तूनामत्यन्ताभावः स्थातुं शक्नुयात्। एवं च सति समवायिकारणे कार्यभूतस्य वस्तुनोऽत्यन्ताभावो न सम्भवति, यतः कार्यस्य त्रिविधा दशा समवायिकारणेऽनुभूयते। कार्योत्पत्तेः पूर्वं कार्यस्य प्रागभाव एव तत्रानुभवसिद्धः। इह 'कपाले घटो भविष्यति' इति प्रत्ययात् तत्र प्रतीयमाने

घटप्रागभाव एव समुचितः। एवं घटध्वंसानन्तरमपीह 'कपाले घटो ध्वस्तः' इति प्रतीत्या ध्वंस एव तत्र युक्तिसिद्धः। ध्वंसप्रागभावयोरन्तराले घट एव कपाले समवायेन तिष्ठतीति तदानीं तत्र घटाभावप्रतीतेर्वार्तैव नास्ति। अतो यत्र कदाचिदपि घटो नोत्पद्यते ध्वंसप्रागभावयोरनधिकरणे तस्मिन् घटात्यन्ताभावः स्वीकर्त्तव्यः।

**५७. ध्वंसप्रागभावाभ्यामत्यन्ताभावस्य विरोध इति प्राचीनमतपरीक्षणम्**

अत एव 'श्यामपटे रक्तं नास्ति', 'रक्तघटे च श्यामो नास्ति' इति प्रतीत्योः रक्तभागभावश्यामध्वंसावेव विषयौ। तेन च ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राचीनसिद्धान्तोऽपि समर्थितो भवेत्। अतो वाय्वादौ रूपाद्यभाव एवात्यन्ताभावोदाहरणम्। न त्विह 'कपाले घटो नास्ति' इति घटात्यन्ताभावप्रदर्शनं संगच्छते।

नव्यास्तु तद्ध्वंसतत्प्रागभावयोरधिकरणे तदत्यन्ताभावसत्त्वे न कोऽपि विरोधः प्रमाणाभावादिति मन्यन्ते। अत्रायमाशयः—समवायिकारण एव कार्यस्योत्पत्तेः पूर्वं प्रागभावः, तथा विनाशान्तरं च ध्वंसाभावो वर्त्तत इति पूर्वपक्षिभिरपि स्वीकृतम्। समवायिकारणं विहाय नान्यत्र कार्यस्य प्रागभावो वा ध्वंसाभावो वा स्थातुं शक्नोति। एवं कार्योत्पत्तिदशायां समवायिकारणे कार्यमेव वर्त्तते इत्यत्राप्यविवादः। अतस्त्रैकालिकसंसर्गाभाव एवात्यन्ताभाव इति स्वीकरणात् कार्यवर्त्तमानदशायां समवायिकारणे कार्यस्य नात्यन्ताभाव इति सिद्धान्तात् समवायिकारणे कार्यस्य त्रैकालिकसंसर्गाभावो नास्तीत्येवं वक्तुं शक्यते। किन्त्वत्यन्ताभावस्य प्रतियोगिता सामान्यधर्मावच्छिन्नैव भवति।

तथा च 'घटो नास्ति' इत्यत्र घटत्वावच्छिन्नप्रतियोगिताकोऽभावो बुध्यते। अत उत्पत्तिपूर्वमिह 'कपाले घटो नास्ति' इति प्रतीतिर्घटत्वावच्छिन्नप्रतियोगिताकाभावमवगाहते। 'घटो भविष्यति' इत्यादौ तु न घटत्वसामान्यधर्मावच्छिन्नप्रतियोगिता अभावांशे भासते, किन्तु सम्भाव्यमानतद्घटत्वावच्छिन्नप्रतियोगिताकत्वेनैवाभावस्तत्र भासते। अन्येषां घटानां तत्र समवायिकारणे कपाले उत्पत्तेरसम्भवान्न तत्र घटत्वावच्छिन्नप्रतियोगिताकत्वं प्रागभावांशे भासते। एवं ध्वंसाभावेऽपि बोध्यम्।

अपि च यत्र कश्चिद् घटः पूर्वं रक्तः, ततः श्यामः, ततो रक्तः, ततः श्यामः, ततश्च रक्तः, तस्मिन् घटे मध्यश्यामदशायां रक्तं रूपं नास्तीत्याकारको यो रक्ताभावावगाही प्रत्ययः, स न रक्तिमध्वंसावगाही भवितुमर्हति, यतस्तत्र रक्तत्वसामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमेवाभावांशे भासते। ध्वंसप्रागभावयोस्तु न सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं युक्तिसिद्धम्। अतस्तथाविधमध्यश्यामदशायां रक्तं नास्तीति प्रतीतेरत्यन्ताभावावगाहित्वं स्वीकर्त्तव्यम्।

उक्तं च दिनकर्याम्—'पूर्वमग्रेऽपि रक्ते मध्ये श्यामे घटे रक्तं रूपं नास्ति इत्याद्याकारकप्रत्ययस्य सामान्याभावावगाहित्वात्' व्याख्यातं च रामरुद्रीकारेण—'सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावविषयकत्वादित्यर्थः, ध्वंसप्रागभावयोश्च सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानङ्गीकारात्[1]' इति। तस्माद् ध्वंसप्रागभावयोरधिकरणेऽप्यत्यन्ताभावसत्त्वे न कोऽपि विरोध इति स्वीकर्त्तव्यम्। अन्यथा पूर्वोदाहृतस्थले 'रक्तं रूपं नास्ति' इत्यस्य रक्तरूपत्वावच्छिन्नप्रतियोगिताकाभावस्य रक्तप्रागभावत्वेन ग्रहणासम्भवात् तत्र 'रक्तं रूपं नास्ति' इति प्रतीतेरनुपपत्तिः। कार्यस्य वर्त्तमानतादशायां तदत्यन्ताभावस्तत्र समवायिकारणे वर्त्तत एव, अत्यन्ताभावस्यनित्यत्वोपगमात्; किन्तु कार्यसमानकालीनत्वघटितविशेषणताविशेषाख्यसन्निकर्षस्यैव कार्यात्यन्ताभावप्रत्यक्षं प्रति हेतुत्वोपगमान्न कार्यदशायां तदत्यन्ताभावप्रतीतिः। त्रैकालिकसंसर्गाभाव इति तु नाऽत्यन्ताभावलक्षणम्।

येषां मते समवायिकारणे कार्यमुत्पत्तेः प्रागपि सत्, तथा विनाशानन्तरमपि तस्यैव कार्यस्यावस्थान्तरेणावस्थानम्, तेषां मते त्रैकालिकसंसर्गाभाव इत्यत्यन्ताभावलक्षणं विवक्षितम्। अत एव तेषां मते समवायिकारणे कदापि कार्यस्यासत्त्वाभावान्न तत्र कार्यात्यन्ताभावः। अत एव समवायिकारणं विहायान्यत्र कार्यस्य सत्ताऽनङ्गीकारात् तत्रैव कार्यात्यन्ताभावः संगच्छते।

**५८. सत्कार्यवादाङ्गीकार एव प्रागभावध्वंसाभावाभ्यामत्यन्ताभावविरोधः, न त्वसत्कार्यवादिनां नैयायिकानां मतेन**

असत्कार्यवादिनां नैयायिकानां मते तु नायं पन्था इष्टः, यतः समवायिकारणे उत्पत्तेः पूर्वं विनाशादूर्ध्वं च कार्यस्यासत्त्वमेव नैयायिकैरङ्गीकृतम्। अतस्तथाविधदशायां कार्यात्यन्ताभावस्वीकारे न कापि बाधा संगच्छते।

ननु पूर्वोदाहृतस्थले मध्यश्यामदशायां 'रक्तं रूपं नास्ति' इति प्रतीतेर्ध्वंसप्रागभावावगाहित्वं ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानङ्गीकाराद् यदुक्तम्, तन्न संगच्छते, यतो रक्तत्वावच्छिन्नप्रतियोगिताकत्वं ध्वंसप्रागभावयोः कालिकाव्याप्यवृत्तिः स्वीकर्त्तव्या। अतोऽन्तरा 'श्यामे रक्तं रूपं नास्ति' इति प्रत्ययो यदा भवति, तदा ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमेव स्वीकर्त्तव्यम्, न तु तत्र रक्तरूपात्यन्ताभावस्वीकारे किञ्चित् प्रयोजनम्। यदा तु 'श्यामघटे रक्तं नास्ति', 'रक्तघटे वा श्यामं नास्ति' तदा सामान्यधर्माव-

---

१. दिनकरी—रामरुद्रीसहिते भाषापरिच्छेदे—अभावकारिकायाम्।

च्छिन्नप्रतियोगिताकत्वानभ्युपगमः। अतो ध्वंसप्रागभावयोरपि समुदाहृतस्थले सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वसम्भवात् तत्रात्यन्ताभावस्वीकारो निरर्थकः।

एवं च सति ध्वंसप्रागभावयोरधिकरणे तदत्यन्ताभावस्वीकारो नावश्यक एवेति चेत् तत्रोच्यते—यदि ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं कालिकाव्याप्यवृत्तित्वेन स्वीक्रियते, तर्हि रक्तरूपोत्पत्तिध्वंसोत्पत्तिकालीनोत्पत्तिक-तत्समानाधिकरणवायुसंयोगादिध्वंसप्रागभावयोरपि विनिगमनाविरहेण रक्तरूपत्वा-वच्छिन्नप्रतियोगिताकत्वस्वीकारसम्भवात् तत्रापि रक्तत्वावच्छिन्नप्रतियोगिताकत्व-कल्पनापत्त्या गौरवं स्यात्।

यदि पुनर्ध्वंसप्रागभावयोः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं नाङ्गीक्रियते, तदा समुदाहृतस्थलेऽत्यन्ताभावस्वीकारेणैवोपपत्तिसम्भवाल्लाघवं स्यात्। अतः सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं ध्वंसप्रागभावयोर्नेष्टम्। अतोऽन्तरा श्यामदशायां रक्तरूपध्वंसप्रागभावाधिकरणे घटे 'रक्तं रूपं नास्ति' इत्यादिप्रतीतेरत्यन्ताभावावगाहि-त्वमेव युक्तिसिद्धम्। अतो ध्वंसप्रागभावाभ्यामत्यन्ताभावस्य विरोधे न किञ्चिद् मानमस्ति।

अत्रेदमवधेयम्—यत्र यद्वस्तुनः सत्त्वं कदापि न वर्त्तते, तत्रैव तस्यात्यन्ता-भाव इत्येवं प्राचीनानामाशयः। अत एव समवायिकारणे कार्यस्योत्पत्तेः प्रागपि सत्त्वं यैः स्वीक्रियते, तन्मत एव प्रागभावाधिकरणेऽत्यन्ताभावो न तिष्ठतीति वक्तुं युक्तम्। अत एव नाशानन्तरमपि समवायिकारणे कार्यस्यात्यन्तासत्त्वं नास्ति इति सत्कार्य-वादिनां मतं यदि गृह्येत, तदैव प्रागभावध्वंसाधिकरणे नात्यन्ताभाव इति वक्तुं शक्यते।

असत्कार्यवादिनां नैयायिकानां नये तूत्पत्तेः 'प्राक्' विनाशानन्तरं च समवायि-कारणे कार्यस्यात्यन्तासत्वमेव सिद्धम्। अत एव प्रागभावकाले ध्वंसकाले च प्रागभाव-ध्वंसाभाववत् तत्तदधिकरणेऽत्यन्ताभावोऽपि स्थातुं शक्नुयात्। अतो न्यायमते प्राग-भावध्वंसाभावयोरधिकरणे तत्तदत्यन्ताभावोऽप्यविरुद्धतया तिष्ठत्येव। अविरोधश्च प्रागेव प्रदर्शितः।

## उपसंहारः

एतावता प्रबन्धेनाभावपदार्थमधिकृत्य यथामति किञ्चिदुपस्थापितं तत्रभवतां निखिलशास्त्रतत्त्वाभिज्ञानां मान्यवराणां विदुषां पुरस्तात्। दुर्ज्ञेयतमेऽस्मिन् विषये कुशाग्रधियां नानाशास्त्रजटिलतत्त्वार्थविचारक्षमाणां विदुषामेवाधिकारः, न तु पुन-र्मादृशानां शास्त्रानभिज्ञानां क्षुद्रबुद्धीनां तदालोचनकौतूहलमपि समुचितम्; किन्तु नाना-

तत्त्वाभिज्ञैर्निखिलनिगमागमशास्त्रमहोदधिसमुद्धृतरत्नराजिभिर्मान्यमान्यै राचार्यप्रवरैरे-तद्विषये यादृशं निबन्धादिकं विरचितम्, तेनैव यथा 'मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः' इति महाकविवाक्यार्थालोचनेन प्राप्तसाहसः क्षुद्रबुद्धिरपि किञ्चिद् जिगमिषुर्मं-हति कर्मणि प्रवृत्तोऽहम् । विशेषतोऽस्मद्गुरुवर्याणां नानाशास्त्रनिष्णातानां सदयमुप-देशेनोत्साहप्रदानेन च समाश्वस्तो निबन्धरचने साहसं प्राप्तवानहम् । तद् यात्वात्म-दोषादिप्रकाशनेन । इतः पूर्वं यत् किञ्चिदालोचितम्, तदेव वाजिनेभ्य आमिक्षामिव किञ्चिदुद्धृत्य संक्षेपत इह समुपस्थाप्य प्रबन्धस्योपसंहारः क्रियते ।

तत्रादौ प्रथमेऽध्यायेऽभावचिन्तने बीजं किञ्चिदालोचितम् । अभावाख्यस्य पदार्थस्य कैश्चित् शास्त्रकृद्भिः स्वातन्त्र्यं यद्यपि नाङ्गीकृतम्, तथापि नैयायिका-दिभिर्महता विचारेण सप्रयोजनमभावस्य स्वातन्त्र्यं समुपपादितम् । दुःखात्यन्तध्वंस-रूपस्यापवर्गस्य शास्त्रैकलक्ष्यस्याभावं विना नानुपपत्तिरिति न्यायादिशास्त्रेष्वभाव-पदार्थस्वीकारे महत् प्रयोजनं वर्त्तते । न केवलं शास्त्रकृत्येषु, लौकिकव्यवहारेष्वपोद-मिह नास्ति, इदमिदं न भवतीत्याद्यानुभविकव्यवहारप्रयोजकाभावपदार्थः केनाप्य-नङ्गीकर्त्तुं न शक्यते । तादृश्याः प्रतीतेरभावस्वातन्त्र्यं विनाप्यधिकरणादिस्वरूपेण समुपपत्तिमभिलषतां तेषां तेषां शास्त्रकृतां सिद्धान्तस्य नैयायिकमतमाश्रित्य निरसन-पद्धतिरपि यथामति किञ्चित् प्रपञ्चिता ।

एवमभावस्य सप्रयोजनत्वं प्रतिपाद्याभावशब्दार्थविचार उपस्थापितः । तत्र चाभावत्वं सर्वाभावशब्दप्रतिपाद्यशक्यतावच्छेदकं भवितुमर्हति न वेति विचारणायां श्रीमद्दीधितिकृतां तथा नैयायिककुलचूडामणीनां गादाधरभट्टाचार्याणां सिद्धान्त-माश्रित्य विचार उपस्थापितः ।

एवमभावशब्दस्य प्रतिपाद्यार्थनिर्धारणानन्तरं द्वितोयेऽध्यायेऽभावस्वातन्त्र्य-विचारो वादिप्रतिवादिपक्षसमालोचनेन नैयायिकमतमाश्रित्याभावस्य स्वातन्त्र्यविषये सिद्धान्तः प्रदर्शितः । अथ तृतीयेऽध्यायेऽभावलक्षणं यथामति किञ्चित् प्रतिपादितम् । तत्र चाभावस्य भावभिन्नत्वादिरूपेण लक्षणं विविधदोषग्रस्तमिति वैदान्तिकादिमतोद्-भावितं पूर्वपक्षं निराकृत्य नैयायिकमतेन तल्लक्षणोपसंहारः समुपस्थापितः ।

अथ चतुर्थेऽध्यायेऽभावविषये प्रमाणचिन्तनम् । तत्र चाभावस्येन्द्रियसन्निकर्षा-योग्यत्वेन प्रत्यक्षादिप्रमाणागोचरत्वमिच्छतां सुतरामेवानुपलब्धेः प्रमाणपदवीत्वं प्रति-पिपादयिषूणां मीमांसकादीनां मतं यथाशक्ति परीक्ष्याभावस्य प्रत्यक्षगोचरत्वं व्यवस्था-पितम् । तत्रैव चाभावज्ञानं व्यवहारप्रयोजकमपि नाभावस्य पृथक्पदार्थत्वमिति बौद्धानां विरुद्धानेकजटिलयुक्तीनां परिहारेण नैयायिकरीत्या बौद्धमतखण्डनं तथा जैनमतादीनां परीक्षणमपि कृतम् ।

अथ पञ्चमेऽध्याये लक्षणप्रमाणाभ्यां प्रतिपादितस्याभावस्यावान्तरविभागः प्रदर्शितः। तत्र च जयन्तभट्टानां मते ध्वंसप्रागभावाभ्यां विनाऽभावान्तरं नास्तीति सिद्धान्तो यथामति समालोचितः, नैयायिकमतं च किञ्चिद् विचारपूर्वकं समुपन्यस्तम्। तत्रैव प्रसंगतोऽभावान्तरविभागप्रदर्शनवेलायां तत्तदवान्तरविभागप्रतिपन्नानां तेषां तेषामभावानां लक्षणादिकमपि संक्षेपत आलोचितम्।

एतावानेव मम प्रयासेऽल्पीयानपि विद्वत्समीपे समुपस्थाप्यते। तत्र च शास्त्र-सिद्धान्तविषये समालोचनकाले मदीयबुद्धिमान्द्यात् क्वचित् किञ्चित् स्खलनादिकं सम्भवदपि यथाशक्ति मया तत् परीक्षितम्। तथापि यदि स्खलनं परिलक्ष्यते, तर्हि कृपया विज्ञापनेनानुग्राह्योऽयं जनः। यच्चैतस्मिन् निबन्धे किञ्चित् समुत्कृष्टं विद्वद्भिः परिलक्ष्यते, तत्तु महतां शास्त्रकृतां तथा मदीयगुरुवर्याणां चोपदेशगुरुत्वेनैव ग्राह्यम्। यच्च पुनः किञ्चिद् दोषदुष्टं परिलक्ष्यते, तत्तु मदीयबुद्धिजाड्यस्य फलमित्य-लमतिविस्तरेण।

**। इत्यभावविमर्शे पञ्चमोऽध्यायः।**

**॥ समाप्तश्चायमभावविमर्शाख्यो ग्रन्थः॥**



# ग्रन्थपञ्जी


| ग्रन्थनाम | ग्रन्थकारनाम | प्रकाशनपरिचयः |
|---|---|---|

१. न्यायदर्शनम् (भाष्यसमेतम्), गौतमः—फणिभूषणतर्कवागीशसम्पादितम् (२३२४ वंगाब्दे)।

२. सांख्यकारिका, ईश्वरकृष्णः—एस्० एस्० सूर्यनारायणशास्त्रिसम्पादितम् (१९३५ खिस्ताब्दे)।

३. न्यायबिन्दुः (धर्मोत्तरटीकासमेतः), धर्मकीर्त्तिः—चन्द्रशेखरशास्त्रिसम्पादितम् (१९२४ खिस्ताब्दे)।

४. न्यायकन्दली, श्रीधरभट्टः—क्षेत्रेशचट्टोपाध्यायसम्पादितम् (१९६३ खिस्ताब्दे)।

५. न्यायवार्त्तिकम्, उद्द्योतकरः—अनन्तलालठाकुरः (१९६७ खिस्ताब्दे)।

६. वैशेषिकदर्शनम्, कणादः—पण्डितदेवदत्तशर्मा (१९११ खिस्ताब्दे)।

७. शब्दखण्डे नञ्वादः (तत्त्वचिन्तामणिः), रघुनाथशिरोमणिः—कामाख्यानाथतर्कवागीशः, एशियाटिक-सोसाइटी (१९०२ खिस्ताब्दे)।

८. दीधितिसमेतं सिद्धान्तलक्षणम्, स्वामिदयानन्दः (१९७० खिस्ताब्दे)।

९. दिनकरी-रामरुद्री-सहिता भाषापरिच्छेदसिद्धान्तमुक्तावली, विश्वनाथः—चौखम्बा-संस्कृत-सीरिज, वाराणसी।

१०. प्रकरणपञ्चिका, शालिकनाथः सं०—सुब्रह्मण्यशास्त्री (१९६२ खिस्ताब्दे)।

११. शास्त्रदीपिका, पार्थसारथिमिश्रः—धर्मदत्तसुरी (निर्णयसागर १९१५ खिस्ताब्दे।

१२. प्रशस्तपादभाष्यसेतुटीका, पद्मनाभमिश्रः—चौखम्बा-संस्कृत-सीरिज (१९४३ खिस्ताब्दे)।

१३. श्लोकवार्त्तिकम्, कुमारिलभट्टः—रामस्वामिशास्त्री, त्रिवेन्द्रम (१९४३ खिस्ताब्दे)।

१४. ज्ञानश्रीमित्र-निबन्धावली, ज्ञानश्रीमित्रः—अनन्तलालठाकुरः (१९५९ खिस्ताब्दे)।

१५. तत्त्वप्रदीपिका, चित्सुखाचार्यः—उदासीनसंस्कृतविद्यालयः (१९५६ खिस्ताब्दे)।

१६. शङ्करमिश्रकृत-कण्ठाभरणटीका समेता न्यायलीलावती, वल्लभाचार्यः—काशी चौखम्बा संस्कृत सीरिज (१९२४ खिस्ताब्दे)।

१७. न्यायकुसुमाञ्जलिः, उदयनाचार्यः—सं० लक्ष्मणशास्त्री, चौखम्बा संस्कृत सीरिज (१९५४ खिस्ताब्दे)।

१८. न्यायमञ्जरी, जयन्तभट्टः—पण्डितराजसूर्यनारायणशुक्लः (१९७१ खिस्ताब्दे)।

१९. तत्त्वचिन्तामणिः (प्रत्यक्षखण्डम्), गङ्गेशोपाध्यायः–कामाख्यानाथतर्कवागीशः (१९०१ खिस्ताब्दे)।
२०. शाबरभाष्यम्, शबरस्वामी–आनन्दाश्रममुद्रणालयः (१९२९ खिस्ताब्दे)।
२१. वेदान्तपरिभाषा (अनन्तकृष्णशास्त्रिकृतटीकासहिता), धर्मराजाध्वरीन्द्रः–कलिकाताविश्वविद्यालयः (१९३२ खिस्ताब्दे)।
२२. तत्त्वसंग्रहः, शान्तरक्षितः–गायकवाडसंस्थानम् (१९३७ खिस्ताब्दे)।
२३. आत्मतत्त्वविवेकः, उदयनाचार्यः–चौखम्बा संस्कृत सीरिज (१९४० खिस्ताब्दे)।
२४. प्रमेयकमलमार्त्तण्डः, प्रभाचन्द्राचार्यः–निर्णयसागरप्रेस (१९४१ खिस्ताब्दे)।
२५. पातञ्जलदर्शनम्, पतञ्जलिः–रोहिणीकान्तसिद्धान्तवागीशः (१९२२ खिस्ताब्दे)।
२६. आन् इन्ट्रोडक्शन टु इण्डियन फिलासफी, डाट्-चटर्जी–कलिकाताविश्वविद्यालयः (१९४४ खिस्ताब्दे)।
२७. व्याप्तिपञ्चकम् (दीधिति-युक्तम्), गङ्गेशोपाध्यायः–रोजेन्द्रनाथघोषः (१३२२ वंगाब्दे)।
२८. सप्तपदार्थी, शिवादित्यः–डि० गुरुमूर्त्तिः–(१९३२ खिस्ताब्दे)।
२९. वङ्गे नव्यन्यायचर्चा (वङ्गभाषायाम्), डॉ० दिनेशचन्द्रभट्टाचार्यः–वङ्गीयसाहित्य-परिषद् (१३५८ वंगाब्दे)।
३०. वेदान्तदर्शनेर इतिहास (वङ्गभाषायाम्), प्रज्ञानन्दसरस्वती–वरिशाक्तशंकरमठ (१३३४ वंगाब्दे)।
३१. वेदान्तदर्शनम्–अद्वैतवादः प्रथमखण्डः (वङ्गभाषायाम्), डॉ० आशुतोषशास्त्री–कलिकाताविश्वविद्यालयः (१३६८ वंगाब्दे)।
३२. वेदान्तदर्शनम्–अद्वैतवादः द्वितीयखण्डः (वङ्गभाषायाम्), डॉ० आशुतोषशास्त्री–कलिकाताविश्वविद्यालयः (१३६८ वंगाब्दे)।
३३. वेदान्तदर्शनम्–अद्वैतवादः तृतीयखण्डः (वङ्गभाषायाम्), डॉ० आशुतोषशास्त्री–कलिकाताविश्वविद्यालयः (१३६८ वंगाब्दे)।
३४. न्यायप्रवेशः (वङ्गभाषायाम्), प्रमथतर्कभूषणः–राजेन्द्रनाथघोषः
३५. सिक्स ओयेज् आन नोर्थि (आंग्लभाषायाम्), डि० एम्० दत्तः–कलिकाताविश्व-विद्यालयः (१९६० खिस्ताब्दे)।
३६. न्यायपरिचयः (वङ्गभाषायाम्), फणिभूषणतर्कवागीशः–वङ्गीयसाहित्यपरिषद् (१३४० वंगाब्दे)।
३७. कन्सेप्ट आव् रिलेशन एण्ड नेगेशन इन इण्डियन फिलासफी (आंग्लभाषायाम्), डॉ० कालिदासभट्टाचार्यः–कलिकातासंस्कृतकालेज, कलिकाता (१९७९ खि०)।

३८. भारतीयदर्शनकोष, श्रीश्रीमोहनतर्कतीर्थः–कलिकातासंस्कृतकालेज (१९७९ खिस्ताब्दे)।
३९. पदार्थतत्त्वनिरूपणम्, मधुसूदनन्यायाचार्यः–कलिकातासंस्कृतकालेज (१९७६ खिस्ताब्दे)।
४०. अन्नम्भट्टकृततर्कसङ्ग्रहः (वङ्गभाषायां सम्पादितः), नारायणचन्द्र गोस्वामी–कलिकातासंस्कृतपुस्तकभाण्डार।
४१. हिस्ट्री आव् इण्डियन लाजिक (आंग्लभाषायाम्), एस्० सी० विद्याभूषणः–विश्वभारतीग्रन्थालयः (१३५३ वंगाब्दे)।
४२. न्यायदर्शनम् (वङ्गभाषायाम्), सुखमयभट्टाचार्यः–विश्वभारतीग्रन्थालयः (१३५३ वंगाब्दे)।
४३. स्टडीज़ इन न्यायवैशेषिक (आंग्लभाषायाम्), डॉ० गोपिकामोहनभट्टाचार्यः–कलिकातासंस्कृतकालेज (१९६२ खिस्ताब्दे)।
४४. हिस्ट्री आव् इण्डियन फिलासफी (आंग्लभाषायाम्), डॉ० सुरेन्द्रनाथदासगुप्तः–केम्ब्रिजविश्वविद्यालयः (१९३२ खिस्ताब्दे)।
४५. नव्यन्याय–डाक्ट्रिन आव् नेगेशन (आंग्लभाषायाम्), डॉ० वि० के० मतिलाल–हारवार्डविश्वविद्यालयः (१९६८ खिस्ताब्दे)।
४६. नेगेशन, डॉ० जानकीवल्लभभट्टाचार्यः–इण्डियन स्टडीज पास्ट एण्ड प्रेजेन्ट (१९६५ खिस्ताब्दे)।
४७. नव्यन्याय–सिस्टेम आव् लाजिक, डि० सि० गुहा–भारतीयविद्याप्रकाशन, वाराणसी।
४८. नव्यन्यायभाषाप्रदीपः, महामहोपाध्याय कालीपदतर्काचार्यः–कलिकाता-संस्कृत-कालेज (१९७३ खिस्ताब्दे)।
४९. न्यायतात्पर्यटीका, वाचस्पतिमिश्रः–गङ्गाधरशास्त्री तैलङ्गः, वाराणसी (१८६८ खिस्ताब्दे)।
५०. आन् इन्ट्रोडक्शन टु पूर्वमीमांसा, डॉ० पशुपतिनाथशास्त्री–संस्कृतपुस्तकभाण्डार (१९८० खिस्ताब्दे)।



